# कात्यायनश्रौतसूत्रम्

## कर्कभाष्यसहितम्

### द्वितीयो भागः



श्रीलालबहादुरशास्त्रीराष्ट्रियसंस्कृतविद्यापीठम्

संस्कृत-विद्यापीठ-ग्रन्थमालायाः द्विचत्वारिंशत्तमं पुष्पम्

पुस्तकमिदं श्रीलालबहादुरशास्त्रीराष्ट्रियसंस्कृतविद्यापीठस्य
पुनर्मुद्रणयोजनायां प्रकाशितम्

# कात्यायनश्रौतसूत्रम्

## कर्कभाष्यसहितम्

## द्वितीयो भागः
( षष्ठाध्यायतस्समाप्तिपर्यन्तः )

प्रधानसम्पादकः
**डॉ० मण्डनमिश्रः**

सम्पादकः
**आचार्यः पं० पट्टाभिरामशास्त्री**




**श्रीलालबहादुरशास्त्रीराष्ट्रियसंस्कृतविद्यापीठम्**
**मानितविश्वविद्यालयः**
**नवदेहली**

प्रकाशकः
श्रीलालबहादुरशास्त्रीराष्ट्रियसंस्कृतविद्यापीठम्
मानितविश्वविद्यालयः
कुतुबसांस्थानिकक्षेत्रम्,
नवदेहली-११००१६



ISBN : 81-87987-25-1

प्रथमसंस्करणम् : १९८२
पुनर्मुद्रितसंस्करणम् : २००९

मूल्यम् : ४५०-०० रुप्यकाणि ( भागद्वयम्)

मुद्रकः
अमरप्रिंटिंगप्रेसः
विजयनगरम्, देहली - ११०००९

श्रीः

## कात्यायनश्रौतसूत्रद्वितीयभागीयाध्यायविषयाः





श्रीः

# प्रधानसम्पादकीयम्

श्रीलालबहादुरशास्त्रिकेन्द्रियविद्यापीठीयप्रकाशनविभागद्वारा प्रकाशितः कात्यायनश्रौतसूत्रस्य कर्कभाष्यसहितस्य द्वितीयो भागो विद्वद्वराणां करकमलान्यलङ्करोतीति नितरां प्रसन्नोऽस्मि। वर्षद्वयात्पूर्वमेव कार्यमिदं समापनीयमासीत् किन्तु मुद्रणालयदुर्व्यवस्थया महान् विलम्बस्समजनीति नितरां खिद्ये। गतदिसम्बरमासे श्रीप्राणलालाचार्यः मुद्रणाय स्वीकृत्य चतुर्भिर्मासैः सुमहत्कार्यमिदं निरवर्तयदिति आचार्याय धन्यवादान् वितरामि। परिणते वयसि वर्तमानाः, पदे पदे केनचिदामयेन पीडिता अपि पूज्यपादा गुरुवर्या मत्प्रार्थनां स्वीकृत्य प्रथमं द्वितीयञ्च भागं समपादयन्निति तेभ्यः प्रणामान् समर्पयामि। कार्यविशेषेषु व्यापृता अपि पूज्यपादा स्वामूल्यसमयव्ययेन ग्रन्थसम्पादनकार्ये पूर्णां दृष्टिं ददतीति सत्यमेवाहं धन्यः। विद्यापीठप्रकाशनविभागे कार्यकर्तृन् सर्वानेव विदुषः संवर्द्धयामि—यदेतादृशेषु शोभनेषु कार्येषु दत्तचित्ताः विद्यापीठगौरवं समेधयन्त्विति।

दिल्ली विदुषामनुचरः
२५।३।८२ डाँ मण्डनमिश्रः

श्रीः

# उपोद्घातः

अथेदानीं कर्कभाष्यसहितस्य कात्यायनश्रौतसूत्रस्य द्वितीयः षष्ठाध्यायतो ग्रन्थसमाप्त्यन्तो भागः श्रीलालबहादुरशास्त्रिकेन्द्रियविद्यापीठतः प्रकाशपथमानीयते। षष्ठाध्याये निरूढपशुबन्धो विषयः। स च हविर्यज्ञेषु परिगणितः, सप्त (१)हविर्यज्ञनिरूपणपरे प्रथमभागेनैव यद्यपि योजनीय आसीत् तथापि सम्पूर्णानन्दसंस्कृतविश्वविद्यालयीयमुद्रणालयान्यवस्थया चातुर्मास्यान्तो भागः पृथक्करणीयस्सम्पन्न इति सखेदं निवेदयामि। अथ तत्तदध्यायप्रतिपाद्यविषयान् संग्रहेण प्रदर्शयामि।

## निरूढपशुबन्धः

'पश्विज्या संवत्सरे संवत्सरे प्रावृषि' इति सूत्रयन्नाचार्यः वर्षासु प्रतिसंवत्सरं कर्तव्यत्वेन पश्विज्यां विदधाति। पशुना इज्या पश्विज्येति निरूढपशुबन्ध उच्यते। प्राणिद्रव्यकत्वसादृश्यादयं सौमिकाग्नीषोमीयपश्वङ्गग्राहकः। अर्थादग्नीषोमीयपशुप्रकृतिकः। अग्नीषोमीयपशावेव विशसनादीन्यङ्गानि समाम्नातानि। अत्र च तानि नाम्नातानि। किञ्च 'तस्मात्पालाशमेव यूपं कुर्वीत' इत्यत्रत्यविधिना यूपोद्देशेन जात्यन्तरविधानं तदा सङ्गच्छेत, यदा यूपस्य कुतश्चित्प्राप्तिरुच्येत। तथा चाग्नीषोमीयपशोर्यूपपरिप्राप्तौ तत्र 'खादिरो यूपो भवति' इति विहितं खादिरत्वं बाधित्वात्र जात्यन्तरविधानं सङ्गतं भवतीति निरूढपशुबन्धोऽग्नीषोमीयः पशुप्रकृतिक इति सिद्धं भवति। वेदे यत्र यत्र पशुशब्दः तत्र सर्वत्र छाग एव ग्राह्य इति महर्षिर्जैमिनेरनुशासनम्। पशुद्रव्यकत्वेऽपि यागस्य, साक्षात्पशुर्न द्रव्यम् किन्तु अवदानसंस्कारसंस्कृतं वपादिकमेव, 'वपामुद्धरति' 'हृदयस्याग्रेऽवद्यति अथ जिह्वायाः' इत्यादिनाऽवदानस्य विहितत्वात्। अवदानं हि नाम हविष्ट्वप्रयोजकीभूतस्संस्कारः। अवदीयमानमेव द्रव्यं भवति। अतः पशोः हृदयादिहविष्प्रकृतितया यागाङ्गत्वं बोध्यम्।

निरूढपशुबन्धे द्रव्यं प्रदर्शितम्। देवता च—इन्द्राग्नी, सूर्यः, प्रजापतिरिति तिसृष्वेका वैकल्पिकी। अध्वर्युः होता ब्रह्मा आग्नीध्रः प्रतिप्रस्थाता मैत्रावरुणश्चेति षडृत्विजः। अत्र वपाहोमः प्रधानम्। तस्य पूर्वाङ्गान्युत्तराङ्गानि च सन्निपत्योपकारकाण्यारादुपकारकाणि च भवन्ति। पूर्वाङ्गेषु यूपच्छेदनं यूपाहुतिः स्थाण्वाहुतिश्चेत्याद्यङ्गानि भवन्ति। तत्र यूपशब्दोऽलौकिकार्थावबोधकः, न केवलं पशुबन्धनार्थं निखातव्यः काष्ठविशेषावबोधकः, किन्तु तक्षणाञ्जनाष्टाश्रीकरणादिदृष्टादृष्टसंस्कारगणवाचकः, तादृशसंस्कारविशिष्टः काष्ठविशेषावबोधको वा। यूपार्थभरण्यं गत्वा

---

१. हविर्यज्ञाः सप्त भवन्ति—अग्निहोत्रम्, दर्शपूर्णमासौ, आग्रयणम्, चातुर्मास्यानि, निरूढपशुबन्धः, सौत्रामणी, पिण्डपितृयज्ञादयो दर्विहोमा इति।

वृक्षश्छेत्तव्यः। स च वृक्षः पलाशो भवेन्निरूढपशुबन्धे। अरण्यगमनात्पूर्वं होमः कर्तव्यो भवति। स च होमो यूपाहुतिशब्देनोच्यते। यूपार्थेयमाहुतिः। 'यूपं व्रश्च्यन् वैष्णव्यर्चा जुहोति' इति विधिनेयमाहुतिः स्रुवेण चतुर्गृहीतमाज्यं गृहीत्वा 'उरु विष्णो' इति मन्त्रेण क्रियते। यूपस्यान्ते वाऽग्निं मथित्वा वेयमाहुतिः क्रियते। होमानन्तरं वृक्षस्याभिमर्शः अभिमन्त्रणं वा भवति। तादृशो वृक्षः पालोशश्छेत्तव्यः, यश्च बहुलपर्णः, अशुष्काग्रः, ऊर्ध्वसकलशाखः, मध्याग्रोपनतोऽव्रणश्च। वृक्षस्य यस्मिन् प्रदेशे छेदनं तस्य स्रुवेणोपस्पर्शनम्, तृणमन्तर्धाय परशुना छेदनम्, छेदनावसरे यः प्रथमश्शकलो निपतति तं पृथङ् निदध्यात्। स एव शकलः स्वरूरित्यभिधीयते। तस्य पश्वञ्जनादावुपयोगः 'स्वरुणा पशुमनक्ति' इति विधेः। छेदनावसरे यूपो यथा दक्षिणा न पतेत् तथा छेत्तव्यम्। यूपे छिन्ने स्थाणौ होमः कर्तव्यः। होमोऽयं स्थाण्वाहुतिशब्देनोच्यते। स्थाणुरयं सूत्रकारेणाव्रश्चनशब्देनाभिहितः। स्थाण्वाहुतिरियं यूपसंस्कारार्थैव, न स्थाणुसंस्कारार्था, उपयुक्तसंस्कारापेक्षया पयोक्ष्यमाणसंस्कारस्य प्राबल्यात्। वृक्षाग्रपरिवासनम् ( परिवासनं छेदनम् ) अनन्तरं तक्षा अष्टाश्रिं करोति। अष्टसंख्याका अश्रयो यथा भवेयुस्तथा करोतीत्यर्थः। अष्टाश्रिकरणमपि तथा कर्तव्यं यथा हि निखननावसरे गर्तार्हप्रदेशे न स्यात्। गर्तार्हप्रदेश एव सूत्रकारेण उपरशब्देनाभिहितः। ततो वेदिकरणम्। वेदिकरणात्पूर्वं षड्ढोतृमन्त्रेण होमो निरूढपशुबन्ध एव भवति, नाग्नीषोमीयपशौ।

## वेदिनिर्माणम्

वेद्याः पूर्वस्यां दिशि उत्तरवेदिं विमाय तन्मध्ये नाभिं करोति। तत्रैवाग्निः स्थाप्यते। ततस्सम्भारान् तन्मध्ये न्युप्य वेदिम् उत्तरवेदिं च प्रोक्ष्य आहवनीयादुत्तरवेद्यर्थमग्निं प्रणयेत्। तदित्थम्—आहवनीये भूयिष्ठं काष्ठं निक्षिप्य प्रज्वलय्य ज्वलन्तमग्निं वालुकापूर्णे कस्मिंश्चित्पात्रे गृहीत्वा अध्वर्युरुत्तरवेदिदेशं गत्वा ( अध्वर्युप्रेषितेन होत्रा प्रणयनार्थास्वृक्षु पठ्यमानासु ) तत्रोत्तरवेदिमध्यगताया नाभेरुपरि सम्भाराणामुपरि अग्निं निक्षिप्य पात्रगतसिकता अपि अग्नेरुत्तरभागे न्युप्य द्वादशगृहीतेन आज्येन जुह्वा पूर्णाहुतिं जुहुयात्। अतः परमुत्तरवेदिगतोऽग्निरेव आहवनीयपदवाच्यो भवति। अत आहवनीये कर्तव्यानि कर्माण्यस्मिन्नेवाग्नौ क्रियेरन्। यतोऽस्य प्रणयनं कृतं स गार्हपत्यो भवति। अर्थात्पूर्वाहनीयो गार्हपत्यशब्दवाच्य इतः परं भवति। अतो गार्हपत्ये विहितानि कर्माण्यत्रैव कर्तव्यानि॥

## पात्रासादनादि

ततः कुशसमिदाद्याहरणमरण्यादेः। इध्मकाष्ठानि त्रयोविंशतिसङ्ख्याकानि। काशाः प्रस्तरार्थाः। विधृत्यर्थे द्वे इक्षुशलाके। तत अग्न्योरुत्तरतः पाशुकपात्राणि अधोबिलानि आसादयितव्यानि। तानि च—

१. स्फ्यः। २. अग्निहोत्रहवणी। ३. वसाहोमहवनी। ४. जुहूद्वयम्। ५. उपभृद्द्वयम्। ६. पृषदाज्यधानी। ७. आज्यस्थालीद्वयम्। ८. हृदयशूलाख्यं कण्टकम्। ९. छुरिका। १०. कुम्भी। ११. प्लक्षशाखा। १२. वपाश्रपणीद्वयम्। १३. औदुम्बरो दण्डः। १४. रशनाद्वयम्। १५. स्रुवश्च।

पात्राणाममीषां दर्शपूर्णमासवत्प्रोक्षणादिकं कृत्वा प्रयाजानूयाजाद्यर्थं जुह्वादिषु पात्रेषु आज्यं पृषदाज्यं च ( दधिमिश्रितमाज्यं ) गृहीत्वा आज्यपूर्णानि पात्राणि वेद्यामासाद्य यूपनिखननार्थमवटं कुर्यात्। अवटखातस्तथा भवेत् यथा यूपस्याधोभागोऽरत्निपरिमाण आच्छाद्येत। तस्मिन्नवटे यूपं पूर्वनिर्मितं निखाय आज्येनाङ्क्त्वा चषालमप्याज्याक्तमेव परिधाप्य कुशनिर्मितया त्रिसरया रज्ज्वा आवेष्ट्य यागीयं काणत्वादिदोषरहितम् उत्पन्नदन्तं पुमांसं पशुं ( अजं ) स्नापयित्वा तं यूपसमीपमानीय यागीयदेवताया उद्दिष्टायै उपाकुर्यात्। उपाकरणं नाम देवतामुद्दिश्य पशोरुपस्पर्शनपूर्वकं निर्देशः 'अग्नये त्वा ( इन्द्राग्निभ्यां त्वा ) जुष्टमुपाकरोमि' इत्यादिः। तच्च हस्ते कुशद्वयं प्लक्षशाखां च निक्षिप्य कर्तव्यम्। अत्र यूपाञ्जनोच्छ्रयणपरिव्याणेषु क्रियमाणेषु पूर्वं हौत्रे प्रैषं दत्त्वा तेन तत्तत्संबन्धिनीष्वृक्षु अनूच्यमानास्वेव अध्वर्युस्तानि तानि कर्माणि कुर्यात्। कर्मस्वेषु क्रियमाणेषु यजमानो यूपं स्पृशन्नेव तत्समीपे तिष्ठेत्। ततोऽध्वर्योः प्रैषं श्रुत्वा होतरि अग्निमन्थनीया ऋचोऽनुब्रुवति सति अध्वर्युररणीतः अग्निं मथित्वा तमग्निमाहवनीये प्रक्षिप्य रशनया पशुं यूपे बध्नीयात्। अत्र अग्निमन्थनं मथितस्याग्नेराहवनीये प्रक्षेपश्च केवलादृष्टार्थः। होमाद्यर्थाग्नेः पूर्वमेव सत्त्वात् प्रयोजनान्तरादर्शनाच्च। ततस्तं पशुमद्भिः प्रोक्षणीभिः प्रोक्ष्य आज्यलिप्तेन स्रुवेण समज्य तत्रैव पशौ बद्धे तिष्ठति प्रयाजान् यजेत् इष्टिषु प्रयाजानूयाजानां पुरोऽनुवाक्याः प्रैषा वा न सन्ति। केवलं याज्या एव। ताश्च होत्रैव पठनीयाः। पशुषु तु प्रैषास्सन्ति ते सर्वाश्च पुरोऽनुवाक्या मैत्रावरुणाख्येनर्त्विजा पठनीयाः। स तिष्ठन् औदुम्बरं दण्डं ललाटसम्मितं यजमानदत्तं धारयन्नेव प्रैषादीन् पठेत्। पशुयागे चैकादश प्रयाजाः। तत्रास्मिन् समये दश प्रयाजाः, वपोद्धरणानन्तरमेकश्चेति प्रयाजा अनुष्ठेयाः। तेषु देवताः—

१. समिधः। २. तनूनपात् नराशंसो वा। ३. इडः। ४. बर्हिः। ५. द्वारो देव्यः। ६. दैव्यौ उषासानक्ता। ७. दैव्यौ होतारौ। ८. तिस्रो देव्यः। ९. त्वष्टा। १०. वनस्पतिः। ११. स्वाहाकृतयश्च क्रमेण। द्रव्यमाज्यम्॥

## पशुसंज्ञपनवपाहोमादि

ततः पर्यग्निकृत्वा आग्नीध्रः होत्रा अध्रिगुप्रैषाख्येषु मन्त्रेषूच्यमानेषु आहवनीयादुल्मुकमादाय पूर्व गच्छेत्। तस्य पश्चाच्छमिता पशुं नयेत्। एवमुभयोरपि शामित्रदेशं गतयोः आग्नीध्रस्तत्रोल्मुकं निधाय प्रत्यावर्तेत। शमिता त्वावृते देशे पशुं प्रत्यक्

---

१. आहवनीयाज्ज्वलन्तमङ्गारमादाय तस्य पशोस्समन्तात् भ्रामणम्।

शिरसमुदीचीनपादं निपात्य [1]संज्ञपयेत्। ततस्संज्ञप्तहोमं प्रायश्चित्तहोमांश्च हुत्वा वपाश्रपण्यवादाय, अध्वर्युर्यजमानानुगतः पशुसमीपं गत्वा पश्वङ्गानि जलेन आप्याय्य पशोरुदरं दक्षिणपार्श्वे विशस्य (विदार्य) अन्तराशयमाच्छाद्य स्थितां श्वेतरक्तामतिमृदुलां तनीयसीं त्वक्सदृशीं वपामुत्कृत्य तां वपाश्रपण्यामेकस्यां प्रसार्य, अन्यया आच्छाद्य यजमानेन अन्वारब्धोऽध्वर्युराहवनीयसमीपमागत्य प्रतिप्रस्थात्रे वपायुते वपाश्रपण्यौ दद्यात्। ततस्स वपामलोहिनीं सुश्रृतां श्रपयित्वा वेद्यां पूर्वोपस्थापितप्लक्षशाखाया उपरि तामासाद्य अवशिष्टमेकादशं प्रयाजमाज्येनैवानुष्ठाय, आज्यभागौ चेष्ट्वा वपामादाय उपस्तृतायां जुह्वामखण्डितां तां निक्षिप्य, अभिघार्य, हिरण्यशकलानि प्रास्य, आश्रावणादिषु कृतेषु वपां समग्रामेवाध्वर्युराहवनीये जुहुयात्। इन्द्राग्नी, सूर्यः, प्रजापतिर्वा विकल्पेन देवता इत्युक्तम्। ततो वपाश्रपण्योराहवनीये प्रक्षेपः कार्यः। ततस्सर्वेषामृत्विजां पत्नीयजमानयोश्च चात्वाले हस्तप्रक्षालनम्।

ततस्तद्देवताकमेवैकं पशुपुरोडाशयागं कुर्यात्। तदनुष्ठानं पौर्णमासीगताग्नीषोमीयपुराडाशवदेव। पुरोडाशसम्बन्धिहविर्निर्वापकाल एव पशोर्हृदयादीन्यङ्गान्युत्कृत्य शामित्रेऽग्नौ पूर्वसज्जिते [2]मृद्भाण्डे पचेत्। पाककाले हविषामसाङ्कर्याय चिह्नं कृत्वैव पाकः कर्तव्यः। तानि चाङ्गानि—

१. हृदयम्। २. जिह्वा। ३. वक्षः। ४. यकृत्। (कालखण्डाख्यं मृदुतरं मांसम्) ५-६. वृक्यौ (पार्श्वस्थौ पिण्डौ)। ७. सव्यं बाहुमूलम्। ८-९. पार्श्वद्वयम्। १०. दक्षिणा श्रोणिः। ११. गुदस्य तृतीयोंऽश इति।

तेषां पाको यदा प्रचलति तदा ऋत्विजः पशुपुरोडाशयागमनुतिष्ठेयुः। तदीयामिडां पुरोडाशरूपां प्रतिप्रस्थातृवर्जं सर्वे ऋत्विजो यजमानसहिता भक्षयेयुश्च॥

## हृदयाद्यङ्गयागः

तदनन्तरं पाकभाण्डात् पक्वान्यङ्गान्युद्धृत्य स्वधितिना (छुरिकया) छित्त्वा, अवदाय, [3]जुह्वां निक्षिप्य, आश्रावणादिषु कृतेषु आहवनीये जुहुयात्। अत्र हविषां जुह्वामवदानकाल एव पशुरसे यूपाख्ये [4]मेदो निधाय तेन जुहूपभृतोः हविः पूर्णयोः मुखमाच्छादयेत्। तदैव प्रतिप्रस्थाता प्रधानयागीययाज्याया अर्धर्चपाठकाले वसाहोमहवन्यां गृहीतां [5]वसामाहवनीये जुहुयात्। तदनन्तरमेव हृदयाद्याहुतिरिति बोध्यम्। हृदयादीन्येकादशाङ्गानि जुहूस्थानि सकृदेव होतव्यानि॥

---

१. घातमन्तरा प्राणसंरोधनादिना प्राणवियोजनं संज्ञपनम्।

२. हृदयं परं शूलप्रोतं कृत्वा साक्षादेवाग्नौ तापयित्वा पचेत्; इतराणि भाण्डे।

३. तस्मिन्नेव काले स्विष्टकृदर्थमवदायोपभृति निक्षिपेत्।

४. जीर्णपटसदृशं हृदयवेष्टनं मेदः।

५. पाकभाण्डे स्थितस्नेहात्मको रसो वसा।

ततो दर्शवत् नारिष्ठहोमान् हुत्वा पृषदाज्यस्थाल्यां पृषदाज्यं गृहीत्वा वनस्पतये ( देवताविशेषाय ) हुत्वा स्विष्टकृदर्थं पूर्वमेवोपभृत्यवदाय स्थापितान्यङ्गानि जुह्वां कृत्वा प्रैषाश्रावणाद्यनन्तरं स्विष्टकृतेऽग्नये हुत्वा इडां यथावदवदाय सर्वे ऋत्विजस्सयजमाना भक्षयेयुः ॥

## अनूयाजाद्यनुष्ठानम्

ततोऽनूयाजा एकादश अनुष्ठेयाः। तेषाम्—

१. देवं बर्हिः। २. देव्यो द्वारः। ३. देव्यौ उषासानक्ता। ४. देव्यौ जोष्ट्र्यौ। ५. देव्यौ ऊर्जाहुत्यौ। ६. देव्यौ होतारौ। ७. तिस्रो देव्यः। ८. देवो नराशंसः। ९. देवो वनस्पतिः। १०. देवं बर्हिः। ११. देवो अग्निः स्विष्टकृत् इति क्रमेण देवताः।

पृषदाज्यं द्रव्यम्। अनूयाजानुष्ठानकाले प्रतिप्रस्थाता गुदकाण्डस्य तृतीयमंशं पूर्वमवशेषितमेकादशधा च्छित्त्वा शामित्रादग्निमादाय उत्तरस्यां वेदिश्रोण्यां स्थापयित्वा तस्मिन्नेकैकं गुदकाण्डखण्डं हस्तेन जुहुयात्। ततो यागार्थं पूर्वविशस्तस्य पशोः पुच्छमसिना च्छित्त्वा आदाय तेन पत्नी संयाजाननुतिष्ठेत्। तत्र प्राकृत्य एव देवताः। ततः प्रकृतितोऽतिदिष्टानामैष्टिकानां यथासम्भवमनुष्ठानमङ्गानाम्। ततो यजमानो यपमुपस्थाय संस्थाजपं कृत्वा कर्म समापयेत्। पशुयागोऽयं दार्शिकपयोयागविकृतिभूतः। अतो धर्मान् तदीयानेव गृह्णीयात्। षष्ठाध्यायविषयोऽयम्।

इति पशुयागो निरूढपशुबन्धाख्यः।

## सोमयागनिरूपणम्

सप्तमाध्यायतः पञ्चाध्यय्या सोमयागस्वरूपं निरूपितम्। तस्यायं संक्षेपः—सोमयागः चतुष्प्रकारः—एकाहः, अहीनः, साद्यस्क्रः, सत्रं चेति। एका, तिस्रः, चतस्रः, द्वादश, अपरिमिता वा दीक्षाः सोमयागे भवन्ति। एकस्मिन् दिने कर्तव्यतया विहिता नियमा यथावदनुष्ठिता एका दीक्षा। ततो यावद्वारं दिनान्तरेष्वभ्यस्तास्तावत्सङ्ख्याका दीक्षा भवन्ति। ततो दिनत्रये, षट्सु, द्वादशसु वा दिनेषु उपसदोऽनुष्ठेयाः। तत्र एकाहज्योतिष्टोमादौ तिस्रः, चयने षट्, अहीनादौ द्वादशोपसद इति विवेकः। तत्र दीक्षोपसदामनेकदिनानुष्ठेयत्वेऽपि एकस्मिन्नेव दिने सोमयागानुष्ठानं यत्र स एकाहः। सोमयागस्य द्वित्रादिषु दिनेषु पुनः पुनरावृत्त्यानुष्ठानं यत्र सोऽहीनः। तत्र द्विरात्रप्रभृति दशरात्रपर्यन्ता अहीनाः। एकादशद्वादशरात्रावुभावहीनसत्त्रोभयात्मकौ। द्वादशरात्रस्यैव उभयात्मकतां केचिदभिप्रयन्ति। त्रयोदशरात्रप्रभृतयः सहस्रसंवत्सरपर्यन्ताः सोमयागा सत्राण्युच्यन्ते। एकस्मिन्नेव दिने सङ्कल्पप्रभृत्यवभृथान्तमनुष्ठानं यस्य स साद्यस्क्र इत्युच्यते।

सत्राण्यपि द्विविधानि—रात्रिसत्राणि अयनसत्राणि चेति। तत्र द्वादशरात्रप्रभृति शतरात्रपर्यन्तानि रात्रिसत्राणि। ततः प्रभृत्ययनसत्राणि इति सामान्यस्वरूपम्।

इदानीं सर्वसोमयागप्रकृतिभूतस्य अग्निष्टोमाख्यस्यैकाहस्य सर्वसोमयागेभ्यः पूर्वमनुष्ठेयस्य अनुष्ठानप्रकारः संक्षेपतो निरूप्यते। तस्य आरम्भे पक्षद्वयम्—यस्य अनाहिताग्नेः सोमयागानुष्ठाने तीव्रेच्छोदिता स वसन्तर्तौ सोमयागोचितं कालं निर्धार्य ततः पूर्वस्यां सप्तम्यामष्टम्यां दशम्यां वा दीक्षापक्षानुसारेण सङ्कल्प्य अग्न्याधानार्थम्, अग्न्याधानविधिना अग्नीनाधाय समनन्तरमेव सोमयागार्थं सङ्कल्प्य तं यथावदनुतिष्ठेत् इत्येकः पक्षः। नात्र पक्षे आधानोक्तकालापेक्षा। अथ वा आधानार्थं विहिते काले यथावदग्नीनाधाय, ततोऽग्निहोत्रदर्शपूर्णमासपशुचातुर्मास्यादीन् यागान् यथाकालमनुतिष्ठन्, लब्धायां सामग्रीसम्पत्तौ वसन्तर्तौ सोमयागमनुतिष्ठेत् इत्यपरः पक्षः। द्वावपि सूत्राद्युक्तौ याज्ञिकैरङ्गीकृतौ च। अतो यथेष्टं तौ परिग्राह्यौ। तत्र पक्षद्वयेऽपि सोमयागानुष्ठाने न कोऽपि विशेषः।

## सोमयागेऽधिकारी

तत्र यो नाम 'कूश्माण्डैः पवित्रेष्ट्यादिभिः जपैः पुण्यतीर्थस्नानादिभिर्वा पावनैः कर्मभिरात्मानं शोधयति स्म, निर्वैरश्च भवति भूतेषु स एव सोमयागानुष्ठानेऽधिकारी भवति। तत्रापि यस्य पिता पितामहो वा सोमयागं नान्वतिष्ठताम्, सोऽनर्हस्सोमयागानुष्ठाने त्रिपुरुषसोमपानविच्छेदीति कृत्वा। एवं यस्य पिता पितामहो वा न वेदाध्यायी, न वा हविर्यज्ञान् श्रौतानन्वतिष्ठत् स दुर्ब्राह्मण इति सोऽपि न सोमयागेऽधिकरोति। अतस्तादृशदोषद्वयापनुपत्तये ऐन्द्राग्नपशुयागम्, आश्विनपशुयागं च अनुष्ठाय ततस्सोमयागमनुतिष्ठेत्। तत्र आत्मना सह त्रिपुरुषसोमपानाभावे ऐन्द्राग्नपशुयागोऽनुष्ठेय इति कात्यायनमतम्। आत्मानं मुक्त्वा पूर्वेषां त्रयाणाम् आनुपूर्व्येण तथात्वे स इत्यापस्तम्बीयाः। एवं वेद्याः वेदस्य च त्रिपुरुषविच्छेद एव आश्विनः पशुः। तत्रोभयमप्यनुष्ठेयमित्यापस्तम्बीयाः। अन्यतरस्यैव अनुष्ठानमिति कातीयाः।

पशुयागद्वयमिदं सोमयागात् पूर्वमेव अनुष्ठाय, तेन च आत्मानं परिशोध्य, ततस्सोमार्थं सङ्कल्पेत इत्येकः पक्षः। अथवा सोममध्य एव चतुर्थदिनेऽनुष्ठीयमानेन अग्नीषोमीयेण पशुयागेन सह तन्त्रेण अनुष्ठानमित्यपरः। पृथगनुष्ठानपक्षे सोमयागारम्भात् पूर्वतनपर्वण्येव पशुयागानुष्ठानमिति वेदितव्यम्।

## नाम्नि प्रवृत्तिनिमित्तम्

अत्र बहूनामिष्टिपशूनां सत्यप्यनुष्ठाने तेषामङ्गत्वात् सो'मद्रव्यकयागस्यैव प्राधान्यात् "सोमयागः" इति व्यवहारः। अग्निष्टोमाख्येन साम्ना समाप्यमानत्वाच्च

१. तैत्तिरीयारण्यके पठिताः "यद्देवा देवहेडनम्" ( तै. आ. २–२ ) इत्यादयो मन्त्राः कूश्माण्डाः। तैः क्रियमाणा होमा अपि कूश्माण्डा इत्युच्यन्ते।

२. सोमो लताविशेषः—

श्यामलाम्ला च निष्पर्णा क्षीरिणी त्वचि मांसला।
श्लेष्मला वमनी वल्ली सोमाख्या छागभोजनम्॥ ( इति वैद्यके )

"अग्निष्टोमः" इति प्रकृतयागो व्यवह्रियते। सोमयागो हि ऋग्यजुस्सामवेदोक्तैः त्रिप्रकारैः अङ्गकलापैः संवलितोऽनुष्ठीयते। तत्र यजुर्वेदेनैव समधिकतमान्यङ्गानि प्रायो यज्ञशरीराभिनिर्वर्तकाणि विधीयन्ते। ऋग्वेदेन विविधयाज्यापुरोनुवाक्याशस्त्र-पुरोरुगादीनि। सामवेदेन च गानविशिष्टैर्मन्त्रैः क्रियमाणानि यागसम्बन्धिदेवता-स्तोत्राणि। तानि च प्रतिसोमयागं बहून्यनुष्ठेयतया विधीयन्ते। अग्निष्टोमाख्ये सर्व-यागप्रकृतिभूतेऽस्मिन् सोमयागे द्वादश स्तोत्राणि। तत्र अग्निष्टोमाख्यमन्तिमं स्तोत्रम्। न ततः परं स्तोत्रमस्ति स्तवनीयमस्मिन् यज्ञे। अतोऽग्निष्टोमाख्येन स्तोत्रेण समाप्य-मानत्वादयं क्रतुः "अग्निष्टोमसंस्थाकः" इति "अग्निष्टोमः" इति च व्यवह्रियते। एवमग्रेऽपि सोमयागानां नामानि तत्तत्समाप्तिगतस्तोत्रवशेनैव भवन्ति यथा—उक्थ्यः, अतिरात्र इत्यादीनि। अनुष्ठातृनामभिः, द्रष्टृनामभिश्च केचित् क्वचित् व्यवहारं भजन्त उपरितनेषु क्रतुषु। यथा—अङ्गिरसां द्विरात्रम्, जनकसप्तरात्रम्, कुण्डपायिनामयनम् इत्यादि।

सोऽयं सोमयागो नित्यः प्रतिवसन्तं त्रैवर्णिकेन आहिताग्निना पूर्वोक्ताधिकारि-विशेषणयुक्तेन सपत्नीकेन अवश्यानुष्ठेयः। अकरणे प्रत्यवायो भवति। नित्यस्य सतोऽस्य काम्यत्वमपि तत्तत्फलसाधनत्वेन श्रूयते वेदेषु सर्वत्र, श्रौतसूत्रेषु[1] च। अत्र द्रव्यं काचिल्लता। तां विक्रेतुस्सकाशात् गवादिद्रव्येण मूल्यभूतेन क्रीत्वा अश्मनः उपरि निक्षिप्य अश्मभिरेव कुट्टयित्वा, रसं निष्कास्य तं तत्तद्देवताभ्यो हुत्वा हुतशेषं यजमान-सहिता ऋत्विजो भक्षयेयुः। नेयं सर्वत्र सुलभा। क्वचिदेव तु पवित्रतमे पर्वतादौ। हिमवति, महेन्द्रे, सह्यपर्वते, श्रीपर्वते, देवगिरौ, विन्ध्ये, पारियात्रे, सिन्धुनदस्य कूलेषु, वितस्ताया नद्या उत्तरभागे स्थितेषु महापर्वतेषु, अन्येषु चैवंविधेषु पुण्यस्थलेष्वेवास्या उत्पत्तिः श्रूयते; विशेषतो मूजवदाख्ये गिरौ च। परमिदानीं नेयं भारतदेशे उपलभ्यते सर्वथा। प्रायेण जानन्त्यपि न तस्याः स्वरूपम्। तस्याः स्थाने पूतीकाख्यां काञ्चित् तत्सदृशीं ( कियताचन अंशेन ) लतामादाय तयैव सोमयागमनुतिष्ठन्त्यनुष्ठातारः। निरतिशयोऽस्य सोमस्य महिमोपवर्ण्यते वेदेषु, पुराणेषु च। पीतो मनुष्याणामपूर्वमा-युर्बलं पुष्टिं मेधां सर्वोतिशायिनीमात्मशक्तिं च विवर्धयतीति, नवीनमेव किमपि जन्म समुत्पादयतीति चायुर्वेदादावुद्घुष्यते। नास्ति देवानामिन्द्रस्य चेतोऽपि प्रियतमं वस्तु त्रिलोक्यामिति श्रौतो वादः। देवेन अमृतेनापि साकममुमुपमिमते महाभारतादयो ग्रन्थाः। अस्तु। प्रकृतमनुसरामः।

## सोमयागे प्रथमदिनकृत्यम्

सोमयागमिममनुष्ठास्यन् सपत्नीको यजमानो वासन्त्याः पूर्णिमायाः पूर्वस्याम् अष्टम्यां ( दीक्षाचतुष्टयपक्षे ) नवम्याम् ( दीक्षात्रयपक्षे ) एकादश्यां ( एकदीक्षापक्षे )

---

१. आप. श्रौ. १०. २. १।

वा सोमयागसङ्कल्पं करिष्यमाणः ततः पूर्वं पर्याप्ते समये सोमप्रवाकं[1] वृत्वा तं तत्त-दृत्विग्भ्यः प्रेषयेत्। स तानवाप्य "यज्ञेश्वरशर्मणः सोमो भविष्यति, तत्र भवता आर्त्विज्यं कर्तव्यम्', 'हौत्रं कर्तव्यम्' इत्यादि कथयेत्। स च ऋत्विक् तत्र आर्त्विज्यं चिकीर्षन् आधानादिषु पूर्वानुष्ठितेषु कर्मसु "अस्य के ऋत्विजः? के वा याजकाः? कच्चित्कल्याण्यो दक्षिणाः?" इति पृच्छेत्। समुचितमुत्तरं तस्मादवाप्य, स्वीकृत्य आर्त्विज्यकरणं यजमानगृहमागतेषु तेषु तान् यजमानो मधुपर्कदानेन यथावदर्चयित्वा ये यत्र कुशलाः तस्मिन् तस्मिन् कर्मणि तान् वृणुयात्। 'अध्वर्युं त्वां वृणे', 'होतारं त्वां वृणे' इत्यादिः वरणप्रकारः। मधुपर्ककाले वस्त्रालङ्काराभरणादिभिः ते समर्चनीयाः। ते च चत्वारो गणाः। एकैकस्मिन् गणे चत्वार, इत्याहृत्य ते षोडश भवन्ति।

यथा—

| १. अध्वर्युगणः | २. ब्रह्मगणः | ३. होतृगणः | ४. उद्गातृगणः |
|---|---|---|---|
| १ अध्वर्युः | १ ब्रह्मा | १ होता | १ उद्गाता |
| २ प्रतिप्रस्थाता | २ ब्राह्मणाच्छंसी | २ मैत्रावरुणः | २ प्रस्तोता |
| ३ नेष्टा | ३ आग्नीध्रः | ३ अच्छावाकः | ३ प्रतिहर्ता |
| ४ उन्नेता | ४ पोता | ४ ग्रावस्तुत् | ४ सुब्रह्मण्यः |

[2]एतदतिरिक्तं सदस्यनामकमृत्विजं सप्तदशं कथयन्ति केचन सूत्रकाराः। एवमृत्विजो वृत्वा कर्मणो निर्विघ्नपरिसमाप्तये देवता उपस्थाय, गार्हपत्याग्निमरण्योः समारोप्य, तमग्निं शमयित्वा अरणी यज्ञसामग्रीश्च गृहीत्वा, गृहात् सोमयागार्थं पूर्वनिर्णीतं स्थानं सपत्नीको गत्वा, तत्र अरणी मथित्वा, पूर्वनिर्मिते गार्हपत्यायतने मथनोत्पन्नमग्निं प्रतिष्ठापयेत्। ततोऽध्वर्युराहवनीयं प्रणीय, तत्र सम्भारयजुस्संज्ञकान् चतुर्विंशतिसङ्ख्याकान् होमान् हुत्वा, तमग्निं विसृज्य, पुनर्गार्हपत्यात् प्रणीय, सप्त-होतृसंज्ञकं होमं कृत्वा, तमप्युत्सृज्य, पुनः तत एवाहवनीयदक्षिणाग्नी विहृत्य तत्र दीक्षणीयेष्टिं कुर्यात्। तत्र एकादशकपालः पुरोडाशो द्रव्यम्। अग्नाविष्णू देवता। पुरोडाशस्तु व्रीहिपिष्टैरेव निष्पाद्यः। तां परिसमाप्य तत्र [3]प्राचीनवंशसंज्ञिकां [4]विमित-संज्ञिकां वा शालां निर्माय तस्योत्तरभागे बहिरावृतदेशे यजमानो वपनं कारयित्वा स्थावरास्वप्सु तीर्थे स्नात्वा अध्वर्युणा दत्ते दुकूले वस्त्रं परिदध्यात्। एवं यजमानपत्न्या

---

१. सोमयागं करिष्यता यजमानेन ऋत्विजां वरणार्थं तत्तत्समीपं यः प्रेष्यते स सोम-प्रवाकः। सोमं प्रकर्षेण वक्ति ऋत्विग्भ्य इति।

२. आप. श्रौ. १०. १. २, ३.।

३. शालाया उपरि आच्छादनधारणवंशा यस्मात् प्रागग्रा एव, तत इयं संज्ञा।

४. See आप. श्रौ. १०–१–१०।

५. See कात्या. श्रौ. ७–१–१४–१८।

अपि केशवर्जं वपननखनिकृन्तनस्नानवस्त्रपरिधानानि भवन्ति। अत्र पत्न्या वपने [1]विकल्पं केचिदिच्छन्ति। नखनिकृन्तनादिकं तु भवत्येव। ततो जायापती प्राग्वंशमण्डप एव स्वाभिरुचितं शास्त्रानिषिद्धं वस्त्वन्नादिकं भुञ्जीयाताम्। तत उभावपि स्वाङ्गानि नवनीतेन अनुलिम्पतः। अञ्जाते च स्वे अञ्जनेनाक्षिणी। ततोऽध्वर्युः दीक्षाहुतीः षट् हुत्वा यजमानाय कृष्णाजिनद्वयं दद्यात्। स तत् परिगृह्य, आहवनीयसमीपं गत्वा भूमौ तदास्तीर्य तदुपरि कटिप्रदेशेन आरुह्य, उपविश्य, मेखलां मुञ्जतृणनिर्मिताम् अध्वर्युदत्तां कट्यां बद्ध्वा, [2]कृष्णमृगस्य शृङ्गं शरीरकण्डूयनार्थम्, उदुम्बरवृक्षीयं स्वसमपरिमाणमूर्ध्वतायां दण्डं च यजमानो गृहीत्वा धारयन्नासीत। यदा स्वाङ्गेषु क्वचित् कण्डूतिर्जायेत तदा कृष्णमृगशृङ्गेणैव कण्डूयेत, न नखेन। एवं यजमानपत्न्याः शिरसि इषीकानिर्मितं जालं, कट्यां मुञ्जनिर्मितं योक्त्रं च बध्नीयात्। ततो यजमानो मुष्टिबन्धनं कुर्यात्। तत्र द्वयोर्हस्तयोः कनिष्ठिकातो यावदङ्गुष्ठम् अङ्गुलीर्मोटयेत्। ततो हस्तद्वयेऽपि कनिष्ठिकानामिके विसृजेत्। विसर्गस्तु व्रतग्रहणानन्तरमग्रे कर्तव्यः। मुष्टिकरणानन्तरम् अध्वर्युर्यजमानं दीक्षितं देवेभ्यो मनुष्येभ्यश्च आवेदयेत्—अदीक्षिष्ट अयं ब्राह्मणोऽमुकशर्मा अमुकस्य पुत्र इत्यादि। अत्र पितृपितामहप्रपितामहानां मातृपितामहीप्रपितामहीनां च नामानि वक्तव्यानि। एवं त्रिरुपांशु त्रिरुच्चैश्चावेदने अध्वर्युणा कृते यजमानो वाङ्नियमनं कृत्वा रात्रौ नक्षत्रोदयपर्यन्तं तथैवासीत। नक्षत्रोदयानन्तरं [3]व्रतकरणप्रैषेणैव (व्रतं कृणुत) वाचं विसृजन् अध्वर्युणा पयसि दत्ते तत् पिबेत्। पत्न्यपि चैवं कुर्यात्। एवमेव प्रतिदिनमहनि रात्रौ च पय एव पिबेतां यजमानः पत्नी च। यदि पयो न लभ्यते पयसैव वा प्राणधारणं दुष्करं मन्वाते तदा दधि, उदुम्बरफलानि, धानाः, सक्तून्, ओदनमात्रं वा भुञ्जीयाताम्।

ततो यज्ञोपयोगिद्रव्यार्जनाय याचकान् प्रेषयेत्। याच्ञेयं धनिकस्यापि नित्या। आगतानि द्रव्याणि तत्तन्मन्त्रेण गृह्णीयात्। एतावता प्रथमदिनकृत्यं समाप्यते। यजमानस्तस्यां रात्रौ जागरणं कुर्यात्। व्याकरणसंस्कृतैरेव शब्दैर्व्यवहरेत्, न लौकिकीं वाचं वदेत् असच्छूद्रैर्न सम्भाषेत। नास्य नाम कश्चित् ब्रूयात्। सुत्यादिने दक्षिणादानात् पूर्वं न कृष्णविषाणं विसृजेत्। न दन्तान् दर्शयेत्। नोच्चैर्हसेत्। नानृतं वदेत्। न मांसमश्नीयात्। न स्त्रियमुपेयात्। नोपरि खट्वादौ शयीत। न सन्ध्ययोः प्राग्वंशाद्बहिर्गच्छेत्। यावद्दीक्षमग्निहोत्रदर्शपूर्णमासादीनि श्रौतकर्माण्यपि नानुतिष्ठेत्। न अन्यस्मै किञ्चिद्दद्यात्। दीक्षाव्यञ्जकानि कृष्णाजिनादीनि सर्वदा धारयेत्।

॥ एतावत् प्रथमदिनकृत्यम् ॥

---

१. कात्या. श्रौ ७–२–१९।

२. कृष्णवर्णो हरिणः कृष्णमृगः। तस्य शृङ्गं विषाणम्।

३. पत्नीयजमानयोः पानार्थं पयःप्रदानमेव व्रतकरणमित्युच्यते।

# द्वितीयदिनकृत्यम्

ततो द्वितीयस्मिन् दिने आवश्यकं कर्म कृत्वा प्रातरेव प्रायणीयेष्टिं कुर्यात्। तत्र पञ्च देवताः। पथ्या स्वस्तिः प्रथमा। अग्निर्द्वितीयः। सोमस्तृतीयः। सविता चतुर्थः। अदितिः पञ्चमी। तत्र पथ्यादीनां चतुर्णामाज्यं द्रव्यम। अदितेरोदनः। आहवनीयेऽग्नौ तमोदनं पक्त्वा आहवनीय एव पूर्वादिषु चतसृष्वपि दिक्षु पथ्यादिभ्यः क्रमेण आज्यं हुत्वा मध्ये अदित्या ओदनं जुहुयात्। यस्मिन्नोदनः पक्वः तत् पात्रमप्रक्षाल्यैव क्वचित् स्थापयेत्। तथैवोदयनीयेष्टिहविःपाकार्थं तदुपयुञ्जीत॥

## सोमक्रयः

ततस्सोमक्रयः। तदर्थं यया गवा सोमं क्रेतुमिच्छति यजमानः तां सोमशकटसमीपं नीत्वा अवस्थाप्य, कुत्सितेन ब्राह्मणेन शूद्रेण वा शकटेऽवधाय आनीतं सोमं [1]विचित्य अङ्गुलीभिर्यावदपेक्षं सोमं विमाय तं क्षौमवस्त्रे निक्षिप्य सोमविक्रयिणो हस्ते दत्त्वा तम् "सोमविक्रयिन् क्रय्यस्ते सोमः?" इति पृष्ट्वा तेन 'क्रय्यः' इत्युक्ते क्रमेण तं दशभिर्द्रव्यैः क्रीणाति। तानि च—

१. गौरेकहायनी। २. हिरण्यम्। ३. अजा। ४–५. धेनुस्सवत्सा। ६. ऋषभः। ७ अनड्वान् शकटवाही। ८. वत्सतरः[2]। ९. वत्सतरी। १०. वासः इति दश।

तत्र प्रथमक्रये "गवा ते क्रीणानि" इत्यध्वर्युणोक्ते सोमविक्रयी "भूयो वा अतस्सोमो राजा अर्हति" इति प्रतिब्रूयात्। ततोऽध्वर्युः "हिरण्येन क्रीणानि" इत्यादि। एवं दशमद्रव्यपर्यन्तं प्रश्नप्रतिवचने भवतः। दशमद्रव्येण क्रये कृते न ततो भूयस आशंसनम्। विक्रीतं सोममध्वर्युहस्ते दत्त्वा क्रयद्रव्याण्यादाय सोमविक्रयी गच्छेत्। गच्छन्तं तं न विलोकयेत्। अत्र क्रयार्थं दत्तस्य हिरण्यस्य पुनर्ग्रहणम्, अन्यया गवा एकहायन्या निष्क्रयणं च सूत्रकारा आमनन्ति। ततः क्रीतं सोमं यजमानः स्वस्य दक्षिणस्मिन्नूरावासाद्य हस्ताभ्यां निगृह्य आसीत। ततस्तमादायोत्थाय हविर्धानशकटसमीपमानीय, तत्र तं निक्षिप्य, शकटेऽनड्वाहौ नियुज्य, ताभ्यां शकटं वाहयित्वा प्राग्वंशस्य अग्रतः यज्ञवाटमानाय्य सोमहविर्धानशकटस्य दक्षिणं बलीवर्दं मोचयित्वा, सव्यमविमोच्यैव, आतिथ्येष्टिं कुर्यात्। तत्र विष्णुर्देवता। नवकपालः पुरोडाशो द्रव्यम्। इष्टिरियं सोमस्य राज्ञ आतिथ्यस्थानीया। हविष्कृदाह्वानकाल एव द्वितीयस्य अनडुहो विमोचनं शकटात्। तदेव च सोमं राजानं शकटादवरोप्य, पूर्वसज्जितायाम्, आहवनीयसमीपेऽवस्थापितायां राजासन्द्यां[3] तमवस्थापयेत्। ततः इष्टिं तां

---

१. सोममध्यपातततानि तृणादीन्यपाकृत्य सोमस्य संशोधनविषयनम्।

२. सद्योऽतिक्रान्तबालभावः ऋषभो वत्सतरः।

३. राजा सोमः, तत्स्थापनाय या आसन्दी सा राजासन्दी।

परिसमाप्य परस्परमवैराय ऋत्विजो यजमानश्च पात्रस्थापितमाज्यं स्पृष्ट्वा प्रतिज्ञां कुर्युः । तत् तानूनप्त्रमित्युच्यते । ततः प्रवर्ग्यानुष्ठानम् ॥

## प्रवर्ग्यः

प्रवर्ग्य इति कर्मणो नामधेयम् । स च सोमयागाङ्गभूत एव । परं तैत्तिरीयसंहितायां ब्राह्मणे वा नास्य मन्त्रा ब्राह्मणानि वा आम्नायन्ते । तैत्तिरीयारण्यके परं चतुर्थपञ्चमयोः प्रश्नयोः क्रमेण मन्त्रा विधयश्चाम्नाताः । काण्वमाध्यन्दिनयोः संहितयोः षट्त्रिंशादिषु त्रिष्वध्यायेषु मन्त्राः तच्छतपथयोः षोडशे त्रयोदशे च काण्डे विधयश्च यथाक्रममाम्नाताः । एवं मैत्रायण्यादिष्वपि शाखासु स्वतन्त्रतयैव प्रवर्ग्यविधिमन्त्राः पठिताः । सूत्रकारा अपि प्रवर्ग्यविधिं सौमिकप्रयोगेऽनन्तर्भाव्यैव स्वतन्त्रतस्तं पठन्ति, तथापि सर्वे तस्य सोमयागाङ्गत्वमभिप्रयन्ति क्वचित् प्रयोगविशेषे विकल्पयन्तः । अनुष्ठातारः परं नियमेन सोमयागमध्य एव अनुतिष्ठन्ति । अतोऽत्रैव तत्स्वरूपमपि निरूप्यते । तदपेक्षितानि पात्राणि साधनानि च पूर्वमेव सम्पादनीयानि ॥

## प्रवर्ग्यसम्भाराः

तत्र प्रथमतो महावीराख्यपात्रनिर्माणं कर्तव्यम् , तत्प्रकारश्चेत्थम्—कस्यांचिदमावास्यायां पूर्णिमायां वा अभ्रिम् , अश्वं, कृष्णाजिनं, सवत्सामजां च गृहीत्वा यत्र महावीराद्युपयुक्ता मृदस्ति प्राच्यां दिशि तत्र गत्वा मृदं खात्वा, कृष्णाजिने न्युप्य, अश्वेन अवघ्राप्य, मृद उपरि आजं पयो दुग्ध्वा, तां मृदं बहुभिराहार्यं विहारस्योत्तरतोऽवस्थाप्य, तस्यां वराहोत्खातां मृदं, वल्मीकमृदं, पूतीकान् , अजलोमानि, कृष्णाजिनलोमानि, अन्यानि च दृढीकरणार्थानि वस्तूनि संयोज्य पिष्ट्वा, उष्णजलेन संमिश्र्य, संयुत्य, तया मृदा त्रीन् महावीरान् कुर्यात् । ते च प्रादेशमात्रोर्ध्वाः मध्ये स्थलत्रयसंगृहीताः, स्थलत्रयोन्नताः उपरिबिलाः स्युः । एवं तयैव मृदा अवशिष्टया हस्त्योष्ठाकारे द्वे दोहनपात्रे, आज्यस्थालीम् , अश्वौ द्वौ, रोहिणपुरोडाशार्थं द्वे कपाले च निर्माय, तानि च सूक्ष्मवस्त्रादिभिः श्लक्ष्णीकृत्य, गार्हपत्यस्य, पुरस्तादवटं खात्वा, तानि तत्रेष्टकावत् पचेत् । पाकार्थं अग्निं कुशैः मुञ्जतृणैश्च आदीपयेत् । पक्वेषु तेषु शफाभ्यां महावीरानुद्धास्य, भूयसा अजापयसा तान् प्रच्छेत् । येनोज्ज्वला भवेयुर्महावीराः । इम एव प्रवर्ग्यसंभाराः मार्त्तिकाः । वानस्पत्यास्तु उदुम्बरकाष्ठैः कारयितव्याः । ते च—सम्राडासन्दी मौञ्जीभिस्स्यूता रज्जुभिः । द्वे स्रुचौ गर्तवत्यौ । द्वे चागर्ते । द्वौ शफौ महावीरग्रहणार्थौ । धृष्टी अङ्गारनिरूहणार्थे द्वे काष्ठे । मेथी गोबन्धनार्था । त्रयश्शङ्कवो वत्सबन्धनार्थाः । व्यजनानि त्रीणि कृष्णाजिननिर्मितानि । द्वौ रुक्मौ वर्तुलाकारौ । एको राजतः, एकस्सौवर्णः । अभिधानी गोबन्धनार्था ( रज्जुः ) निदाने गोः पादबन्धनार्थे ( रज्जू ) । विशाखदामानि वत्सबन्धनार्थानि ( रज्जव एव ) । प्रभूतानि मुञ्जतृणानि च ॥

## प्रवर्ग्यानुष्ठानम्

एवं सम्भारान् संभृत्य स्वकाले प्रवर्ग्यमारभमाणोऽध्वर्युः ब्रह्मणा अनुज्ञातः रौहिणपुरोडाशनिष्पादनाय आग्नीध्रमाज्ञाप्य वेदेर्दक्षिणतो दक्षिणद्वारसमीपे गवादिबन्धनार्थं चतुरश्शङ्कूत् निहन्यात्। ततो वालुकाभिः गार्हपत्यस्योत्तरतः स्थण्डिलमेकं कल्पयित्वा गार्हपत्ये मुञ्जलवानादीप्य ततो जातं दीप्तमग्निं स्थण्डिलोपरि निक्षिप्य तस्मिन्नग्नौ महावीरं स्थापयित्वा तमाज्येन अभिपूर्य सौवर्णेन रुक्मेण तन्मुखं पिधाय, तमग्निं कृष्णाजिनव्यजनेन वीजयित्वा, समिद्धेऽग्नौ महावीरमाज्येन पूरयित्वा, पुनः रुक्मेण तेन मुखं पिधाय पूर्ववत् व्यजनेन वीजयित्वा (वीजयितारः—अध्वर्युः, प्रतिप्रस्थाता, आग्नीध्रश्च) प्रज्वलितेऽग्नौ रुक्ममपादाय, अग्निं परीत्य व्यजनानि प्रतिप्रस्थातृद्वारा [1]सम्राडासन्द्यामासाद्य महावीरमवेक्षमाणा आसीरन्। ततोऽध्वर्युः पूर्वनिखातेषु शङ्कुषु गां, गोवत्सम्, अजां, तद्वत्सं च बद्ध्वा गां दुह्यात्। प्रतिप्रस्थाता च अजाम्। उभावपि दुग्धं पय आग्नीध्रहस्ते दद्याताम्। स च पयसी पृथक् पृथगानीय प्राग्वंशं प्रविशेत्। ततः पूर्वमेव प्रविष्टोऽध्वर्युः गोपयः अजापयश्च गृहीत्वा महावीरे क्रमेण प्रक्षिपेत्। तदानीमुत्थितमूष्माणमनुमन्त्रयेत्। तदिदं तप्ते घृते पयः प्रक्षेपणं प्रवृञ्जनमित्युच्यते। अत एव तत्सम्बन्धात् कर्मणोऽस्य प्रवर्ग्य इति नाम सम्पन्नम्॥

ततः प्रतिप्रस्थातरि दक्षिणं रौहिणपुरोडाशम अगर्तायां जुह्वां स्थापितं तयैव आहवनीये जुह्वति, अध्वर्युः आश्रावणप्रत्याश्रावणादि कृत्वा महावीरस्थं पयोमिश्रितं घृतमाहवनीये जुहुयात्। 'घर्मः' इत्यपि तस्य संज्ञा। तदीयपयो यस्या दुग्धं सा गौः 'घर्मधुक्' इति व्यवह्रियते। घर्मस्य अश्विनौ, इन्द्रश्च देवते। अवशिष्टेन स्विष्टकृतं हुत्वा, ततः उष्णीकृतेन दध्ना आहवनीयस्योपरि अध्वर्युणा ध्रियमाणस्य महावीरस्य पूरणे प्रतिप्रस्थात्रा कृते तदपि किञ्चिदिव हुत्वा, शेषमन्तर्वेदि निधाय, पूर्वस्मिन् खरे महावीरं प्रतिष्ठाप्य, अत्र प्रतिप्रस्थात्रा उत्तरस्य रौहिणपुरोडाशस्य होमे कृते अध्वर्युः षट् शकलहोमान् कृत्वा अग्निहोत्रं हुत्वा, होतृब्रह्माग्नीध्रयजमानैस्सह शेषभक्षणं कुर्यात्। ततो महावीरादीनां प्रवर्ग्यसंभाराणां सम्राडासन्द्यां स्थापनम्। अयं प्रातः—प्रवर्ग्यः। एवमेव सायं प्रवर्ग्यः। छिन्नस्य यज्ञशिरसः सन्धानार्थं प्रवर्ग्यानुष्ठानमिति श्रौती (वैदिकी) कथा। [2]सा चेत्थम् पूर्वं कदाचिद्देवा विष्णुना सह मिलित्वा कुरुक्षेत्रे कञ्चन सत्रविशेषमन्वतिष्ठन्। तज्जनितं यशो विष्णुमेव अवाप, नान्यान् सुरान्। तदसहमाना देवास्तमुपारुन्धत। ततस्सोऽन्यत्र अपक्रामन् तैरनुद्रुतस्स्वशरीरात् धनुरिषुं च सृष्ट्वा तेन तान् व्यद्धुमारभत। ततो भीतान् दूरत एव अवस्थितान् देवानवलोक्य विस्मयमानः स स्वचुबुकस्याधोभागे धनुषः कोटिमेकामवष्टभ्य

---

१. सम्राट्शब्देन महावीर उच्यत। तत्स्थापनार्था आसन्दी सम्राडासन्दीः।

२. तै. आ. ४. १.

कोट्यन्तरं भूमाववधाय दिशो विलोकयन्नासीत्। तदा इन्द्रेण प्रार्थितास्ततो लब्धवराश्च वम्रयः[1] तद्धनुषो ज्यां भूमिष्ठकोटिगतामच्छिन्दन्। ततो वेगादुत्पतत् धनुषः कोट्यन्तरं भगवतो विष्णोः शिरः कण्ठात् उत्पाट्य, उपर्याकाशे प्रास्यत्। ततोऽपगतशिरा विष्णुः संवृत्तः। विष्णोरेव यज्ञरूपत्वात् यज्ञस्य शिरश्छिन्नमित्यवगतं सर्वैः। ततश्छिन्नशिरसा अशिरष्केण यज्ञेन अनुष्ठितेन किमपि फलमनाप्यनुवाना देवाः छिन्नं तच्छिरः प्रतिसन्धातुं प्रार्थयन्त अश्विनौ। तौ वरमवृणीताम्—'सोमयागेऽद्य यावदभागिनावावां स्वः, यद्यावयोरपि यागेष्वितः परं हविर्भागो दीयेत, तदा आवां शिर एतद्यज्ञस्य प्रतिसन्दधावहै' इति। 'तथा' इत्यभ्युपगतवत्सु देवेषु तौ तच्छिरः प्रतिसमधत्ताम्। तदिदं यज्ञशिरःप्रतिसन्धानरूपमेव प्रवर्ग्यकर्म। महावीरस्तु यज्ञशिरोरूप इति॥

## उपसत्

एवं प्रातःप्रवर्ग्यमनुष्ठाय, ततः प्रातरुपसदनुष्ठेया। सा अपूर्वा काचिदिष्टिः। तत्र अग्निः, सोमः, विष्णुः इति प्रधानदेवताः। सर्वत्र आज्यं द्रव्यम्। प्रायेणोपांशुयाजवत् प्रयोगः। प्रधानाहुत्यनन्तरं प्रथमोपसद्धोमः। एवं प्रातःप्रवर्ग्योपसदावनुष्ठाय, सुब्रह्मण्याह्वानं कृत्वा विरामः। ततोऽपराह्णे (सायंकालीने) आपराह्णिक्यौ प्रवर्ग्योपसदौ, सुब्रह्मण्याह्वानं च। एवं दिनत्रयं (द्वितीयतृतीयचतुर्थदिवसेषु) सायंप्रातरनुष्ठेयम्। तेन अग्निष्टोमे षड्वारं प्रवर्ग्योपसदोरनुष्ठानं [2]सिध्यति॥

## तृतीयदिनकृत्यम्

द्वितीयोपसद्दिने (दीक्षातस्तृतीयदिवसे) प्रातःप्रवर्ग्योपसदावनुष्ठाय, महावेदेर्निर्माणं कर्तव्यम्। सा च प्राचीनवंशमण्डपात् पुरतः षट् पदानि परित्यज्य ततो निर्मातव्याः। प्राक्पश्चात् द्विसप्ततिपदायामा दक्षिणोत्तरतः षष्टिपदविस्तारा च भवति। श्रोणिभागे, अंसभागे च अष्टाचत्वारिंशच्च। विशेषविवरणं शुल्बसूत्रेषु कृतम्। एवं समग्रां वेदिं विमाय प्रातः ततो यजमानस्य व्रतकरणम् (पयःपानम्) सायं सायाह्निकीभ्यां प्रवर्ग्योपसद्भ्यां प्रचर्य [3]सुब्रह्मण्यामाहूय व्रतं कृत्वा विरमणम्। एतावत् तृतीयदिनकृत्यम्॥

---

१. वम्रयः श्वेतपिपीलिकाः।

२. See. आप. श्रौ. ११. ३. १३–४. ७. बौधा. श्रौ. ६. २१. कात्या. श्रौ ८. २. १४–३६.

३. अत्र सुब्रह्मण्याशब्देन इन्द्र उच्यते। तस्य सुत्यादिवसे तदुद्देशेन त्यक्ष्यमाणस्य सोमरसस्य पानार्थमाह्वानं सुब्रह्मण्याह्वानम्। तच्च द्वितीयदिनप्रभृति सायंप्रातःप्रवर्ग्योपसदनुष्ठानानन्तरम् उद्गातृगणान्तिमेन ऋत्विजा कर्तव्यम्। तत्कर्तृत्वात्तस्य सुब्रह्मण्य इति संज्ञा। अतः प्रभृति नाम सुब्रह्मण्याह्वानम्—अमुकशर्मा यजत इत्यादि॥

## चतुर्थदिनकृत्यम्

तृतीयोपसद्दिने दीक्षातश्चतुर्थदिने प्रातरेव द्वयाभ्यां प्रवर्ग्योपसद्भ्यां प्रचर्य प्रवर्ग्यमुद्वास्य, उत्तरवेद्यां प्रवर्ग्यपात्राणि प्रक्षिप्य, अग्नीषोमीयस्य पशोस्तन्त्रमारभेत। यदि दुर्ब्राह्मणो यदि वा त्रिपुरुषविच्छिन्नसोमपानः स्यात् तदा ऐन्द्राग्नाश्विनपशुभ्यां सह तन्त्रेण अग्नीषोमीयं पशुयागमनुतिष्ठेत्। अन्यथा एकमेव वम्। अतस्तदर्थमाहवनीये इध्मकाष्ठान्याधाय ज्वलन्ति तान्यादाय, आसन्दीस्थं सोममपि सहैवादाय, निरूढपशुयागवत् महावेद्यन्तर्गतायां निहितसम्भारायाम् उत्तरवेद्यां तमग्निं प्रणयेत्। तन्मध्ये स्थापयेत्। ततः प्रभृति यज्ञसमाप्तिं यावत् स एव आहवनीयः। यतः स प्रणीतः स गार्हपत्य इतः परं भवेत्। यो गार्हपत्यः स इतः परं प्राजहितसंज्ञकः। आनीतं सोमं पांसूनादाय दक्षिणहविर्धानमण्डपस्थहविर्धानशकटे स्थापयेत्। एवमग्निं प्रणीय चात्वालस्थान् तैर्धिष्ण्यानुपवपेत्। ततः अग्नीषोमीयपशोस्तन्त्रानुष्ठानपक्षे त्रयाणां वपायागपर्यन्तमनुष्ठाय, सुब्रह्मण्येन सुब्रह्मण्याह्वाने कृते, सोमाभिषवाय, अभिषुतरसवर्धनाय च तडागादितो वसतीवरीसंज्ञकं जलं घटे गृहीत्वा तं जलपूर्णं घटम् अध्वर्युः शालामुखीयमपरेण स्थापयेत्। ततो मध्यन्दिने पशुपुरोडाशयागं, सायाह्ने हृदयादिपश्वङ्गयागं चानुष्ठाय पत्नीसंयाजान्तान्यङ्गानि कृत्वा पशुयागं समापयेत्। ततो रात्रावध्वर्युः घटं वसतीवरीपूर्णं स्कन्धेन आदाय वेदेः परितो यथाविधि हरन् पुनस्तत्रैव निक्षिपेत्। तदा प्रतिप्रस्थाता श्वोऽपेक्षितामिक्षार्थं वत्सापाकरणादि दर्शवत् कृत्वा दध्यातञ्च्यात्। दधिग्रहाद्यर्थमपि दधि सम्पादनीयम्। ततस्सवनीयहविरर्थं बर्हिराहरणादि कृत्वा विरमणम्। रात्रौ यजमानस्य जागरणं पत्न्याश्च। एतावत् चतुर्थदिनकृत्यम्॥

## पञ्चमदिनकृत्यम्—सुत्यादिनम्

तस्यामेव रात्रावपरभागे महारात्रे वा सर्वे ऋत्विजः प्रबुध्य स्नात्वा सोमाभिषवसम्बन्धीनि कर्माण्यारभेरन्। तत्र प्रथमं तानि तानि पात्राणि ग्रहचमसादीनि तत्तत्स्थानेषु योजयेदध्वर्युः। ततः पक्षिणां प्रबोधात् पूर्वमेव प्रातरनुवाकाख्यं शस्त्रं होता आरभेत। तदैव च प्रतिप्रस्थात्रा सवनीयहविषां निर्वापः कार्यः। तानि च—[1]धानाः, करम्भः, परिवापः, पुरोडाशः, पयस्या इति पञ्च। तेषाम्, इन्द्रो हरिवान्, इन्द्रः पूषण्वान्, सरस्वती भारती, इन्द्रः, मित्रावरुणौ इति क्रमेण देवताः। सरस्वत्यादीनां त्रयाणामिव हरिपूष्णोरपि स्वातन्त्र्येण देवतात्वमिच्छति कात्यायनः। ततो दधिग्रहप्रचारः[2]। स चेत्थम्—उदुम्बरवृक्षनिर्मिते उलूखलाकारे चतुष्कोणे पात्रे पूर्वदिनसम्पादितं दधि प्रजापतिदेवतायै गृहीत्वा तस्या एव जुहुयात्। अतो दधिग्रहे दधि द्रव्यम्, प्रजापतिर्देवता। ततोऽदाभ्यग्रहः। ग्रहं ( पात्रं ) लौकिकेन पयसा दध्ना वा

---

१. भ्रष्टयवा धानाः। आज्यमिश्रिता यवसक्तवः करम्भः। लाजाः परिवापः पयस्या आमिक्षा।

२. दध्यदाभ्यांशुग्रहाः कात्यायनीयानां न विहिताः।

प्रपूर्य पूर्वमुपनह्य रक्षितानां सोमलतावयवानां मध्यात् अंशुत्रयं प्रवृह्य तान् ग्रहोपरि स्थापयित्वा ग्रहं पञ्चकृत्वस्सप्तकृत्वो वा आधूय तं ततो जुहुयात्। अत्र सोमो देवता।

ततोंऽशुग्रहः। तत्र एकग्रहपर्याप्तं सोमं गृहीत्वा पाषाणोपरि निक्षिप्य वसतीवरीभिरद्भिः संसिच्य, अभिषुत्य ग्रावभिः, तस्मिन्नेव अदाभ्यग्रहपात्रे गृहीत्वा जुहुयात्। प्रजापतिर्देवता। अंश्वदाभ्यग्रहयोरेकमेव पात्रम्। ततस्तत्पात्रेण सह सदः प्रविश्य तत्र तद्गतसोमरसं भक्षयित्वा पात्रं खरे सादयेत्।

ततः उपांशुग्रहः। तत्र क्रीतं, वस्त्र उपनह्य स्थापितं सोममवमुच्य सर्वं गृहीत्वा, द्विधा विभज्य प्रातस्सवनार्थं भूयांसं माध्यन्दिनसवनाय अल्पीयांसं च तं कृत्वा, प्रातस्सवनार्थात् सोमात् एकग्रहपर्याप्तं सोमं गृहीत्वा होतृचमसेऽवधाय, वसतीवरीजलेन आसिच्य ग्रावभिः पिष्ट्वा रसं निष्पीड्य तमञ्जलिना गृहीत्वा अध्वर्युरुपांशुपात्रे आनयेत्। एवं वारत्रयं कृत्वा रसपूर्णं ग्रहमादाय यथावज्जुहुयात्। अयमधाराग्रहः। प्राणोऽत्र देवता। इतः सर्वे अन्तर्यामप्रभृतयो ध्रुवान्ता धाराग्रहाः। धारातो ग्रहीतव्याः। तदर्थमृत्विग्भिस्सोमाभिषवः कर्तव्यः। सोऽयं महाभिषव उच्यते।

## महाभिषवः

तत्र अभिषवस्थानेऽध्वर्युगणगतास्सर्वे उपविशेयुः। तत्र पुरस्तादध्वर्युरुपविशेत् प्रत्यङ्मुखः। दक्षिणतः प्रतिप्रस्थातोदङ्मुखः। पश्चाद्धोता प्राङ्मुखः। उत्तरत उन्नेता दक्षिणामुखः। एवमभिषवार्थं ग्राव्णस्समन्तादुपविश्य, तदुपरि सोमं निक्षिप्य, वसतीवरीजलमासिच्य पिष्ट्वा दक्षिणहस्तेनाभिषुणुयुः। एवं वारत्रयं कृत्वा, पिष्टान् सोमांशून्[1] आधवनीये मृत्पात्रे निक्षिप्य, प्रपीड्य, रसं निष्कास्य, तं पात्रान्तरे कृत्वा, [2]ऋजीषं ग्राव्णां पुरतः प्रक्षिपेयुः। तेषां तत् घास ( भक्ष ) स्थानीयं भवति। ततस्सोमक्रयकाले सुरक्ष्य स्थापितैरजलोमभिः प्रादेशमात्रीं नाभिं कृत्वा ( गोवत्सनाभिवत् ) पवित्राख्यस्य सोमशोधकस्य वस्त्रखण्डस्य मध्ये तामवलम्ब्य, तत् वासःखण्डं सनाभिं द्रोणकलशाख्यस्य पात्रस्योपरि वितत्य धारयेयुरुद्गातारः। तदोन्नेता आधवनीयादुदञ्चनेन सोमरसं गृहीत्वा होतृचमसे निनयेत् यथा द्रोणकलशोपरि वितते पवित्राख्ये वस्त्रखण्डे रसः पतेत्। ततस्स्रवन्त्या धारया अध्वर्युरन्तर्यामपात्रे अन्तर्यामसंज्ञकं ग्रहं गृहीत्वा सशेषं हुत्वा, सशेषमेव आग्रयणस्थाल्यां सम्पातमवनीय, सशेषं ग्रहं खरे सादयेत्। इन्द्रो देवता। दधिग्रहाद्यन्तर्यामान्तानां ग्रहाणां ग्रहणानन्तरमेव होमः। नैन्द्रवायवादिवत् गृहीत्वा खरे सादनम्।

## ऐन्द्रावायवादिग्रहाः

ततः परं पूर्वोक्तप्रकारेणैव ऐन्द्रावायवं धारातो गृहीत्वा पवित्रदशया ग्रहस्य बहिर्भागं प्रमृज्य खरे सादयेत्। एवं मैत्रावरुणं, शुक्रं, मन्थिनं, आग्रयणं, त्रीनति-

---

१. खण्डिताः सोमलताः प्रादेशमात्रा अंशव उच्यते।

२. गृहीतसारो नीरसस्तृणांश ऋजीषमित्युच्यन्ते।

ग्राह्यान् ( आग्नेयं ऐन्द्रं, सौर्यं ) उक्थ्यं, ध्रुवं चेति यथाक्रमं गृहीत्वा खरे सादयेत्। [1]ध्रुवग्रहग्रहणानन्तरं धारां विरमयेत्। ततो हविर्धानमण्डपात् बहिष्पवमानस्तोत्र-करणाय पञ्च ऋत्विजः परस्परं समन्वारब्धाः प्रसर्पेयुः।

## प्रसर्पणम्

तत्र प्रथमोऽध्वर्युः, ततः प्रस्तोता, ततः प्रतिहर्ता, तत उद्गाता, ततो ब्रह्मा, ततो यजमानः इत्येवं क्रमेणैकस्य पृष्ठतः, अपरस्तदीयं कच्छं धृत्वा गच्छेत्। एवमेव इमे चात्वालदेशं गत्वा तत्रोपविष्टा अनन्तरं कच्छं पूर्वगृहीतं विसृजेयुः। मध्ये विसर्गे प्रायश्चित्तं विहितम्। तत्र गत्वा उद्गाता, प्रस्तोता, प्रतिहर्ता इति त्रयः सामवेदीया ऋत्विजः बहिष्पवमानेन स्तुवीरन्। अध्वर्य्वादयस्तत्रोपविष्टा भवेयुः। तदिदं बहिष्पव-मानस्तोत्रं पापशोधकत्वात् पावनम्। अनेनैव शोधितावश्विनौ यज्ञार्हावभूताम्। समाप्ते स्तोत्रे आग्नीध्रेण धिष्ण्येषु प्रज्वालितेषु अध्वर्युराश्विनं ग्रहं द्रोणकलशाद्गृहीत्वा खरे सादयेत्। ततः सवनीयपशोरुपाकरणादि वपायागान्तं कृत्वा प्रातस्सवनाय अध्वर्यु-ब्रह्मयजमानसदस्याः सदः प्रविश्य तत्रस्था एव ग्रहचमसादिकानि पात्राणि द्रव्याणि चोपतिष्ठेरन्। ततो ब्रह्मा यजमानश्च सर्वाणि तानि तैस्तैर्मन्त्रैरुपस्थाय, उत्तरेण हविर्धानं गत्वा पूर्वया द्वारा सदः प्रविश्य स्वस्वस्थान उपविशेताम्। उपवेशनमिष्ट्यादिवदेव। ततः सवनीयहविषां[2] प्रचारः[3]।

## धाराग्रहप्रचारः

तत्कर्म स्विष्टकृदन्तमनुष्ठाय, अध्वर्युरैन्द्रवायवमैत्रावरुणाश्विनान् त्रीन् ग्रहान् प्रचरेत्। तत्राध्वर्युणा होमार्थमैन्द्रवायवे गृहीते प्रतिप्रस्थाता आदित्यपात्रे द्रोणकलशा-दैन्द्रवायवप्रतिनिग्राह्यं गृहीत्वा तेनैव सह हुत्वा परस्परसनिषेचनानन्तरं आदित्य-स्थाल्यां सम्पातमवनयेत्। अध्वर्युः स्वं पात्रं होत्रे दद्यात्। एवमेवोत्तरयोर्ग्रहयोर-नुष्ठानम्, आदित्यस्थाल्यां सम्पातावनयनं च। तत उन्नेता, अध्वर्युणा प्रेषितः अच्छा-वाकचमसं वर्जयित्वा अन्यान् नव[4] चमसान्, सदस्यपक्षे दश चमसान् प्रपूरयेत्। तत्र परिप्लवया द्रोणकलशात् सोमरसमास्राव्य ततः पूतभृन्नाम्नः कलशात् सोमरस-मादाय चमसान् प्रपूर्य, पुनर्द्रोणकलशात् गृहीत्वा चमसेष्वास्रावयेत्। प्रथमस्रावण-मुपस्तरणस्थानीयम्, द्वितीयमभिघारणस्थानीयम्। एवमेव सर्वेषामुन्नयनं ( पूरणं ) कर्तव्यम्।

---

१. ध्रुवग्रहस्य तृतीयसवन एव विनियोगः। न पूर्वयोः सवनयोः।

२. सवनीयहवींषि उक्तानि।

३. प्रचारः साङ्गानुष्ठानम्।

४. १. होता, २. ब्रह्मा, ३. उद्गाता, ४. यजमानः, ५. मैत्रावरुणः, ६. ब्राह्मणा-च्छंसी, ७. पोता, ८. नेष्टा, ९. आग्नीध्रः, एतेषां नवानामृत्विजां नव चमसाः।

## शुक्रामन्थिग्रहप्रचारः

एवं चमसेषून्नीतेषु, अध्वर्युः शुक्रपात्रं, प्रतिप्रस्थाता च मन्थिपात्रमादाय ससोमरस हविर्धानमण्डपस्य पूर्वद्वारि परस्पराभिमुखौ तिष्ठन्तौ स्वं स्वं ग्रहम् अरत्निं वा परस्परं संधाय यावन्तो मन्त्रास्तावत्कृत्वः, आहवनीयस्य पुरतो गत्वा पश्चिमाभिमुखौ ग्रहहोमार्थं सज्जौ भवेताम्। तस्मिन्नेव काले नव चमसाध्वर्यवः तं तं चमसमादाय आहवनीयदेशं गत्वा, प्राङ्मुखा होमार्थमुद्यता भवेयुः। तत [1]आश्रावणप्रत्याश्रावणाद्यनन्तरमध्वर्युणा प्रैषे दत्ते होतृब्रह्मोद्गातृयजमानानां, सदस्यपत्ते तस्य च ये चमसाध्वर्यवस्ते होत्रा वषट्कारे अनुवषट्कारे च कृते तं तं चमसं द्विहुत्वा अध्वर्युणा प्रेषिताः सदः प्रतिभक्षार्थं चमसान् हरेयुः। अवशिष्टा मैत्रावरुणब्राह्मणाच्छंसिपोतृनेष्ट्राग्नीध्राणां ये चमसाध्वर्यवः ते होतुः प्रथमवषट्कार एव सकृदधुत्वा प्रत्यावृत्य पुनर्द्रोणकलशादेव स्वं स्वं चमसमापूर्य, आहवनीयं प्रति होमार्थं नयेयुः। होतुः प्रथमवषट्कार एव अध्वर्युप्रतिप्रस्थातारौ स्वं स्वं ग्रहं जुहुयाताम्। शुक्रामन्थिग्रहयोश्चमसानां प्रथमहुतानां च परमात्मरूपी इन्द्रो देवता। अनुवषट्कारेषु सर्वत्राग्निरेव स्विष्टकृद्देवता। ततोऽध्वर्युः सशेषं शुक्रपात्रमायतने सादयेत्। प्रतिप्रस्थाता तु मन्थिनः संस्रावहोमम्, आहवनीयस्योत्तरभागाद्गृहीत्वा बहिस्स्थापितेऽङ्गारे जुहुयात्। तस्य रुद्रो देवता। पूर्वं चमसमापूर्य आहवनीयदेशं प्रति गतेषु चमसाध्वर्युषु मध्ये मैत्रावरुण चमसाध्वर्युः स्वं चमसमध्वर्युहस्ते दद्यात्। स मैत्रावरुणं प्रेषयेत्। आश्रावणाद्यनन्तरं याज्यायां तेन पठितायाम् अध्वर्युस्तं चमसं जुहुयात्। तत्र मित्रावरुणौ देवता। एवमेवोत्तरेषां चमसानां तस्मात्तस्माच्चमसाध्वर्योर्ग्रहणम्, तेन तेनर्त्विजा याज्यादौ पठितेऽध्वर्युणा होमश्चेत्यवगन्तव्यम्।

## चमसदेवताः

तत्र ब्राह्मणाच्छंसिचमसे इन्द्रः, पोत्रीये मरुतः, नेष्ट्रीये त्वष्टा, आग्नीध्रीये चाग्निरिति देवताः। अनुवषट्कारहोमश्च सर्वत्रास्ति। तत्राग्निः स्विष्टकृद्देवता॥

## चमसभक्षणम्

एवमध्वर्युः चमसान् हुत्वा तं तं चमसं तस्मै तस्मै चमसाध्वर्यवे प्रयच्छति। ते भक्षार्थं तान् सदः प्रति नयेयुः। तत्र ये यत्र भक्षणाधिकारिणः ते परस्परमाज्ञाप्य भक्षयेयुः[2] (पिबेयुः) सर्वत्र वषट्कर्ता प्रथमं भक्षयेत्। भक्षणोपयुक्तानां पात्राणां मार्जालीये प्रक्षालनं कर्तव्यम्। ततः ऋत्विजः पाशुकान् पौरोडाशिकांश्च हविश्शेषान् आग्नीध्रीये भक्षयेयुः। ततश्चमसान् प्रपूर्य आयतने सादयेयुः। अत्र चमसेषु ग्रहेषु वा भक्षणेऽधिकारः अधोनिर्दिष्टकारणैः भवति —

---

१ शुक्रग्रहप्रभृत्येव आश्रावणादि। शुक्रग्रहे पुरोऽनुवाक्या नास्ति। केवलं याज्यैव। एवं शस्त्रवत्सु केवलं याज्यैव न पुरोऽनुवाक्येति ज्ञेयम्।

२. नात्र यजमानस्य भक्षणम्।

१. यो यत्र वषट्करोति। २. यो वा होममभिषवं चेत्युभौ करोति। ३. यन्नाम्ना चमसो व्यवह्रियते।

यजमानपत्न्यास्तु न कस्यापि हविषो भक्षणम्। ततोऽच्छावाकचमसाध्वर्युः तदीयं चमसम् इतरचमसवदेव आपूर्य अध्वर्यवे दद्यात्। स च आश्रावणादिकं यथावदनुष्ठाय तं चमसं हुत्वा सशेषं भक्षणाय अच्छावाकाय दद्यात्। स त्वध्वर्यु मनुज्ञाप्य भक्षयेत्। न तेन सह अध्वर्युर्भक्षयेत्॥

ततः पात्रमापूर्य आसाद्य [1]ऋतुग्रहप्रचारमारभेत। तत्रोभयतोमुखं पात्रद्वयं भवति। अध्वर्युप्रतिप्रस्थातारौ कर्तारौ। ताभ्यामेव पर्यायेण होमाः कार्याः। तत्र प्रथमम् अध्वर्युप्रतिप्रस्थातारौ प्रथमद्वितीयग्रहौ युगपद्गृह्णीयाताम्। परिप्लवया द्रोण-कलशादध्वर्युः पात्रान्तरेण तस्मादेव प्रतिप्रस्थाता। एवं गृहीत्वा निष्क्रम्य हविर्धान-मण्डपस्य द्वार्येव तिष्ठेत् प्रतिप्रस्थाता। अध्वर्युराहवनीयदेशं गत्वा आश्रावणादिपूर्वकं सशेषं हुत्वा तत्रैव ( पूर्वशेषविशिष्ट एव पात्रे ) ग्रहान्तरं ग्रहीतुं यदा मण्डपद्वार्या-गच्छति तदा प्रतिप्रस्थाता निर्गत्य आहवनीयं गत्वा आश्रावणादिपूर्वकं स्वं ग्रहं सशेषं जुहुयात्। एवं स यदा मण्डपान्तः प्रविविक्षति तदा अध्वर्युस्सग्रहो निष्क्रामेद्धोम-करणाय। एवमेकस्य निष्क्रमणकालेऽन्यस्य प्रवेशः, तत्प्रवेशकालेऽन्यस्य निष्क्रमणम्, एवं रीत्या ग्रहणहोमा अनुष्ठेयाः। अन्तिमयोस्तु ग्रहयोः सहैव ग्रहणम्। गृहीत्वा, उभावपि निष्क्रम्य, मण्डपस्य द्वारि तिष्ठेताम्। ततः अध्वर्युराहवनीयदेशं गत्वा यथा-वज्जुहुयात्। ततः प्रतिप्रस्थाता गत्वा तथैव कुर्यात्। अत्र द्वादश ऋतुग्रहाः। द्वे एव तु पात्रे। ताभ्यामेव पर्यायेण ग्रहणम्। तत्र—

१. इन्द्रः, मधुः। २. मरुतः, माधवः। ३. त्वष्टा, शुक्रः। ४. अग्निः, शुचिः। ५. इन्द्रः, नभः। ६ मित्रावरुणौ, नभस्यः। ७. द्रविणोदाः, इषः। ८ द्रविणोदाः, ऊर्जः। ९. द्रविणोदाः, सहः। १०. द्रविणोदाः, सहस्यः। ११. अश्विनौ, तपः। १२. अग्निर्गृहपतिः, तपस्यः।

इति क्रमेण देवताः। एकैकस्य द्वे द्वे देवते। ततो भक्षणम्। तदध्वर्युप्रति-प्रस्थात्रोर्द्वयोरेव होत्रकैस्सह। भक्षिताः ग्रहाः चमसाश्च सर्वे अप्रक्षालिता एव पुनस्सोम-रसेन पूरणीयाः। अत्र भक्षणात्पूर्वं होमानन्तरमध्वर्युः स्वपात्रस्थसोमस्य कञ्चिदंशं प्रतिप्रस्थातृपात्रे स्रावयेत्। एवं प्रतिप्रस्थाता अध्वर्युपात्रे स्रावयेत्। ततोऽध्वर्युस्त-स्मिन्नेव पात्रे रसे ऐन्द्राग्नं ग्रहं गृहीत्वा खरे सादयेत्। अनन्तरं प्रतिप्रस्थाता स्वपात्रस्थं सोमं भक्षणार्थं नयेत्। तदनन्तरमेव भक्षः। भक्षितं पात्रं प्रक्षाल्य तद्धस्त आदाय, अध्वर्युः शस्त्रप्रतिगरार्थं सदो मण्डपद्वारं गत्वा तत्र तिष्ठेत्॥

## शस्त्रपाठप्रतिगरादि

तदानीं होता स्वधिष्ण्यस्य समीपे पश्चात् प्राङ्मुख उपविष्ट आज्याख्यं शस्त्र-मारभेत। होत्रा शस्त्रे पठ्यमानेऽध्वर्युः प्रतिगरं पठेत्। तत्र शस्त्रारम्भे—"अध्वर्यो-

---

१. वसन्तादयः ऋतवो यत्र देवताः त ऋतुग्रहाः।

शोंसावो३म्" इति होत्रोच्यमाने "शोंसामोद इव" इति प्रतिगरं ब्रूयात्। तत्तदृचोऽन्ते यदा सप्लुतं प्रणवमुच्चारयति होता तदा "ओं मो३थामोद इव" इति प्रतिगृणीयात्। यदाऽर्धर्चेऽवस्यति होता तदा "ओथामोद इव" इति प्रतिगरं ब्रूयात्। शस्त्रसमाप्तौ "ओ३म्" इत्येव प्रतिगृणीयादध्वर्युः। होता यदा यदा शस्त्राणि पठति तदा तदा तस्य प्रोत्साहनार्थम् अध्वर्योः विशिष्टशब्दोच्चारणं प्रतिगर इत्युच्यते। सः "ओथामोद इव" इत्यादिर्द्रष्टव्यः। तत्र बहिष्पवमाने पूर्वं स्तुते एव आज्यादिशस्त्राणीदानीं पठनीयानि तत्र प्रथममाज्यशस्त्रम्।

## नाराशंसहोमः

होत्रा आज्यशस्त्रे समापिते सत्यध्वर्युः पूर्वगृहीतस्थापितमैन्द्राग्नग्रहं हस्तेनाददीत्। तस्मिन्नेव चमसाध्वर्यवश्चमसानाददीरन्। ततोऽध्वर्युराश्रावणादि कृत्वा होत्रा याज्यान्ते वषट्कार उक्ते ग्रहमग्नौ सशेषं जुहुयात्। तदा चमसाध्वर्यवः स्वांश्चमसान् प्रकम्पयेयुः यथा पात्रचमसस्थसोमबिन्दुराहवनीये पतेत्। तत्र ग्रहहोमे इन्द्राग्नी देवता। चमसेषु ऊमाः पितरो देवता। ततो ग्रहस्य चमसानां च सशेषाणां यथावद्भक्षणम्। पुनरप्याप्यायनं खरे सादनं च। इदानीमेषां चमसानां "नाराशंस" संज्ञा। अत्र चमसानां होमकाले आहवनोयस्योपरि कम्पनमात्रम्, न तु यथावद्धोमः। ततो वैश्वदेवाख्यं ग्रहं शुक्रग्रहोपयुक्ते पात्रे गृहीत्वा प्रथमाज्यस्तोत्रार्थम् उद्गातृगणं प्रेरयेत्। तेन स्तोत्रे समापिते शस्त्रपाटार्थं होतारं प्रेष्य तत्पुरस्तात्तिष्ठन् प्रतिगरं पठेत्। तदिदं[1] "प्रउगशस्त्रम्" इत्युच्यते। तत्समाप्तौ पूर्ववत् ग्रहस्य होमः। चमसानामनुकम्पनमाहवनीयस्योपरि। एतेषामपि नाराशंससंज्ञा। अत्र ग्रहे विश्वे देवा देवताः। चमसेषु ऊमाः पितरः। ततो ग्रहचमसानां भक्षणम्। पूर्वं चमसास्सावशेषा एव भक्षयितव्याः। इदानीं निरवशेषतयेति विशेषः।

## उक्थ्यग्रहप्रचारः

ततस्तान् प्रक्षाल्य खरे स्थापयित्वा उक्थ्यस्थालीतस्तृतीयं भागमुक्थ्यपात्रे गृहीत्वा खरे सादयित्वा चमसांश्च पूरयित्वा द्वितीयाज्यस्तोत्रकरणायोद्गातृगणं प्रेरयेत्। तेन स्तुते स्तोत्रे, मैत्रावरुणं शस्त्रार्थं प्रेष्य तेन शस्त्रे पठ्यमाने पूर्ववत्प्रतिगीर्य शस्त्रे समाप्ते पूर्ववदेव होमं, सर्वभक्षणं, प्रक्षालनं, खरे सादनं च कर्तव्यम्। अयमुक्थ्यप्रथमपर्यायः। ततः पूर्ववदेवोक्थ्यस्थालीतस्तृतीयांशस्य ग्रहणम्, उक्थ्यपात्रे चमसानां पूरणम्, तृतीयाज्यस्तोत्राय प्रवर्तनमुद्गातृगणस्य, तत्समाप्तौ शस्त्रार्थं ब्राह्मणाच्छंसिनः प्रेरणम्, तत्प्रतिगरः, ततो होमः, भक्षणं च ग्रहचमसानाम्, प्रक्षालितानां खरे सादनं

---

१. चत्वार्याज्यशस्त्राणि, एकं प्रउगशस्त्रमिति पञ्च शस्त्राणि प्रातस्सवने तत्र प्रथमस्याज्यशस्त्रस्य प्रउगशस्त्रस्य च कर्ता होता। द्वितीयादीनां त्रयाणामाज्यशस्त्राणां मैत्रावरुणः, ब्राह्मणाच्छंसी, अच्छावाक इति क्रमेण कर्तारः ( शंसितारः ) इति विवेकः।

चेति। अयं द्वितीयः पर्याय उक्थ्यस्य। अत्र ग्रहस्य चमसानां च मित्रावरुणौ देवता। एवमेव तृतीयपर्यायोऽपि। तृतीयपर्याये उक्थ्यस्थालीतस्सर्वस्यापि निरवशेषस्य सोमरसस्य ग्रहणमिति विशेषः। अत्रे-द्राग्नी देवता। शस्त्रकर्ता अच्छावाकः। अनयो-र्द्वितीयतृतीयपर्याययोः ग्रहग्रहणशस्त्रप्रतिगरग्रहहोमेषु कर्ता प्रतिप्रस्थाता। भक्षणान्ते सवनसंस्थाहुतिं हुत्वा आरम्भकाले येन मार्गेण विहारं प्रविष्टास्तेनैव ऋत्विजो बहिर्निर्गच्छेयुः।

## एतावता प्रातस्सवनं समाप्तम्

## अथ माध्यन्दिनं सवनम्

[1]तत्र भगवति भास्वति नभसो मध्यं गते विहारं प्रविश्य माध्यन्दिनसवनकर्म आरभेरन् सयजमाना ऋत्विजः। तत्र प्रथमं महाभिषवः। सोमस्य बन्धनं विस्रस्य, बन्धनवस्त्रं ग्रावस्तुते दत्त्वा, महाभिषवमारभेरन्। तं प्रातस्सवनवदेवर्त्विजो दिगुप-देशनादिपूर्वकं यथावत्कुर्युः। अभिषवे समाप्ते प्रातस्सवनवदेव सवनीयहविर्निर्वापादिक-मामिक्षातद्व्यापारवर्जं कृत्वा सोमरसग्रहणोपयोगिव्यापारेऽभिषुतसोमपावनपूर्वक-धारास्रावणादावारब्धे तस्या धाराया अध्वर्युः ग्रहान् गृह्णीयात्। अत्रेन्द्रवायवादयो द्विदेवत्यग्रहा न विद्यन्ते। एवमृतुग्रहा द्वादश दधिग्रहाश्च नानुष्ठेयाः। शुक्रः, मन्थी, आग्रयणः, उक्थ्यास्त्रयः, मरुत्वतीयौ[2] इत्येतावन्त एव ग्रहाः। ते च धाराया ग्राह्याः। ग्रहणासादनादिव्यापारेष्वनुष्ठितेषु अध्वर्युः, प्रस्तोता, प्रतिहर्ता, उद्गाता, ब्रह्मा, यजमान इति क्रमशः पूर्वपूर्वस्य परः परः कच्छं धृत्वा बहिष्पवमानवदेव माध्यन्दिनपवमान-स्तोत्रकरणाय सदोनामकं मण्डपं प्रसर्पेयुः। सर्वेषु प्रसर्पकेषूपविष्टेष्वेव कच्छविसर्जनं कर्तव्यम्। ततो माध्यन्दिनपवमानस्तोत्रकरणाय अध्वर्युरुद्गातृगणं प्रेरयेत्। समाप्ते स्तोत्रे दधिघर्मयागः, तद्धविर्भक्षणं च। ततस्सवनीयहविषां प्रचार इडाभक्षणान्तः। तदनन्तरं चमसानामुन्नयनं कर्तव्यम्। अत्राच्छावाकचमसमप्यन्ते [3]उन्नयेद्दशमतया। प्रातस्सवने पूर्वं नवैव चमसा आसन्। अत्र त्वयमधिको दशम इति ज्ञेयम्। पूरितानां तेषां शुक्रामन्थिभ्यां ग्रहाभ्यां सह प्रातस्सवनवदेव प्रचारो भक्षणान्तः। पात्रसादनं च। सवनीयहविषामपि तद्वद् भक्षणं तत्सम्बन्धिनामृत्विजाम्।

---

१. आदौ लोकद्वारसाम्नो गानं कर्तव्यम्। तच्च यजमानेनाग्नीध्रीयाग्निसमीपे तस्मिन्नेव च होमः कर्तव्यः।

२. तत्र द्वौ मरुत्वतीयग्रहौ। अध्वर्योरेकः, प्रतिप्रस्थातुरेकः। द्वावपि स्वं स्वं ग्रहं क्रमेण धारातो गृहीत्वा आयतने सादयेताम्।

३. प्रातस्सवने प्रथमतश्चमसोन्नयनकाले नव चमसाः। शुक्रामन्थिग्रहचमसप्रचारानन्तर-मच्छावाकचमसश्च प्रचारितः। अत्र दशापि सहैवेति बोध्यम्।

## दक्षिणादानम्

तत ऋत्विग्भ्यो दक्षिणादानम्। या दक्षिणा सङ्कल्पकाले सङ्कल्पिता तां दद्यात्। सा च—गावः, अश्वः, अश्वतरः, गर्दभाः, अजाः, अवयः, तिलमाषव्रीहियवाः—इत्येवंरूपा। तत्र गावः द्वादशोत्तरं शतं (११२) देयाः। एकोऽश्वः, गर्दभाजावयः त्रयस्त्रयः व्रीह्यादीनामेकैकद्रव्यस्य प्रस्थत्रयम् इति परिमाणं सङ्ख्या च निर्णीते शास्त्रे। सत्यां शक्तौ गजवासोहिरण्यादीनामपि दक्षिणात्वेन दानमुक्तम्। अशक्तौ शतं गावः ततो न्यूना वा त्रितयपर्यन्तं वा अन्तत उक्तम्। ता विभज्य देयाः।

## दक्षिणाविभागः

विभागश्चेत्थम्—देयत्वेन प्रतिज्ञातां समग्रां दक्षिणां प्रथमतः समशश्चतुर्धा विभज्य एकैकस्मा ऋत्विग्गणायैकैकं भागं कल्पयेत्। तमपि भागं समाख्यानुसारेण विभज्य तेभ्यो दद्यात्। तद्यथा—यदि समग्रा दक्षिणा सहस्रं रूप्यकाणि तदा तानि चतुर्धा विभज्य एकैकस्य गणस्य सार्धद्विशतं कल्पयेत्। तं पञ्चविंशतिधा कृत्वा अध्वर्यवे द्वादशांशान्, तदनन्तराय प्रतिप्रस्थात्रे षडंशान्, तदनन्तराय नेष्ट्रे चतुरोंऽशान्, तदनन्तराय उन्नेत्रे त्रीनंशांश्च दद्यात्। एवं च प्रथमस्यर्त्विजो यद्दीयते तदर्धं द्वितीयस्य, प्रथमतृतीयांशोऽनन्तरस्य तृतीयस्य, प्रथमचतुर्थांशः तदनन्तरस्य चतुर्थस्येति फलितम्। एवमेव गणान्तरेऽपि विभागः।

तदिदं स्पष्टीक्रियते—क्रतोस्समग्रदक्षिणा सहस्रम्। तत्रैकस्य गणस्य सार्धं द्विशतम्। तस्य पञ्चविंशतिधा विभागे कृते एकैकस्य भागस्य दश रूप्यकाणि। तत्र द्वादश भागाः विंशत्युत्तरं शतमध्वर्यवे देयाः। षड्भागाः षष्टिः प्रतिप्रस्थात्रे दातव्याः। चत्वारो भागाः नेष्ट्रे चत्वारिंशद्देयाः। त्रयो भागास्त्रिंशत् उन्नेत्रे। एवमेव त्रिष्वप्यन्येषु गणेषु दानम्।

| अध्वर्युगणः | रू. | ब्रह्मगणः | रू. | होतृगणः, | रू. | उद्गातृगणः | रू. |
|---|---|---|---|---|---|---|---|
| अध्वर्युः | १२० | ब्रह्मा | १२० | होता | १२० | उद्गाता | १२० |
| प्रतिप्रस्थाता | ६० | ब्राह्मणाच्छंसी | ६० | मैत्रावरुणः | ६० | प्रस्तोता | ६० |
| नेष्टा | ४० | आग्नीध्रः | ४० | अच्छावाकः | ४० | प्रतिहर्ता | ४० |
| उन्नेता | ३० | पोता | ३० | ग्रावस्तुत् | ३० | सुब्रह्मण्यः | ३० |
| मिलित्वा— | २५० | | २५० | | २५० | | २५० |

एवं सहस्रम् १००० ॥

एतदतिरिक्ततया यजमानः स्वान्यङ्गान्यपि चक्षुःश्रोत्रमनः-प्रभृतीनि वाचैव दत्त्वा ततस्तत्तदुचितमूल्यार्पणेन तानि पुनः प्राप्नुयात्। ततश्चमसाध्वर्युभ्यः, कस्मैचिदत्रिगोत्रोत्पन्नाय, सदसि स्थितेभ्यो दक्षिणार्हेभ्यो द्रष्टृभ्यश्च यथाशक्ति दक्षिणां

दद्यात्। गवादीनां साक्षादेव दाने तान्यविभज्यैवर्त्विजः पूर्वं प्रतिगृह्य वेदेरुत्तरभागं नीत्वा तत्र यथोचितमूल्यद्वारा विभजेरन् ॥

## मरुत्वतीयग्रहप्रचारः

ततो दीक्षासमये गृहीतं कृष्णविषाणं यजमानश्चात्वाले प्रास्येत्। ततोऽध्वर्यु-राग्नीध्रीयेऽग्नौ वैश्वकर्मणाख्यान् पञ्च होमान् जुहुयात्। ततोऽध्वर्युः प्रतिप्रस्थाता च पूर्वं गृहीतासादितौ मरुत्वतीयग्रहावादाय, प्रैषादिकं कृत्वा आहवनीये [1]हुत्वा परस्परं स्वस्वपात्रस्थं सोमरसं विक्षारयेताम्। तस्य भक्षणमकृत्वैवाध्वर्युः स्वपात्रे तृतीयं मरुत्वतीयं गृहीत्वा तमायतने यदा आसादयति तदा प्रतिप्रस्थाता स्वपात्रं भक्षणाय नयेत्। ततो द्वाविमौ भक्षयेताम्। ततश्च मरुत्वतीयशस्त्रार्थं होतारं प्रेष्य तेन तस्मिञ्छस्यमानेऽध्वर्युः पात्रेणैव सह प्रतिगृणीयात्। शस्त्रे परिसमाप्तेऽध्वर्युः मरुत्वतीयं तृतीयं ग्रहमादाय चमसाध्वर्यवश्च चमसानादाय आहवनीयं गत्वा आश्रावणादौ कृते ग्रहं चमसांश्च जुहुयुरनुकम्पयेयुश्च यथाक्रमम्। यथा सोमबिन्दवः आहवनीये पतेयुस्तथा प्रकम्पनं कर्तव्यम्। यतो होमस्थानीयं तत्। तत्र ग्रहे देवता इन्द्रो मरुत्वान्। चमसेषु ऊर्वाः पितरः। चमसा इम इदानीं नाराशंसा इत्युच्यन्ते। ततो ग्रहचमसानां भक्षः। ततश्चमसेषु पुनरापूर्य आयतने स्थापितेष्वध्वर्युर्यस्मिन् पात्रे शुक्रग्रहो गृहीतस्तस्मिन् पात्रे माहेन्द्रं ग्रहं गृहीत्वा खरे सादयित्वा माहेन्द्रसंज्ञकस्य प्रथमपृष्ठस्तोत्रस्य प्रैष-मुद्गातृभ्यो दद्यात्। तैः स्तोत्रे समापिते निष्केवल्यशस्त्रार्थं होत्रे प्रैषं दत्त्वा होत्रा शस्त्रे पठ्यमाने प्रतिगरं गृणंस्तिष्ठेत्। समाप्ते शस्त्रे मरुत्वतीयग्रहवन्माहेन्द्रग्रहस्य होमः। चमसानां तदीयचमसवदेवानुप्रकम्पनम्। तस्मिन्नेव समयेऽतिग्राह्यसंज्ञकानां ग्रहाणामपि होमः कर्तव्यः। तत्र अग्नेयं प्रतिप्रस्थाता, ऐन्द्रं नेष्टा, सौर्यमुन्नेता च गृहीत्वा माहेन्द्रग्रहमनुजुहुयुः। ग्रहे महेन्द्रो देवता। चमसेषु ऊर्वाः पितरः। अतिग्राह्येषु अग्निः, इन्द्रः, सूर्यश्च क्रमेण देवताः। ततः पूर्ववद्भक्षणम्। खरे पात्राणां सादनं च। ततस्त्रय उक्थ्यविग्रहाः। तेषां प्रातस्सवनवदेव अनुष्ठानम्। तत्र सप्तदशस्तोमकानि त्रीणि पृष्ठस्तोत्राणि। तत्तत्पृष्ठसमाप्त्यनन्तरं मैत्रावरुणः प्रथमे, ब्राह्मणाच्छंसी द्वितीये, अच्छावाकस्तृतीये " स्वं स्वं शस्त्रं शंसेयुः पूर्वं माहेन्द्रग्रहकाले एकं पृष्ठस्तोत्रम्। पृष्ठस्तोत्राणि आहत्यचत्वारि। माध्यन्दिनपवमानमेकमिति पञ्च स्तोत्राणि माध्यन्दिनसवने। एवं मरुत्वतीयं निष्केवल्यमिति शस्त्रद्वयं होतुः, मैत्रावरुणादीनां त्रीणि इति शस्त्राण्यपि पञ्च। उक्थ्यानामिन्द्रो देवता। ततः सवनसमाप्तिहोमं कृत्वा सर्वर्त्विजो बहिर्निर्गच्छेयुः ॥

॥ समाप्तं माध्यन्दिनसवनम् ॥

---

१. अत्र पुरोऽनुवाक्या अस्ति।

## अथ तृतीयसवनम्

माध्यन्दिनसवनसमाप्त्यनन्तरं किंचिद्विरम्य सवनमिदमारभेरन्। अस्य "तृतीयसवनम्" इत्येव संज्ञा; न तु सायंसवनमिति। तृतीयसवनमारभमाणास्सर्वे ऋत्विजो विहारं प्रविश्य स्वं स्वं कर्म कर्तुमुद्यता भवेयुः। तदा प्रथमं लोकद्वारसामोत्तरवेदिसमीपे गातव्यं यजमानेन। तद्गत एवाग्नौ होमश्च कर्तव्यस्तेन। ततस्तत्र प्रथममादित्यग्रहो ग्रहीतव्यः। तत्र प्रातस्सवने ऐन्द्रवायवमैत्रावरुणाश्विनग्रहाणां होमानन्तरं तत्तद्ग्रहेष्ववशेषितस्य सोमरसस्य आदित्यस्थाल्यां सम्पातावनयनेन यो रसः स्थापितः, तस्मादादित्यपात्रेण आदित्यग्रहं गृहीत्वा तत्रोपांशुसवनाख्यं ग्रावाणं प्रक्षिप्य तेन तं रसमालोड्य तत्र दधि पयो वा किंचित्प्रक्षिप्य ग्रावाणमुत्क्षिप्य खरे पात्रमसादयित्वैव, आश्रावणप्रत्याश्रावणादौ निष्पन्ने तं जुहुयादादित्यग्रहम्। आदित्याः देवता। ततः प्रातस्सवनवन्महाभिषवः कर्तव्यः। तत्र सवनद्वयेऽभिषुतस्य सोमस्य य आत्तसारः [1]तृणांशः तमेवाभिषुणुयुः। अभिषुत्य पवित्रीकरणकाले मथितं दधि तत्रासिच्य, मेलयित्वा, पूतभृत्यवनीय, पवित्रीकृत्य तस्मादाग्रयणं गृहीत्वा आयतने सादयित्वा धारां विरमयेत्॥

## आर्भवपवमानाय प्रसर्पणं चमसप्रचारश्च

ततो माध्यन्दिनपवमानवत् आर्भवपवमानस्तोत्रार्थं यजमानसहिताः पञ्चर्त्विजः प्रसर्पेयुस्सदः प्रति समन्वारब्धाः। ततस्सदसि उद्गातृभिरार्भवपवमानाख्ये स्तोत्रे सप्तदशस्तोमयुते स्तुते धिष्ण्यान् प्रज्वलय्य, सवनीयपशोर्हृदयाद्यवदानादीडाभक्षणान्तं कृत्वा, सवनीयहवींषि प्रचर्य, चमसानां प्रचारः कर्तव्यः। तत्र चमसाध्वर्युभिः चमसेषून्नीतेषु स्वयमध्वर्युः होतृचमसं गृहीत्वा इतरांश्चमसान् चमसाध्वर्युभिः ग्राहयित्वा आहवनीयदेशं गत्वा आश्रावणाद्यनन्तरं होत्रा याज्यायां पठितायां चमसाध्वर्युभिः सह सकृद्धुत्वा होत्रकाणां मैत्रावरुण-ब्राह्मणाच्छंसि-पोतृ-नेष्टृअच्छावाक-आग्नीध्राणां चमसाध्वर्यून् चमसानां पुनरुन्नयनाय प्रस्थाप्य, अनुवषट्कारकाले स्वयं होतृचमसं, ब्रह्मोद्गातृयजमानचमसान् चमसाध्वर्युद्वारा च हुत्वा, तांश्चमसान् भक्षणार्थं सदः प्रापय्य, उन्नयनार्थं गतेषु चमसेषून्नीय आनीतेषु तान् क्रमशोऽध्वर्युरेव आश्रावणाद्यनन्तरं जुहुयात्। [2]तत्र याज्यां होत्रका एव स्वे स्वे चमसे पठेयुः। ततो भक्षणम्।

---

१. गायत्री द्युलोकात् भूलोकं प्रति सोमलतामाहरत्। आनयनसमये सा सोमं त्रिधा विभज्य, द्वाभ्यां पद्भ्यां द्वौ भागौ भागमेकं मुखेन च गृहीत्वा आनीतवती। मध्येमार्गं मुखस्थलतायाः रसमचूषत्। तेन स नीरसस्सञ्जातः। अत एव अद्यापि तृतीयसवने गृहीतरसशुष्क एव सोम उपयुज्यते इति कथा। See. तै. स. ६. १. ६. ४. ऐत. ब्रा. ५. २. १३. २–३. शत. ब्रा. ३. २. ३. १.

२. अत्र पुरोऽनुवाक्या अस्ति।

पुनः प्रपूरणं चमसानामायतने सादनं च। ततो हविश्शेषात् पुरोडाशात् किञ्चिद्-गृहीत्वा चमसिनः स्वे स्वे चमसे स्वस्वपितृपितामहप्रपितामहानुद्दिश्य प्रक्षिप्य तान् मन्त्रेणोपतिष्ठेरन्।

ततः प्रातस्सवनेऽन्तर्यामग्रहार्थमुपयुक्तेन पात्रेण आग्रयणात् सावित्रं ग्रहं गृहीत्वा आयतनेऽसादयित्वैव आश्रावणादि कृत्वा जुहुयात्। अत्र सविता देवता ततस्तस्मिन्नेव सशेषे पात्रे पूतभृतः वैश्वदेवाख्यं ग्रहं गृहीत्वा आयतने सादयित्वा होतुश्शस्त्रपाठार्थं प्रैषमध्वर्युर्दत्त्वा स्वयं प्रतिगृणन् शस्त्रसमाप्तौ वैश्वदेवग्रहमादाय आश्रावणाद्यनन्तरं जुहुयात्। तदानीं चमसाध्वर्यवश्चमसान् प्रकम्पयेयुः। ते नाराशंसाः। अत्र ग्रहे विश्वे देवाः देवता। चमसेषु काव्याः पितरः। ततो भक्षणम्। अत्र चमसानां सर्वभक्षणम्।

## सौम्यचरुः

ततः सौम्यचरुयागः। अनवस्रावितः तण्डुलपक्व ओदनः "चरुः" इत्युच्यते। तं यागमिष्टिकल्पेनानुष्ठाय तत उपांशुपात्रेण प्रातस्सवनोपयुक्तेन पात्नीवताख्यं ग्रहम् आग्रयणस्थालीतो गृहीत्वा अनासाद्यैव आश्रावणाद्यनन्तरं जुहुयात्। अत्र अग्निः पत्नीवान् देवता। ततस्तदीयभक्षणे निर्वर्तिते आधवनीयपात्रस्थं सर्वं सोमरसं पूत-भृत्युत्पूय ततस्सर्वांश्चमसांश्चमसाध्वर्युभिरुन्नाय्य यज्ञायज्ञियाख्यमग्निष्टोमस्तोत्रमन्तिमम् उद्गातृभिः प्रारम्भयेत् स्तोत्रमिदमेकविंशस्तोमकम्। स्तोत्रस्तवनकाले सर्वे तत्सम्बन्धिनः स्वं शिरोऽवकुण्ठयेयुः। स्तोत्रे समाप्ते होता आग्निमारुताख्यमन्तिमं शस्त्रं शंसेत्। अध्वर्युः प्रतिगिरेत्। शस्त्रस्यान्तिमायामृचि शस्यमानायां प्रतिप्रस्थाता प्रातःसवने चरमगृहीतं ध्रुवग्रहं होतृचमसेऽवनयेत्। ततो होतृचमसमध्वर्युः अन्यांश्चमसांश्चम-साध्वर्यवश्च आदाय यथावज्जुहुयुः अत्र अग्निर्वैश्वानरो मरुतश्च देवताः- ततस्तेषां भक्षणम्। तदनन्तरमवशिष्टपाशुककर्मणामनुष्ठानं परिधिप्रहरणान्तम्। अत्र अध्वर्युर्विरमेत्।

## हारियोजनग्रहप्रचारः

तत उन्नेता आग्रयणपात्रस्थं सर्वं सोमरसं द्रोणकलशेन गृहीत्वा सादनमकृत्वैव यवधानाभिस्संमिश्र्य पात्रं शिरसि निक्षिप्य आश्रावणादौ कृते शिरस्त एव जुहुयात्। ततः सर्वे ऋत्विजो हारियोजनं भक्षयेयुः। ततश्चमसिनः स्वं स्वं चमसमवजिघ्रेयुः। तदेवात्र भक्षणम्, न तु पूर्ववत् प्रत्यक्षभक्षणम्। ततश्चमसिनामाग्नीध्रीये [१]दधिद्रप्स-भक्षणम्। ततः ऋत्विजः पूर्वप्रतिज्ञातं परस्परसख्यं विसृजेयुः। ततः पत्नीसंयाजसमिष्ट-यजुर्होमादिकं सवनीयहविरङ्गकलापं परिसमाप्य प्रायश्चित्तहोमान् हुत्वा सवनसमाप्ति-होमं कुर्यात्। ततो यजमानस्य विष्णुक्रमणादि।

**एतावता तृतीयसवनं समाप्तम्**

---

१. दधिद्रप्सो दध्नोऽत्यल्पोंऽशः। दधि च लौकिकमापणादितो ग्राह्यम्।

## अथ अवभृथेष्टिः

ततः सोमयागोपयुक्तानि सर्वाणि पात्राण्यादाय ( ऐष्टिकपात्राणि विहाय ) औदुम्बर्यां [1]राजासन्द्यां निक्षिप्य तामादाय ऋजीषं च गृहीत्वा सपत्नीको यजमानस्सर्वे च ऋत्विजो यत्रावभृथेष्टिं करिष्यन्ति तज्जलसमीपं गच्छेयुः। तत्रेष्टिद्रव्यम् एककपाल-पुरोडाशं यज्ञशालाग्निष्वेव सज्जीकृत्य गृहीत्वा गच्छेयुः। गमनात्पूर्वं तदङ्गतया आह्वनीये कांश्चन होमान् हुत्वा मध्येमार्गं गमनमन्त्रं जपन्तः साम गायन्तः अवभृथाहं जलं प्राप्नुयुः। तत्र जल एव अवभृथेष्टिं कुर्युः। तत्र अग्नीवरुणौ आज्यभागदेवते। बर्हिःप्रयाजवर्जिताः चत्वारः प्रयाजाः। एवं द्वावनूयाजौ। वरुणः पुरोडाशदेवता। सर्वे होमा जल एव।

तत [2]ऋजीषं प्रोक्ष्य तत् जले प्रक्षिप्य प्रचरण्या निमज्जय्य सोमलिप्तानि[3] सर्वाणि पात्राणि जले प्रक्षिप्य दीक्षाकाले धृतानि योक्त्रमेखलावस्त्रजालकृष्णाजिनानि जले प्रक्षिप्य तत्रैव जले यजमानः पत्नी च स्नायाताम्। तदा परस्परं पृष्ठशोधनं कुरुताम्। तदा सर्वेऽप्यृत्विजः सहैव स्नायुः। तदा अवभृथस्नानार्थमागतानां सर्वेषां शिरसि यजमानोऽञ्जलिना जलमुत्क्षिपेत्। ततस्ते [4]स्नानं कुर्युः इति सम्प्रदायः।

तत उन्नेत्रा यजमानादिषु जलादुत्तारितेषु नूतनमहतं वासः परिदधीयातां यजमानः पत्नी च। ततो यजमान आदित्यमुपस्थाय पुनर्देवयजनमागत्य शालामुखीयेऽग्नावेव उदयनीयेष्टिमनुतिष्ठेत्। सा प्रायणीयेष्टिवदेव। परं प्रायणीयेष्ट्यां या याज्याः ता उदयनीयायां पुरोऽनुवाक्याः। याश्च तत्र पुरोऽनुवाक्यास्ता अत्र याज्याः। देवतास्तु ता एव। द्रव्याण्यपि तान्येव। किं च प्रायणीयार्थं यस्मिन् पात्रे चरुः पक्वः तदप्रक्षाल्यैव पूर्वं स्थापितम्। तत्रैवोदयनीयार्थं चरुं पचेत्। इत्येतावान् विशेषः। तत आनुबन्ध्य-पशुयागः। तत्र गौर्वन्ध्या पशुत्वेन विहिता। परं कलौ गोवधो निषिद्ध इति कृत्वा तद्विकल्पतया बह्वृचब्राह्मणे विहित आमिक्षायाग एवेदानीमनुष्ठीयते। स इष्टिरूप इति कृत्वा दर्शान्तर्गतेन्द्रयागवदनुष्ठेयः। मित्रावरुणौ देवता। आमिक्षासम्पादनप्रकारः चातुर्मास्येषु प्रथमे पर्वण्युक्तः। [5]तामिडान्तां समग्रां वा परिसमाप्य यजमानो वेदेर्दक्षिणभागे केशश्मश्रुनखलोमानि वापयित्वा स्नात्वा देविकासंज्ञकाः–धाता, अनुमतिः, राका, सिनीवाली, कुहूः इति पञ्च देवताः इष्टिकल्पेनाज्येनेष्ट्वा, प्रथमगार्हपत्य-

---

१ यागार्थं क्रीतस्सोमो यागात् पूर्वं यत्र स्थापित आसीत्, सा राजासन्दी।

२. निष्पीड्य गृहीतरसं निस्सारं सोममित्यर्थः।

३. अभिषवग्रहणहोमादिकाले येषु येषु पात्रेषु सोमरसलेपोऽभवत्, तानि सर्वाणि पात्राणि।

४. अवभृथस्नानमिदम् अतीव पुण्यप्रदं सर्वेषां व्याध्यादिनिवर्तकं चेति शिष्टाः।

५. समग्रानुष्ठानपक्षे वाजिनयागोऽपि वैश्वदेवपर्ववत्कर्तव्यः। इडान्तपक्षे न।

मरण्योस्समारोप्य, गृहमागत्य, अरणी मथित्वा, अग्नीन् विहृत्य तत्रोदवसानीयाख्या-मिष्टिम् अष्टाकपालपुरोडाशद्रव्यकाम्, तत्स्थाने विष्णुदेवताकामेकामाहुतिं वा कृत्वा अनन्तरं रात्रावप्यग्निहोत्रमारभ्य सायमग्निहोत्रं कुर्यात्। उदिते प्रातरग्निहोत्रमनु-तिष्ठेत्। आगामिन्यां पूर्णिमायां दर्शपूर्णमासावारभेत यदि सोमपूर्वाधानी स्यात्। एवं समाप्तस्सोमयागोऽग्निष्टोमसंस्थः प्रथमः।

## उक्थ्यसंस्था द्वितीया

उक्थ्यसंस्थाको यदि स्यात् क्रतुः, तत्र प्रातस्सवनमाध्यन्दिनसवनयोर्न विशे-षोऽस्ति कश्चन। आदौ सङ्कल्पे सवनीयपशौ परं कियांश्चन विशेषः। 'उक्थ्येन यक्ष्ये' इति सङ्कल्पः। सवनीयपशुर्द्वितीयः ऐन्द्राग्न आग्नेयेन सह। सोमक्रयणकालेऽधिकस्सोम उन्मातव्यः। विशेषेणानेन सह प्रकृतिवन्माध्यन्दिनसवनान्तं यावदनुष्ठाय तृतीयसव-नारम्भे चमसगणत्रयपर्याप्तम् ऋजीषमभिषुत्य सोमरसं सम्पादयेत्। तत्र प्रकृतिवद्धारां स्रावयित्वा तृतीयसवनीयाग्रयणहोमोत्तरकालं धाराया एव त्रीनुक्थ्यग्रहान् गृहीत्वा आयतने सादयेत्। ततोऽग्निष्टोमसंस्थावदेव क्रमेण कर्माण्यनुतिष्ठन्, अग्निष्टोमस्तोत्र-सम्बन्धिचमसगणप्रचारानन्तरम् उक्थ्यग्रहप्रचारं कुर्यात्॥

तत्रादौ चमसोन्नयनार्थं चमसाध्वर्यून् प्रेष्य, तेषु चमसानापूर्यागतेषु, अध्वर्युः उक्थ्यस्तोत्रार्थम् उद्गातॄन् प्रेष्य तैर्यथावत्स्तुत्वा स्तोत्रे परिसमापिते मैत्रावरुणं शस्त्र-शंसनार्थमभ्यर्थ्य, स्वयं च प्रतिगीर्य, तेन शस्त्रे समापिते चमसहस्तैश्चमसाध्वर्युभिस्सह प्रथममुक्थ्यग्रहमादाय आहवनीयं गत्वा श्रावणादिपूर्वकं हुत्वा भक्षयेत्। ततो द्वितीय तृतीयावपि उक्थ्यग्रहावेवमेव चमसैस्सह प्रचरेत्। तत्र त्रिष्वपि पर्यायेषु स्तोतार उद्गातारस्त एव। शस्त्रेषु परं प्रथमे पर्याये मैत्रावरुणः, द्वितीये ब्राह्मणाच्छंसी, तृतीयेऽ-च्छावाकश्च शंसितारो भवेयुः। प्रथमे उक्थ्यग्रहे इन्द्रावरुणौ, द्वितीये इन्द्राबृहस्पती, तृतीये इन्द्राविष्णू च देवताः। एवं चोक्थ्यक्रतोः त्रीण्युक्थ्यस्तोत्राणि त्रीणि च शस्त्राण्यधिकानि। तानि चान्ते योजनीयानीत्येतावान् विशेषः। अन्यत्सर्वं प्रकृतिवत्॥

## षोडशिसंस्था तृतीया

यदि स्यात् षोडशिसंस्थाकः क्रतुः तदा प्रातस्सवने सर्वधाराग्रहाणामन्ते चतुरश्रे ऊर्ध्वपात्रे षोडश्याख्यं ग्रहं गृहीत्वा खरे आसादयेत्। पशुरत्र मेषस्तृतीय ऐन्द्रः पूर्वाभ्यामाग्नेयैन्द्राग्नाभ्यां सह। तृतीयसवने उक्थ्यग्रहचमसप्रचारानन्तरं षोडश्यर्थां-श्चमसानुन्नीय सूर्यस्यार्धास्तसमये षोडशिस्तोत्रमारम्भयेदध्वर्युः। स्तोत्रे समाप्ते शस्त्रम्। ततस्तद्ग्रहचमसप्रचारः। अवशिष्टानि कार्याणि प्रकृतिवत्। उक्थ्यपर्यन्तं पञ्चदश स्तोत्राणि शस्त्राणि चेत्युक्तम्। अत्राधिकमेकं शस्त्रं स्तोत्रं च वर्धते। तच्च षोडशम्। तत्सम्बन्धाद्ग्रहः षोडशी। तत्सम्बन्धाच्च क्रतुरपि षोडशीति व्यवह्रियते। अतएवमेव निर्वचनमुक्तम्॥

## अतिरात्रसंस्था चतुर्थी

अतिरात्रसंस्थाके क्रतौ सोमक्रयकाले बहुलं सोमं क्रीत्वा मित्वा च स्थापयेत्। पूर्वोक्तैः ( षोडशिन्युक्तैः ) पशुभिस्त्रिभिस्सह मेषो चतुर्थो सरस्वतीदेवताका। तृतीय-सवनीयाभिषवकाल एव तत्पर्याप्तमृजोषमभिषुत्य पूतभृति रसमापूर्य स्थापयेत्। षोडशिग्रहप्रचारानन्तरं होतृचमसमुख्यान् दशापि चमसान् उन्नीय प्रथमे रात्रिस्तोत्र-पर्याये प्रथमं स्तोत्रं स्तावयेत्। समाप्ते तस्मिन् होता प्रथमपर्याये प्रथमं शस्त्रं पठेत्। तत्समाप्तावध्वर्युः होतृचमसं चमसाध्वर्यवश्च अन्यांश्चमसानादाय आहवनीये हुत्वा भक्षक्रमेण भक्षयेयुः। अत्र वषट्कर्ता होता॥

ततो मैत्रावरुणचमसं प्रथमं कृत्वा चमसानुन्नाय्य द्वितीये स्तोत्रे स्तुते, मैत्राव-रुणेन शस्त्रे शस्तेऽध्वर्य्वादयः पूर्ववद्धुत्वा भक्षयेयुः। तदिदं गणद्वयमध्वर्युः कुर्यात्। अनन्तरं गणद्वयं प्रतिप्रस्थातृकर्तृकम्। अध्वर्युणा यत्कर्तव्यं तत्प्रतिप्रस्थाता कुर्यात्। अत्र ब्राह्मणाच्छंसिचमसं मुख्यं कृत्वा प्रचारः। यस्य चमसो मुख्यो भवति स एव तत्र वषट्कर्ता। अयं प्रथमः पर्यायः। एवमेव पर्यायद्वयं पुनरावर्तयेयुः। एवमेकस्मिन् पर्याये चत्वारि स्तोत्राणि तावन्ति शस्त्राणि चेति त्रिष्वपि पर्यायेषु मिलित्वा द्वादश स्तोत्राणि शस्त्राणि च भवन्ति। इम एव त्रयो रात्रिपर्याया इत्युच्यन्ते। रात्रावेव स्तूयमानत्वादेषां रात्रिस्तोत्राणीति संज्ञा। तेषां पर्यायो रात्रिपर्याय इति। षोडशि-ग्रहानन्तरं ग्रहो नास्ति, किं तु चमसा एव। अत्र सर्वेषां चमसगणानामिन्द्र एव देवता॥

एवं पर्यायेषु समाप्तेषु प्रतिप्रस्थाता अश्विदेवताकं द्विकपालं पुरोडाशं व्रीह्यानयन-प्रोक्षणावहननपेषणादिपूर्वकं श्रपयित्वा वेद्यामासादयेत्। ततोऽध्वर्युर्होतृचमसमुख्यां-श्चमसानुन्नीय सन्धिस्तोत्रमारम्भयेत्। समाप्ते तस्मिन् होता आश्विनशस्त्रं प्रारभेत। तत्सूर्योदयानन्तरमेव समापयीत। ततः पूर्वं शस्त्रसमाप्तौ याः काश्चिदृचः शंसन्नेव सूर्योदयं प्रतीक्षेत। उदित एव सूर्ये शस्त्रस्यान्तिमामृचं पठेत्। उदयानन्तरं समाप्ते शस्त्रे, अध्वर्युर्होतृचमसं चमसाध्वर्यवश्चान्यांश्चमसान् गृहीत्वा आश्रावणाद्यनन्तरं जुहुयुः। अस्मिन्नेव समये प्रतिप्रस्थाता पूर्वसंपादितमाश्विनपुरोडाशं जुहुयात्। अत्र सर्वेषां चमसानां पुरोडाशस्य च अश्विनौ देवता। समग्रस्यैव पुरोडाशस्य होमो न अवदानादि कृत्वेति विशेषः। ततश्चमसभक्षणम्। अत्र होता वषट्कर्ता। अवशिष्टं प्रकृतिवत्समाप्य अवभृथं कुर्यात्। सर्वत्र अवभृथानन्तरम् उदयनीयेष्टिः, अनूबन्ध्यास्थाने मैत्राव-रुण्यामिक्षा, उदवसानीया च प्रकृतिवदेवेति॥

एवं चतसृणां सोमसंस्थानां स्वरूपम्। तच्च संक्षेपेण निरूपितम्। एताभ्य एव चतसृभ्यस्सोमसंस्थाभ्यो ग्रहचमसस्तोत्राणामावापोद्वापादिना अन्यास्तिस्रस्संस्थाः प्रसूताः। ताश्च अत्यग्निष्टोम-वाजपेय-अप्तोर्यामनाम्ना व्यवहारं भजन्ते।

## अत्यग्निष्टोमसंस्था पञ्चमी

तत्र, अग्निष्टोमस्तोत्रानन्तरम् उक्थ्यस्तोत्राणि त्रीण्यकृत्वा षोडशिस्तोत्रशस्त्रादि-प्रचारो यत्र क्रियते सा अत्यग्निष्टोमसंस्थेत्युच्यते। एवं च अग्निष्टोम एव तदुत्तरं

षोडशिग्रहचमसस्तोत्रादीनामनुष्ठाने सा अग्निष्टोमसंस्थैव संस्थान्तरं भजत इति फलितम्। अत्यग्निष्टोमसंस्थायामस्यां क्षत्रिय एवाधिकारी न ब्राह्मणवैश्याविति केचित् ब्रुवते। परमाश्वलायनादिभिः त्रैवर्णिककर्तृकसंस्थामध्येऽस्या अपि पाठात् तयोरप्यत्राधिकारं मन्वाना याज्ञिकास्तथैवानुतिष्ठन्ति।

## वाजपेयसंस्था षष्ठी

वाजपेयसंस्थायां प्रातर्माध्यन्दिनसवने अग्निष्टोमवदेव। तृतीयसवनेऽपि षोडशिग्रहस्तोत्रान्तं षोडशिवदेव। तदनन्तरं वाजपेयसंज्ञकमेकं स्तोत्रम्। एकश्चमसगणो होतृचमसमुख्यः। स्तोत्रं च सप्तदशस्तोमकम्। शस्त्रं होतुरेव। अयं संस्थान्तर्गतः संस्थास्वेव गण्यते। अतस्संस्थावाजपेय इत्यपि व्यवहारोऽस्य। नायमापस्तम्बबोधायनादिभिर्विहितः न वा याजुषीषु शाखासु विधानमस्य दृश्यते। ताण्ड्यब्राह्मणे छन्दोगसूत्रे च अयमेव विहित इति कृत्वा केचिद्याज्ञिका अनुतिष्ठन्ति। तैत्तिरीयाद्युक्तो वाजपेय इतो भिन्नः। तत्र सप्तदश दीक्षाः, तिस्र उपसदः एका सुत्या। सप्तदश प्राजापत्याः सवनीयपशवः। सप्तदशारत्निर्यूपः। तं सप्तदशभिर्वासोभिर्वेष्टयेत्। सप्तदश सोमग्रहाः प्रजापतिदेवताकाः। तथा सुराग्रहा अपि सप्तदश। इदानीं याज्ञिकाः सुराग्रहस्थाने पयोग्रहाननुतिष्ठन्ति। सुत्यादिने सर्व ऋत्विजो हिरण्यमाला धारयेयुः। ऋत्विग्भ्यः सप्तदश सप्तदश रथाश्वागजशकटदासीदासनिष्कगोऽजाविदुन्दुभीनां दक्षिणात्वेन दद्युः। सवनीयपशुकाले प्राजापत्यैस्सह क्रतुपशूनपि पञ्चोपाकृत्य पर्यग्निकरणान्तं कृत्वा प्रथमतश्चतुरः क्रतुपशूनुपाकृत्य वपान्तं कृत्वा विरम्य ब्रह्मसामकालेऽवशिष्टैः पशुभिः प्रचरेत्। ततः सप्तदशशरावपरिमितनैवारचरुं निरूप्य तेन प्रचरेत्। सर्वमन्यत्प्रकृतिवत्। एष आप्तो वाजपेयः इतोऽप्यन्यः कुरुवाजपेयः कश्चिदस्ति। तस्याङ्गेषु बह्वस्ति वैलक्षण्यम्। तत्सूत्रादितोऽवगन्तव्यम्।

॥ इति वाजपेयः ॥

## अप्तोर्यामसंस्था सप्तमी

अतिरात्रसंस्थावत् रात्रिस्तोत्राणि सन्धिस्तोत्रं च यथावदनुष्ठाय तदनन्तरं चत्वारि स्तोत्राणि अधिकतया यत्रानुष्ठीयते सा अप्तोर्यामसंस्था। अप्तोर्यामशब्दव्युत्पत्तिः श्रुतावेवं वर्णिता – पुरा कदाचित् प्रजापतिः पशूनसृजत्। सृष्टास्ते ततोऽपगताः। ताननेन क्रतुना आप्नोत्। यस्मादाप्नोत् तस्मादप्तोर्यामत्वमिति। अप्तोः प्राप्तः यामो यज्ञः अप्तोर्याम इति। एवं च सन्धिस्तोत्रान्तम् एकोनत्रिंशतं स्तोत्राण्यनुष्ठाय तदनन्तरं चत्वारि स्तोत्राणि तदर्थं चत्वारश्चमसगणा अप्यनुष्ठेयाः। तेप्यतिरात्रवदेव प्रथमद्वितीयगणयोरध्वर्युः तृतीयचतुर्थयोः प्रतिप्रस्थाता च कर्तारौ। इयमप्तोर्यामसंस्थेत्युच्यते।

एवं सप्तसंस्थाकज्योतिष्टोमस्वरूपे संक्षेपेण प्रदर्शिते–इदमत्रावगन्तव्यम्, यदग्निष्टोमसंस्थाकज्योतिष्टोमः सर्वसोमयागानां प्रकृतिः। उक्थ्यादिसंस्थाकज्योतिष्टोमस्यापि प्रकृतिरिति। अर्थात् योऽतिरात्रसंस्थाको विकृतियागो विहितः, सोऽग्निष्टोमोक्थ्यषोडशिसंस्था अनुष्ठायैवानुष्ठेयः। इमं क्रममवलम्ब्यैव सूत्रकारः एकादशाध्यायान्तं ज्योतिष्टोमं प्रतिपाद्यानन्तरमध्यायेषु द्वादशाह-गवामयनसत्रादीन् निरूपयति। तत्र द्वादशाहोऽहीनात्मकस्सत्रात्मकश्च परिगणितः। अहीनत्वेनाहीनेषु सत्रत्वेन सत्रेषु च द्वादशाहो धर्मान् प्रापयति। सत्रेषु गवामयनसत्रं सत्रान्तराणां प्रकृतिभूतम्। सर्वत्रापूर्वत्वेन विहितैरङ्गैरसह प्रकृतितः प्राप्ताङ्गानामनुष्ठानम्। एवं नैकविधानि कर्माण्यनुतिष्ठन्तः प्राच्योदेशस्य गौरवं समेधयन्तिस्म। न केवलं गौरवान्वितो देशः, क्षेमसुभिक्षश्चासीत्। यदैव प्रभृति कर्मानुष्ठानपरम्पराया अवनतिरुदजायत ततः प्रभृति देशस्य क्षीणता समजायत। सम्प्रति तादृशः परिलोपो विलोक्यते, सूत्रभाष्यारूढान्विषयानप्यवगन्तुं विद्वत्सु विरलाः, अनुष्ठानेकथैव नोदेति। यष्टारो याजकाश्चाङ्गुलिमेया एव दृश्यन्ते।

श्रौतविषयेषु ग्रन्थारूढतया प्रकाशितेषु कालान्तरे तानवगत्यानुष्ठातुमुत्पत्स्येत इति धिया कर्कभाष्यसहितकात्यायनश्रौतसूत्रस्य प्रकाशनं स्थाने श्रीलालबहादुरशास्त्रिविद्यापीठप्रकाशनविभागेन स्वीकृतम्। तत्र विशेषेण डॉ० मण्डनमिश्र एवंविधेषु कार्येषु दत्तचित्त इति प्रसीदामि। परिणते वयसि नैकविधैरामयैः पीडामनुभवन्तमपि मामस्मिन् कार्ये न्ययूयुजन्मण्डनमिश्रः। तदीयप्रार्थनामङ्गीकृत्य कार्यसमाप्त्यर्थं मदन्तेवासिनं श्रीविद्याधरद्विवेदिनं नियुज्य महान्तमिमं ग्रन्थं भागद्वयेन समपादयम्। 'प्रूफ़' इत्यस्य संशोधने श्रीविद्याधरः महदुपकृतवानिति विनीताय तस्मै बह्वीराशिषो वितरामि। वार्द्धक्ये वर्तमानापि सर्वाणि गृहकार्याणि संसाध्यन्ती, पथ्यौषधदानादिना माञ्च परिचरन्ती मद्गृहिणी मातृकासंवादादिकार्येषु सुभृशमुपकृतवतीति तां परिपूर्णसर्वविधमनोरथां विधातुं मदाराध्यदेवतां स्तौमि। अस्य ग्रन्थस्य मुद्रणे श्रीप्राणलालाचार्यः आत्मीयं कार्यं मत्वा ग्रन्थमिमं मुद्राप्य समये कार्यमिदं समापयामासेति तं धन्यवादशतैः संवर्द्धयामि।

वेदमीमांसानुसन्धानकेन्द्रम् | इति विदुषामाश्रवः
वाराणसी, २५-३-८३ | पट्टाभिरामशास्त्री

# षष्ठोऽध्यायः

१

श्रुत्यनुकरणकारिणाऽऽचार्येण चातुर्मास्यान्यनुविहितानि। इदानीं श्रुतिमन्त्रपाठावसरप्राप्तो ज्योतिष्टोमः। तं प्रोत्सार्य हविर्यज्ञत्वसामान्यान्मित्रविन्दाऽनुविहिता। हविर्यज्ञत्वसामान्यादेव च इदानीं निरूढपशुबन्धोऽनुविधेयः। हविर्यज्ञत्वसामान्यं च "हविर्यज्ञविधो ह वा अन्यः पशुबन्धः सर्वविधोऽन्य" इति श्रुतत्वात्।

अस्य च प्राणिसाधनकत्वसामान्यादग्नीषोमीयविध्यन्तग्राहकत्वम्। अग्नीषोमीये हि धर्माणां विशसनादीनां विहितत्वात्, इह चाविधानात्। तथा च विशसनादीनग्नीषोमीयात्प्राप्ताननुवदति—"तस्माद् पशुं संज्ञप्तं ब्रूयाच्छेतां नु मुहूर्त्तम्" इति। तथा च तत एव यूपपरिप्राप्तौ सत्यां जात्यन्तरविधानम्—"तस्मात्पालाशमेव यूपं कुर्वीत" इति। तेन निरूढपशुबन्धमूरीकृत्य अग्नीषोमीयधर्मानुकथनं क्रियते। अग्नीषोमीयधर्माणां हि सौमिकैर्धर्मैरत्यन्तव्यतिषङ्गादिह धर्मानुकथनं युक्तम्। तत्रातिदेशेन धर्मान्वक्ष्यति।

अत्र च केश्चित्सौत्रामणीपशुषु निरूढप्रकृतित्वमिष्यते। तत्पुनर्नातीव युक्तरूपम्। येन न हि निरूढः प्रकृतिभूतः। तेनापि ह्यग्नीषोमीयादेव धर्मा गृहीताः। न च भिक्षुको भिक्षुकाद्याचते इति। अतस्तेऽप्यग्नीषोमीयविध्यन्तग्राहका एव। न हि तेष्वानुमानिकवचनापवादत्वेन प्रत्यक्षशिष्टं वचनं नाम वा विद्यते। यथा "वैश्वदेवधर्माश्चातुर्मास्येषु" "सोमाश्चावभृथे" इति च। तस्मादग्नीषोमीयप्रकृतित्वमेव तेष्वपीति।

अग्नीषोमीयप्रकृतित्वे च सति अन्वारम्भणीया न भवति। आरम्भनिमित्ता हि सा। न चाग्नीषोमीयस्यारम्भोऽस्ति। तेन पैतृकरिक्थन्यायेन अग्नीषोमीयेऽभावादिहापि न भवति। ननु च दर्शपूर्णमासप्रकृतित्वेनान्वारभ्यणीया प्राप्ता, तत्र अग्नीषोमीये पृथगारम्भाभावान्न क्रियते। निरूढादिषु तु पृथगारम्भस्य विद्यमानत्वादस्त्वन्वारम्भणीयेति। यथाऽन्वाहार्यो दर्शपौर्णमासप्रकृतित्वेनाग्नीषोमीये प्राप्तः सौमिक्या दक्षिणया निवर्त्तितः। अतस्तद्विकारेषु यत्र दक्षिणाम्नानं नास्ति तत्र प्रवर्त्तते, एवमन्वारम्भणीयाऽपीति। नैतद्युक्तम्। अग्नीषोमीये हि आनत्यंशेन प्रवृत्तोऽन्वाहार्यो गवां शतेन निवर्तितः, तद्विकारेषु तु अनुवर्त्तमानः केन निवार्यते। अन्वारम्भणीया पुनर्न केनचिन्निवर्त्यते, आरम्भनिमित्तत्वात्। तदभावाच्चाग्नीषोमीयस्यानङ्गमन्वारम्भणीया। अतस्तद्विकारेष्वप्रवृत्तिरिष्यत इत्यलमतिप्रसङ्गेन।

प्रकृतमिदानीमभिधीयते—

## पशिवज्या संवत्सरे संवत्सरे प्रावृषि ॥ १ ॥

कर्त्तव्येति सूत्रशेषः। पशुना इज्या पशिवज्या। सा च प्रतिसंवत्सरं कर्त्तव्येति। तेन संवत्सरे संवत्सरे इत्युक्तम्। नित्यत्वं हि परिभाषायामुक्तमेव "दाक्षायणाग्रयणपशुषु प्रवृत्तेः" इति। अपि चाह—"तं वै संवत्सरो नानीजानमतीयात्" इति। सा च प्रावृषि। प्रावृट्शब्देन वर्षा उच्यन्ते। "तेन सुयवसे यजेत" इति श्रुतेः। सुयवसाश्च वर्षाः(१) ॥१॥

## आवृत्तिमुखयोर्वा ॥ २ ॥

पशिवज्या भवति, वा प्रावृषि। आवृत्तिशब्देन उदगयनदक्षिणायने उच्येते। तयोर्मुखमावृत्तिमुखम, प्रथममहस्तत्र कर्त्तव्या। न पौर्णमास्यमावास्ये अपेक्ष्येते। 'संवत्सरे संवत्सरे' इति चोक्तत्वादेकत्र क्रिया, नोभयोरपीति ॥ २ ॥

## गृहेषु ॥ ३ ॥

देवयजनागारेऽग्नीषोमीयस्य दृष्टत्वादिहापि तन्मा भूदिति गृहेष्वित्युच्यते। "तेन गृहेषु यजेत" इति वचनात्।

अपरे त्वयमनुवाद इति मन्यन्ते। न ह्युदवसानमग्नीषोमीयार्थम्, ज्योतिष्टोमप्रकरणे विधानात्। तादर्थ्याच्च प्रासङ्गिकमग्नीषोमीयस्य। एवं च सति न्यायसूत्रमेवैतद् गृहेष्विति।

यद्येवं समारोपोऽपि प्रकरणसमधीतत्वाद् ज्योतिष्टोमार्थ एव, प्रासङ्गिकोऽग्नीषोमीये इति पश्वन्तरेषु न प्रवर्त्तते। नैतदेवम्। समारोपो ह्यग्निसंस्कारः। अग्नेश्चाङ्गप्रधानार्थता। "यदाहवनीये जुहोति" इति वचनात्। तस्मात्प्रवर्त्तते एव समारोपः। अत एव चोत्तरवेदिः सम्भाराश्च प्रवर्त्तन्ते ॥ ३ ॥

## यूपाहुतिं जुहोति चतुर्गृहीतꣳ स्रुवेण वोरु व्विष्णविति॥४॥

"स यदि स्रुचा जुहोति चतुर्गृहीतमाज्यं गृहीत्वा जुहोति, यद्यु स्रुवेण स्रुवेणैवोपहत्य जुहोति" इति वचनाद्विकल्पः। इयं च यूपाहुतिरग्नीषोमीये यूपार्था दृष्टा (२) "यूपं वक्ष्यन्वैष्णव्यर्चा जुहोति" इति। तत्र च ब्रह्मणा कृताकृतप्रत्यवेक्षणं कृतम, इहापि ब्रह्मवरणोत्तरकालतैव गम्यते ॥ ४ ॥

(१) स चर्तुः सर्वत्र चान्द्रमानेन ग्रहीतव्यः, तदभावे सौरः। तथाच स्मरणम्—"श्रौतस्मार्तक्रियाः सर्वाः कुर्याच्चान्द्रेषु चर्तुषु। तदलाभे तु सौरेषु" इति ॥

(२) तेन "खलेवाली यूपो भवति" इत्यत्र न भवति, लुप्तार्थत्वात्। यूपं छेत्स्यता होतव्यमिति च्छेदनार्थो होमः, न च खलेवाल्यां छेदनमस्तीति।

## आज्यशेषमादाय सतत्त्वा गच्छति यूपम् ॥ ५ ॥

"यदाज्यं परिशिष्टं भवति" इति वचनात् । वक्ष्यत्युपरिष्टात्-"यूपान्ते वाऽग्निं मथित्वा" इति । अतश्च विकल्पोऽयम् ॥ ५ ॥

## अभिमृशत्यत्यन्यानिति ॥ ६ ॥

यूपमभिमृशत्यनेन मन्त्रेण ॥ ६ ॥

## प्राङ्तिष्ठन्नभिमन्त्रयते वा ॥ ७ ॥

अनेनैव मन्त्रेणेति । स चायं तुल्यशाखत्वाद्विकल्पः ॥ ७ ॥

## पालाशं बहुलपर्णमशुष्काग्रमूर्ध्वसकलशाखं मध्याग्रोपनतमव्रणम् ॥ ८ ॥

निरूढे हि श्रूयते-"तस्मात्पालाशमेव यूपं कुर्वीत" इति । मध्याग्रोपनतत्वं च निरूढे एव । तत्रैव पाठात्—"अथ य एष आनत उपरिष्टादुपनतो मध्य" इति । अन्यत्रानियमः ॥ ८ ॥

## अभावे खदिरबिल्वरौहितकाव् ॥ ९ ॥

पलाशाभावे खादिरादयो भवन्ति ॥ ९ ॥

## खदिराभावे सोम इतराव् ॥ १० ॥

ज्योतिष्टोमे खदिराभावे बैल्वान् रौहितकान्वा कुर्यात् । पालाशस्तु निरूढे एवेति सम्प्रदायः । खदिराभावे इतरानिति बहुवचनमुच्चारणार्थम् ; यूपव्यक्तिभेदापेक्षं वा ॥ १० ॥

## स्रुवेणोपस्पृशति विष्णवे त्वेति ॥ ११ ॥

दृष्टार्थत्वाद्यस्मिन्प्रदेशे च्छेदनं तत्रैवोपस्पर्शनम् ॥ ११ ॥

## ओषध इति कुशतरुणं तिरस्कृत्य स्वधित इति परशुना प्रहरति ॥ १२ ॥

"ओषधे" इत्यनेन मन्त्रेण तृणमन्तर्द्धाय "स्वधिते" इत्यनेन मन्त्रेण परशुना प्रहरति ॥ १२ ॥

## प्रथमशकलं निदधाति ॥ १३ ॥

कार्यार्थम् ॥ १३ ॥

## अनन्तस्तम्भं वृश्चति ॥ १४ ॥

यथाऽक्षस्योपस्तम्भः स्थाणुर्न भवति तथा च्छिद्यते ॥ १४ ॥

## एकजम् ॥ १५ ॥

एक एव यो जातः ॥ १५ ॥

## द्यां मालेखीरिति पतन्तमभिमन्त्रयते ॥ १६ ॥

यूपम् ॥ १६ ॥

## न दक्षिणा पतेत् ॥ १७ ॥

स च न दक्षिणा पतेत् ॥ १७ ॥

## अयं हि त्वेति शोधनम् ॥ १८ ॥

कुत एतत् ? मन्त्रलिङ्गात्—"अयं हि त्वा स्वधितिस्तेतिजानः प्रणिनाय" इति ॥ १८ ॥

## अभिमन्त्रणशेषो वा विशेषोपदेशात् ॥ १९ ॥

वाशब्दः पक्षव्यावृत्तौ। "अयं हि त्वा" इत्यभिमन्त्रणशेष एव भवति, न शोधने। कुत एतत् ? विशेषोपदेशात्। "तं प्रच्यवमानमनुमन्त्रयते द्यां मा लेखीः" इति। मन्त्राणां चाविधायकत्वात् ॥ १९ ॥

## अतस्त्वमित्याव्रश्चने जुहोति ॥ २० ॥

आव्रश्चनं चापादानसाधनत्वेन स्थाणुरभिप्रेतः। "अथाव्रश्चनमभिजुहोति" इति श्रुतत्वात् ॥ २० ॥

## यूपे वा तत्संस्कारात् ॥ २१ ॥

यूपे वा जुहोति, न स्थाणौ। कुत एतत् ? तत्संस्कारात्। यूपस्य हि संस्काराभिप्रवृत्तेः ॥ २१ ॥

## स्थाणौ श्रुतेश्च ॥ २२ ॥

स्थाणौ वा जुहोति न यूपे। कुत एतत् ? श्रुतेः। "अथाव्रश्चनमभिजुहोति" इति प्रकृत्याह " नेदतो नाष्ट्रा रक्षांᳪस्यनूत्तिष्ठानिति वज्रो वा आज्यं तद्वज्रेणैवैतन्नाष्ट्रा

रक्षा ँ स्यवबाधते" इति श्रुतेः। चशब्दान्मन्त्रवर्णाच्च-"अतस्त्वं देव वनस्पते शतवल्शो विरोह" इति। यस्त्वं मया वृक्णः स शतशाखो विरोहेति मन्त्रवर्णेन स्थाणुरेवाभिधीयत इति। स्थाणावपि च होमे क्रियमाणे यूपीयः स्थाणुरिति भवत्येवादृष्टो यूपसंस्कारः। अतः स्थाणावेव होम इति ॥ २२ ॥

## परिवास्याच्छेदनं पुनः ॥ २३ ॥

परिपूर्वो वसिश्छेदनार्थः। परिवास्य छित्वा यूपाग्रं पुनश्छेदनं न कर्त्तव्यम् ॥ २३ ॥

## त्र्यरत्निश्चतुररत्निर्वा ॥ २४ ॥

परिवास्यते। "स वा एष त्र्यरत्निर्वैव चतुररत्निर्वा पशुबन्धयूपो भवति" इति वचनात् ॥ २४ ॥

## एकारत्निप्रभृतीनेके ॥ २५ ॥

एवमपि हि श्रूयते—"स यत्पशुना यक्ष्यमाण एकारत्निं यूपं कुरुत इममेव तेन लोकं जयत्यथ यद् द्व्यरत्निमन्तरिक्षलोकमेव तेन जयति" इति। एके तन्नेच्छन्ति। न ह्येतौ विधी। किं तर्हि अवयुत्यानुवादेन संस्तवोऽयम्। येनोपसंहरति—"स वा एष त्र्यरत्निर्वैव चतुररत्निर्वा पशुबन्धयूपो भवति" इति (१) ॥ २५ ॥

## अष्टाश्रिं करोत्युपरवर्जम् ॥ २६ ॥

अत ऊर्ध्वन्तक्ष्णो व्यापारः। एवं हि तक्ष्ण आनयनं दृष्टार्थं भवति। उपरवर्जमिति। उपरशब्देन उपरार्हः (गर्तार्हः) प्रदेशोऽभिधीयते। उपरार्हप्रदेशवर्जमष्टाश्रिं करोति ॥ २६ ॥

## अग्राच्चषालं पृथमात्रमष्टाश्रि मध्यसङ्गृहीतम् ॥ २७ ॥

करोतीत्यनुषङ्गः। पृथशब्देन असङ्कुचिताङ्गुलिः पाणिरामणिबन्धादुच्यते ॥ २७ ॥

## ऊर्ध्वमग्रे प्रतिमुञ्चति द्व्यङ्गुलं त्र्यङ्गुलं वा तदुर्मातिक्रान्तं यूपस्य ॥ २८ ॥

स चायमुपदेशः। प्रतिमोकस्त्वञ्जनोत्तरकाले एव ॥ २८ ॥

---

(१) तथा चापस्तम्बः—"त्र्यरत्निश्चतुररत्निर्वा पालाशो निरूढपशुबन्धस्यातोऽन्यः सौम्यस्याध्वरस्येति वाजसनेयिन" इति।

पञ्चारत्निः पञ्चदशपर्यन्तः सोमे दशसप्तचतुर्दशवर्जमपरिमितो वा ॥ २८ ॥

भवति यूपः। एवमपि हि श्रूयते इति ॥ २९ ॥

सप्तदश वाजपेये ॥ ३० ॥

एकविꣳशतिरश्वमेधे ॥ ३१ ॥

यथाकायꣳ स्थविमा ॥ ३२ ॥

स्थौल्यं च यथाकायमेव भवति। न च तक्षणेन अग्रतुल्यप्रमाणता ॥ ३२ ॥

वेदिं करिष्यन् षड्ढोतारं पञ्चगृहीतं मनसाऽनुद्रुत्य जुहोत्येकामाहुतिं पञ्च वा "द्यौष्पृष्ठमन्तरिक्षमात्माऽङ्गैर्यज्ञं पृथिवीꣳ शरीरैः वाचस्पतेऽच्छिद्रया वाचाऽच्छिद्रया जुह्वा दिवि देवतावृधꣳ होत्रामैरयन्स्वाहेति ॥ ३३ ॥

प्राग्वेदिकरणात् षड्ढोतारं मन्त्रं मनसाऽनुद्रुत्य पञ्चगृहीतं जुहोति, पञ्चभिर्वा विग्रहैः। स चायं होमो विरूढे एव भवति, तत्रैव पाठात्। नाग्निषोमीये इति ॥३३॥

इति षष्ठाध्याये प्रथमा कण्डिका ॥

२

वेदिं करोति ॥ १ ॥

किमर्थमनवसरे वेदिकरणमुक्तम्, परिस्तरणादीनुपरिष्टाद्वक्ष्यत्याचार्य इति। उच्यते। ज्योतिष्टोमे ह्युत्तरवेदिर्विहिता। तत्र चाहवनीयनिधानमुक्तम् "अग्निं वा अस्यामाधास्यन् भवति" इत्यनेन। स चायमग्निसंस्कारः। अङ्गप्रधानार्थत्वाच्चाग्नेरग्नीषोमीये प्राप्नोति। अग्नीषोमीयाच्च पश्वन्तरेषु। न च वेद्या विनोत्तरवेदिर्भवति। अतः स्वावसराद्वेदिरपकृष्यते। तेन "वेदिं करोति" इत्युक्तम् ॥ १ ॥

वरुणप्रघासवत्स्फ्याद्याऽग्निनिधानात् ॥ २ ॥

वारुणप्रघासिकोपदेशोऽयम्, न धर्मपरिप्राप्तिः ॥ २ ॥

## एकमिध्मेन प्रणयति ॥ ३ ॥

तत्र हि ( वरुणप्रघासे हि ) कर्परेण प्रणयनं द्वयोश्च । इह एकमिध्मेनोच्यते । तत्कुतः ? ( समाधत्ते ) ज्योतिष्टोमे हीध्मेन प्रणयनं दृष्टम् । स चाहवनीयसंस्कारः । अङ्गप्रधानार्थत्वाच्च तस्याग्नीषोमीये प्राप्तिः । तत्प्रकृतित्वाच्च पश्वन्तरेषु । तेनैकमिध्मेनेत्युच्यते । एवं च कृत्वा समारोपोऽप्यत्र भवत्येव ॥ ३ ॥

## व्रतोपायन-प्रणीता-ऽऽज्यभाग-भागावदान-पूर्णपात्र-विष्णुक्रमान्कुर्याद्धविर्यज्ञविधे ॥ ४ ॥

व्रतोपायनप्रणीताज्यभागानामन्वयप्राप्तानां सवविधे प्रतिषेधार्थम्, निरूढे च प्रतिप्रसवार्थं वचनम् । भागावदानानि तु "क्लोमं ब्रह्मणे प्लीहं यजमानाय पुरीततमध्वर्यवे" इत्येवमादीनि अग्नीषोमीयमायातानि । तत्र शाखान्तरे प्रतिषेधात् विकारपशूनुपाच्छेन्ति । तेनेह विधानमग्नीषोमीये निषेधार्थम् । तत्र च निषेधात् पश्वन्तरे प्रवृत्तौ निरूढे विकल्पं वक्ष्यति "क्लोमप्लीहाध्यूध्नीपुरीततश्चेच्छन्" इति । अतो भागावदानानामग्नीषोमीये अभाव एव, निरूढे विकल्पोऽन्यत्र नियम इति । पूर्णपात्रविष्णुक्रमयोस्तु निरूढे एव विधानम् । दक्षिणाग्निहोमान्तत्वादग्नीषोमीयस्यान्यत्राप्रवृत्तिरेव ( पूर्णपात्रविष्णुक्रमयोः ) । तथा चाह "हविर्यज्ञविधो ह वा अन्यः पशुबन्धः सवविधोऽन्य" इति प्रकृत्य "स हैष हविर्यज्ञविधो यस्मिन्व्रतमुपनयति यस्मिन्नपः प्रणयति यस्मिन्पूर्णपात्रन्निनयति यस्मिन्विष्णुक्रमान्क्रमयत्यथ हैष सवविधो यस्मिन्नेतानि न क्रियन्ते" इति ॥ ४ ॥

## परिस्तरणपात्रसंसादनप्रोक्षणाज्यनिर्वपणाधिश्रयणानि कृत्वोत्तरपरिग्रहादि करोत्याऽऽज्यासादनात् ॥ ५ ॥

परिस्तरणादीनामुपादानं वैकृतपदार्थोक्तिसमनन्तरं प्राकृतानुसन्धानार्थम्, खननावसरविधानार्थं च । "उत्तरपरिग्रहादि करोति" इत्यनेन च उत्तरपरिग्रहस्य यदादौ तदादि करोत्याऽऽज्यासादनादिति ॥ ५ ॥

अत्र विशेषः—

## सपृषदाज्यमाज्यग्रहणम् ॥ ६ ॥

तस्य चानुयाजार्थतेत्युक्तमेव ॥ ६ ॥

## बर्हिषि प्लक्षशाखां स्तृणाति ॥ ७ ॥

अवसरान्तराविधानाच्च स्तरणाधिकाराच्च बर्हिस्तरणसमनन्तरमेव प्लक्षशाखा-स्तरणम् ॥ ७ ॥

**देवस्य त्वेत्यभ्रिमादाय यूपावटं परिलिखतीदमहमित्याहवनीयस्य पुरस्तादन्तर्वेद्यर्धम् ॥ ८ ॥**

अन्तर्वेदिश्च न यूपार्द्धस्याङ्गत्वेनोच्यते, किं तर्हि देशलक्षणेयम् । यूपमानं प्रकृत्य वचनं हि भवति "अर्द्धमन्तर्वेद्यर्द्धं बहिर्वेदि" इति । तत्र यूपार्द्धस्याङ्गत्वेन वेदिविधाने 'अर्द्धं बहिर्वेदि' इत्येतदपि विधेयम् । तथा च वाक्यभेदप्रसङ्गः । देशलक्षणायां त्वेष दोषो न भवति । न चैकवाक्यत्वे सत्यनेकवाक्यता युक्तरूपा । अनेकादृष्टपरिकल्पना-प्रसङ्गात् । चिन्तायाः प्रयोजनं तीव्रसुति प्राची वेदिर्न कर्त्तव्येति । अनङ्गत्वात् ॥ ८ ॥

**उपरसम्मितं खनति ॥ ९ ॥**

उपरशब्देन चोपरार्हः ( गर्तप्रवेशार्हः ) प्रदेशो लक्ष्यते (१) । उपरार्हप्रदेश-सम्मितं खनतीत्यर्थः ॥ ९ ॥

**प्राचः पांसूनुद्वपति ॥ १० ॥**

**तदग्रेण यूपं प्राञ्चं निदधाति ॥ ११ ॥**

तच्छब्देनावटः परामृश्यते ॥ ११ ॥

**कुशमुष्टिमुपरि तस्मिन् ॥ १२ ॥**

यूपे ॥ १२ ॥

**प्रथमशकलं च ॥ १३ ॥**

चशब्दादुपर्येव ॥ १३ ॥

**अग्रमुत्तरेण चषालम् ॥ १४ ॥**

निदधातीत्यनुवर्त्तते ॥ १४ ॥

**यवोऽसीत्यप्सु यवानोप्य प्रोक्षत्यग्रमध्यमूलानि दिवेत्वेति प्रतिमन्त्रम् ॥ १५ ॥**

---

( १ ) पञ्चमांशं न्यसेद् भूमौ सर्वसाधारणो विधिः । इति वास्तुशास्त्रोक्तं अधस्तनो यूपपञ्चमांशो निखननार्हः गर्तवाचकेन उपरशब्देन लक्षणीय इत्यर्थः ।

आपश्च सतीष्वपि प्रणीतासु लौकिका एव गृह्यन्ते। सान्नाय्ये ह्यङ्गार्थाः प्रणीताः। तद्विकारे च पशावङ्गार्थानामेव प्रतिप्रसवः। तेनापूर्वत्वाद् यूपकर्मादाव-प्रवृत्तिरिति ॥ १५ ॥

प्रोक्षामीति सर्वत्र साकाङ्क्षत्वात् ॥ १६ ॥

प्रयोगः ॥ १६ ॥

अवटे शेषमासिञ्चति "शुन्धन्तामिति ॥ १७ ॥

शेषप्रतिपत्तिरवटसंस्कारश्चायम्। अतः यूपैकादशिन्यां सर्वावटसंस्कारः कर्त्तव्यः ॥ १७ ॥

बर्हींषि प्राञ्च्युदञ्चि च प्रास्यति "पितृषदनमसीति ॥१८॥

अवटे बर्हींषि प्रागग्राण्युदगग्राणि च प्रास्यति "पितृषदनमसि" इत्यनेन मन्त्रेण ॥ १८ ॥

प्रथमशकलं चाग्रेणीरसीति ॥ १९ ॥

प्रास्यतीत्यनुवर्त्तते ॥ १९ ॥

स्रुवेणावटे जुहोति तूष्णीम् ॥ २० ॥

तूष्णीमित्युक्तत्वात् स्वाहाकारोऽपि न भवति ॥ २० ॥

पुरस्तात्परिक्रम्याध्वर्युर्यजमानो वा यूपमनक्त्युदङ्ङुपविश्य ॥ २१ ॥

परिक्रमणं च यजमानस्योच्यते, मा भूत्सन्निधानात् अपरिक्रमणमिति ॥ २१ ॥

इति षष्ठाध्याये द्वितीया कण्डिका ॥

३

यूपायाज्यमानायानुवाचयति ॥ १ ॥

अज्यमानस्य यूपस्यानुवाचनं कारयतीत्यर्थः। तच्चैवं "यूपायाज्यमानायानु-ब्रूहि" इति ॥ १ ॥

देवस्त्वेत्यनक्ति ॥ २ ॥

यूपम् ॥ २ ॥

चषालमुभयत: ॥ ३ ॥

अनक्तीति वर्त्तते। देशभेदाच्चोभयत्र मन्त्र इत्युक्तमग्निसंमार्गे ॥ ३ ॥

अक्तं प्रतिमुञ्चति "सुपिप्पलाभ्य" इति ॥ ४ ॥

अक्ते एव पुनरक्तवचनं चषालनिर्देशार्थम्। चषालं प्रतिमुञ्चतीत्यर्थः। प्रतिमुञ्चामीति चात्र मन्त्रशेषः ॥ ४ ॥

सोपरमग्निष्ठादेशमक्त्वा परिव्ययणदेशं समन्तं परिमृश्याध्वर्युर्नावसृजेदापरिव्ययणात् ॥ ५ ॥

सहोपरेणाग्निष्ठादेशं पुनरक्त्वा परिव्ययणदेशं समन्तं परिमृश्य यूपमध्वर्युर्नावसृजेदापरिव्ययणात्। सोपराग्निष्ठादेशाञ्जनं च क्त्वाप्रत्ययोपदेशादध्वर्योरिति केचित्। अभिप्रवृत्तत्वाद् यजमानस्येति सम्प्रदायः ॥ ५ ॥

उच्छ्रीयमाणायानुवाचयति ॥ ६ ॥

यपायेत्यत्रानुवर्त्तते ॥ ६ ॥

"द्यामग्रेणेत्युच्छ्रयति ॥ ७ ॥

यूपम् ॥ ७ ॥

"याात" इति मिनोत्यग्निष्ठा सम्प्रत्याहवनीयम् ॥ ८ ॥

"या ते" इत्यनेन मन्त्रेण अवटे प्रक्षिपति यथाऽग्निष्ठा सम्प्रत्याहवनीयं भवति। एवं च सति यूपैकादशिन्यां सर्वाग्निष्ठाः सम्प्रत्याहवनीयं कर्त्तव्याः ॥ ८ ॥

"ब्रह्मवनित्वेति पांसुभिः पर्यूहति ॥ ९ ॥

पांसुभिः पूरयति गर्त्तम् ॥ ९ ॥

"ब्रह्म दृंहेति मैत्रावरुणदण्डेन समन्तं त्रिः पर्यृषति ॥ १० ॥

मैत्रावरुणदण्डेन दृढीकरोति ॥ १० ॥

समं भूमिकृत्वाऽद्भिरुसिच्य "विष्णोः कर्माणीति वाचयति यूपमन्वारब्धम् ॥ ११ ॥

समं भूमिकृत्वाऽद्भिरुपसिच्य गर्त्तम् "विष्णोः कर्माणि" इति वाचयति यजमानं यूपमन्वारब्धम्। सचायमुभयसंस्कार इति सम्प्रदायः। यूपसंस्कार एवेत्यपरे। उभयसंस्कारपक्षे च बहुयजमानके सर्वेषां वाचनमेकस्यान्वारम्भः॥ ११॥

"ताद्विष्णोरिरिति चषालमीक्षमाणम्॥ १२॥

वाचयतीत्यनुवर्त्तते॥ १२॥

परिवीयमाणायानुवाचयति त्रिगुणा त्रिव्यामा कौशी रशना तया नाभिमात्रे त्रिवृतं परिव्ययति "परिवीरसीति॥ १३॥

त्रिगुणया त्रिव्यामया कौश्या रशनया नाभिमात्रे त्रिवृतं परिव्ययति "परिवीरसि" इति। नाभिमात्रं च प्रमाणत्वाद्यजमानविषयम्॥ १३॥

संसृज्यान्यतरस्यामन्तं प्रवेशयति॥ १४॥

संसृज्य रशनामन्यतरस्यां रशनायाम् अन्तं गोपायति॥ १४॥

यूपशकलमस्यामवगूहत्युत्तरेणाग्निष्ठां "दिवः सूनुरसीति॥ १५॥

यूपशकलमस्यां रशनायामवगूहत्युत्तरेणाग्निष्ठां "दिवः सूनुरसि" इति॥१५॥

बहुषु यथास्वम्॥ १६॥

बहुषु यूपेषु यथास्वमवगूहनम्॥ १६॥

"उपावीरसीति तृणमादाय तेन पशुमुपस्पृशत्युपदेवानिति (१)॥ १७॥

पशुमात्रप्राप्ताविदमुच्यते—

छागं मन्त्राम्नानात्॥ १८॥

स च पशुश्छागो ग्रहीतव्यः। कुत एतत्? मन्त्राम्नानात्–"अग्नीषोमौ च्छागस्य हविष आत्तम्" इति। तेन पशुशब्दश्छागविषय इति गम्यते॥ १८॥

---

(१) कुशेन पशोरुपस्पर्शनमेव उपाकरणमुच्यते।

## पन्नदगन्व्यङ्गम् ॥ १९ ॥

उपस्पृशति । पन्नदो निगमेषु जातदशन उक्तः । अन्व्यङ्गश्चानूनाङ्गः ॥ १९ ॥

## यथामन्त्रवर्णं प्रोक्षणे ॥ २० ॥

प्रोक्षणमन्त्रे यादृशोऽभिहितः "अनु त्वा माता मन्यतामनु पिताऽनु भ्राता" इत्येवमादि । मातृमान्पितृमानिति । मन्त्राभिधानसामर्थ्यात् ॥ २० ॥

## नाचोदित्वात् ॥ २१ ॥

नैतदेवम् । न ह्येवंविधा चोदनेति । मन्त्राणां चाविधायकत्वात् ॥ २१ ॥

## अग्निं मन्थत्याहोमात्करोति ॥ २२ ॥

गुणविधित्वाच्चास्य ( नामत्वाभावात् ) धर्माभावे ( धर्मातिदेशाभावे ) धर्मपरिप्राप्त्यर्थमाहोमादित्युच्यते ॥ २२ ॥

## उपाकरणमन्थने वा ॥ २३ ॥

उपाकरणं तृणेनोपस्पर्शनमुक्तम् । तस्य पुनरुच्चारणं मन्थनसन्नियोगशिष्टार्थम् । (१) सन्नियुक्तयोर्विकल्पो यथा स्यादिति ॥ २३ ॥

## द्विगुणरशनया द्विव्यामया कौश्या पाशं कृत्वाऽन्तरा शृङ्गमभिदक्षिणं बध्नात्यृतस्य त्वेति ॥ २४ ॥

"पाशं कृत्वा प्रतिमुञ्चति" इति वचनात् ॥ २ ॥

## "देवस्य त्वेति यूपे ॥ २५ ॥

बध्नातीत्यनुवर्त्तते ॥ २५ ॥

## ऐन्द्राग्नः सौर्यः प्राजापत्यो वा यमिच्छेत् ॥ २६ ॥

त्रयोऽपि हि देवताविशेषा विकल्पेन श्रूयन्ते । वाशब्दाद्विकल्पपरिप्राप्तौ यमिच्छेदित्यादिविकल्पार्थमुक्तम् । यमिच्छेत्तं सर्वदैव कुर्यात् ॥ २६ ॥

## अद्भ्यस्त्वेति पशुं प्रोक्षणीभिः प्रोक्षति ॥ २७ ॥

प्रोक्षणीशब्दश्च यौगिकोऽपि संस्कृतप्रोक्षणीविषयः । प्रोक्षण्युपादानसामर्थ्यात् ॥ २७ ॥

---

(१) यदि भवतस्तदा उभे भवतः, न तु एनयोरेकं भवतीत्यर्थः ।

अपां पेरुरित्यास्य उपगृह्णाति ॥ २८ ॥

आस्योपग्रहणं च पानाय नादृष्टार्थम्, दृष्टार्थत्वात्। तथा चाश्वमेधे श्रूयते "तर्पयित्वाऽश्वं पुनः संस्कृत्य प्रोक्षणीभिरितरान्पशून्प्रोक्षति" इति ॥ २८ ॥

आपो देवीरित्यधस्तादुपोक्षति ॥ २९ ॥

"अथाधस्तादुपोक्षति" इति वचनात् ॥ २९ ॥

इति षष्ठाध्याये तृतीया कण्डिका ॥

४

इध्मप्रैषादि करोत्यानुयाजेभ्यः ॥ १ ॥

वैकृतसमनन्तरं प्राकृतानुवृत्त्यर्थमिदमुक्तम्। आदिग्रहणेन च होतृवदनादि द्रष्टव्यम्। तदेव हि पूर्वं न कृतमिति ॥ १ ॥

उत्तराघारमाघार्य पशुं पूर्वं समनक्ति ललाटा॰सश्रोणिषु सन्ति इति प्रन्तिमन्त्रम् ॥ २ ॥

प्रकृतौ हि उत्तराघारसमनन्तरं ध्रुवासमञ्जनमुक्तम्। तेनेहोच्यते 'पशुं पूर्वं समनक्ति' इति। अनेन च ज्ञापकेन यत्र प्राकृतवैकृतयोः समावेशस्तत्र पूर्वं प्राकृतमिति। यथा "आसाद्य हवीꣳषि सम्मृशत्यासाद्य हवीꣳष्यग्निं मन्थति" इति। यथा च "प्रहृत्य तृणमात्मानमालभेत प्रहृत्य तृणं वाजिनेन चरति" इति। "समङ्गानि यजत्रैः" इत्यत्र गच्छन्तामित्यध्याहारो नानुषङ्गः, एकवाक्यताऽभावात्। एवं च सति "संयज्ञपतिराशिषा" इत्यत्रापि गच्छतामित्यध्याहार एव, नानुषङ्गः, पूर्वेण व्यवहितत्वात्। अतश्चोभयत्र संहितावत्प्रयोगो न भवति। प्रायश्चित्तगतश्च विशेषः। अनुषङ्गविनाशे श्रौतं प्रायश्चित्तम्, अध्याहारे त्ववैदिकत्वात्स्मार्त्तमिति। यज्ञपतिशब्दश्च अनेकयजमानके विपरिणम्यते यूपाहुत्यां परिव्ययणे, ऽग्निमन्थने (मन्थनान्तर्गतप्रहरणे) च ॥ २ ॥

प्रवृत्य होतारमाश्राव्याहाग्निर्ह दैवीनां विशां पुर एताऽयं यजमानो मनुष्याणाꣳ सुन्वन्निति सुत्ये तयोरस्थूरि गार्हपत्यं दीदयच्छतꣳ हिमा द्वा यू राधाꣳसीत्सम्पृञ्चानावसम्पृञ्चानौ तन्व इति॥ ३ ॥

आश्रावणं च मैत्राबरुणार्थम्। "स मैत्रावरुणायाहैवाश्रावयति" ( श. ब्रा. ३।७।४।१० ) इति वचनात्। "अग्निर्ह दैवीनां विशां पुर एताऽयं यजमान" इति चानेकयजमानके यथाऽर्थं विपरिणम्यते। सुन्वन्निति सुत्ये इति। ऋतुयाज्यार्थवरणे सुन्वन्यजमान इति प्रयोगः ॥ ३ ॥

## मैत्रावरुणाय दण्डं प्रयच्छति मित्रावरुणयोस्त्वा प्रशास्त्रोः प्रशिषा प्रयच्छामीत्यौदुम्बरं यजमानमुखमात्रम् ॥ ४ ॥

मैत्रावरुणसन्निधानात्तस्यैव मुखमात्रो मा भूदिति यजमानमुखमात्रमित्युक्तम् ॥ ४ ॥

## दीक्षितदण्डं सोमे ॥ ५ ॥

दीक्षितः सोमे दण्डं समर्पयति ॥ ५ ॥

## क्रीते वा ॥ ६ ॥

अस्मिन्वाऽवसरे इति ॥ ६ ॥

## एकादश प्रयाजा अनुयाजाश्च ॥ ७ ॥

इयं चैकादशसंख्योत्पन्नसंयोगिनी चोदकप्राप्तेषु प्रयाजेषु श्रूयते साऽभ्यासेन पूर्यते। या पुनरुत्पत्तौ संख्या श्रूयते सा पृथक्त्वानिवेशाद्भेत्त्री भवति। यथा प्रकृतौ "पञ्च प्रयाजान्यजति" इति। अभ्यासे च सति अन्त्यस्यैवाभ्यासो न्याय्यः। एवं च सति अभ्यासविनाशे अन्त्य एवावर्त्यत इति। अनेकदेवताकोऽनेकयाज्यावांश्च पञ्चम एवायमिति। एवं च यत्र यत्रोत्पन्नसंयोगिनी संख्या तत्र तत्राभ्यासेन पूर्यते। यथा "त्रीणि समिष्टयजूंषि जुहोति" इति कर्माभ्यासः, "तिस्रोऽनूबन्ध्याः, एकविंशतिरग्नीषोमीयाः पशवः" इति द्रव्याभ्यासः। कार्यं तु सर्वत्रैकमेवेति ॥ ७ ॥

## समैत्रावरुणे प्रेष्येत्याह यजस्थाने वचने ॥८॥

समैत्रावरुणे कर्मणि यजेत्यस्य स्थाने प्रेष्येति वक्तव्यम्, यत्र मैत्रावरुणस्य प्रैषवचनमस्ति। एवं च सति पशौ पत्नीसंयाजेषु प्रैषवचनाभावाद्यजेत्येव वक्तव्यम् ॥८॥

## दशेष्ट्वा प्रयाजानाह शासमाहरेति ॥ ९ ॥

"यूपशकलमाहर" इति च काण्वानां पठ्यते। माध्यन्दिनीयायां तु शासमाहरेत्येव ॥ ९ ॥

स्वरुमादायाक्त्वोभौ जुह्वग्रे ताभ्यां पशोर्ल-
लाटमुपस्पृशति "घृतेनाक्ताविति ॥ १० ॥

स्वरुं गृहीत्वोभावपि स्वर्वसी जुह्वग्रे ( प्रणालिकायाम् ) अक्त्वा ताभ्यामेव ( स्वर्वसिभ्यामेव ) पशोर्ललाटमुपस्पृशति "घृतेनाक्तौ" इत्यनेन मन्त्रेण ॥ १० ॥

स्वरुमवगुह्यासिं प्रयच्छन्नाहैषा ते प्रज्ञाताऽ-
श्रिरस्त्विति ॥ ११ ॥

स्वरुं यूपे प्रत्यवगुह्य शमित्रेऽसिं प्रयच्छन्नाह "एषा ते प्रज्ञाताऽश्रिरस्तु इति॥११॥

सादयित्वा स्रुचौ चात्वालमुत्तरेण
शामित्रायोल्लिखति ॥ १२ ॥

स्रुक्सादनं च वचनात्। उल्लेखनोपलक्षिताश्च परिसमूहनादयः सर्वे भवन्तीति सम्प्रदायः ॥ १२ ॥

इति षष्ठाध्याये चतुर्थी कण्डिका ॥

५

पर्यग्नयेऽनुवाचयति ॥ १ ॥

पर्यग्निकरणे क्रियमाणे यदनुवचनं तत्कारयति। कथं च तत्कारयति। 'पर्यग्न-येऽनुब्रूहि' इत्येवम्। तथाच श्रुतिः "अथाह पर्यग्नयेऽनुब्रूहि" इति। पर्यग्निकरणं चाग्नीत्कर्तृकं प्रैषश्च तदङ्गत्वादग्नीध एवेति सम्प्रदायः। तथा च श्रूयते "यो वाव कर्म करोति स एव तस्योपचारं वेद" इति। अपरे त्वध्वर्योरेव प्रैषदानमिच्छन्ति। पर्यग्नि-करणमात्रे एव वचनमिति ॥ १ ॥

आहवनीयोल्मुकमादायाग्नीत् त्रिः समन्तं पर्येति
पश्वाज्यशामित्रदेशयूपचात्वालाहवनीयान् ॥२॥

आहवनीयोल्मुकं गृहीत्वा पश्वादीनग्नीत्त्रिः पर्येति ॥ २ ॥

आज्यपशुशामित्रान्वा ॥ ३ ॥

पर्येति, न सर्वानिति। वाशब्दो विकल्पार्थः ॥ ३ ॥

प्रतिप्रास्योल्मुकं तावत्प्रतिपर्येति ॥ ४ ॥

आहवनीये प्रक्षिप्योल्मुकं त्रिरेव प्रतिपर्येति । प्रतिशब्दप्रयोगाच्चाप्रदक्षिणम् ॥४॥

पुनरादायोदङ् प्रतिपद्यते ॥ ५ ॥

पुनरग्नीदाहवनीयोल्मुकमादायोदङ् प्रतिपद्यते ॥ ५ ॥

पशुश्चान्वक् ॥ ६ ॥

पशुश्च उल्मुकमनुनीयते । एवं हि श्रूयते "शमितेनं कण्ठे बध्वा नयति इति ॥६॥

प्रतिप्रस्थाताऽन्वारभत एनं वपाश्रपणीभ्यां काष्मर्य-
मयीभ्यां विशाखाऽविशाखाभ्याम् ॥ ७ ॥

"तं वपाश्रपणीभ्यां प्रतिप्रस्थाताऽन्वारभते" इति वचनात् ॥ ७ ॥

तमध्वर्युर्यजमानोऽध्वर्युम् ॥ ८ ॥

अन्वारभत इत्यनुवर्त्तते ॥ ८ ॥

वेदितृणे अध्वर्युरादायाश्राव्याहोपप्रेष्य
होतर्हव्या देवेभ्य इति ॥ ९ ॥

अनन्तरं यजमानस्याभिहितत्वादध्वर्युग्रहणम् ॥ ९ ॥

"रेवति यजमान" इति वाचयति ॥ १० ॥

"रेवति यजमान" इत्यमुं मन्त्रं यजमानं वाचयति ॥ १० ॥

शामित्रं नातीयात् ॥ ११ ॥

शामित्रमतीत्य न गच्छेत् ॥ ११ ॥

शामित्रेऽग्निं निदधाति ॥ १२ ॥

यतो गृहीतोऽग्निस्तत्र निधानं मा भूदिति पुनः शामित्रग्रहणम् ॥ १२ ॥

निर्मन्थ्यमेके ॥ १३ ॥

अग्निं निदधति । तुल्यश्रुतित्वाद्विकल्पः ॥ १३ ॥

पश्चात्तृणमुपास्यति "वर्षोवर्षीयसीति ॥ १४ ॥

शामित्रस्य पश्चात्। मन्त्रश्चानेकयजमानके विपरिणम्यते ॥ १४ ॥

तस्मिन्नेनन्निघ्नन्ति प्रत्यक्शिरसमुदक्पादम् ॥ १५ ॥

तस्मिन् तृणे पशुं प्रत्यक्शिरसमुदक्पादं निघ्नन्ति ॥ १५ ॥

प्राक्शिरसं वा ॥ १६ ॥

उदक्पादमिति वर्त्तत एव। शिरसो दिङ्नियमेऽपि सति पुरुषस्योदक्पादता वाचनिकी कर्त्तव्या चोदकानुग्रहाय ॥ १६ ॥

सङ्गृह्य मुखं तमयन्त्यवाश्यमानम् ॥ १७ ॥

मुखसंग्रहणपूर्वकं तमनं, यथा शब्दं न करोति ॥ १७ ॥

वेष्केण वा ॥ १८ ॥

तमयन्ति। (१) वेष्कश्चाबलक उच्यते ॥ १८ ॥

एत्याहवनीयमावृत्यासते ॥ १९ ॥

अध्वर्य्वादयः ॥ १९ ॥

संज्ञपयान्वगन्नित्येव ब्रूयात् ॥ २० ॥

अनेन मन्त्रेण शमितोच्यते। संज्ञपय संज्ञपनं कुरु। अन्वगन्निति देवान्प्रत्यनुगच्छत्वित्यर्थः। तथा च श्रुतिः "स यदाहान्वगन्नित्ये तर्हि ह्येष देवाननुगच्छति" इति। एवं च कृत्वाऽनेकपशुकेऽस्य पदस्य विपरिणामः ॥ २० ॥

"स्वाहा देवेभ्य" इति जुहोति ॥ २१ ॥

पूर्णाहुतिविकारत्वात्सकृद्गृहीतेन तद्धर्मवत् ॥ २१ ॥

संज्ञप्तः पशुरिति प्रोक्ते शेतां नु मुहूर्त्तमित्याहासोमे ॥ २२ ॥

"संज्ञप्तः पशुः" इति शमित्रा प्रोक्ते "शेतां नु मुहूर्त्तम्" इत्याहासोमे। असोमग्रहणेन च निरूढोऽभिधीयते। तमेव हि प्रकृत्यैतत्पठ्यते। "तस्माद्. पशुं संज्ञप्तं ब्रूयाच्छेतां नु मुहूर्त्तम्" इति ॥ २२ ॥

"देवेभ्यः स्वाहेति जुहोति ॥ २३ ॥

पूर्णाहुतिसंस्कृतेनैवाज्येन ॥ २३ ॥

---

(१) वेष्को गलावेष्टक इति देवयाज्ञिकः।

न वैते जुहुयात् ॥ २४ ॥

वाशब्दो विकल्पार्थः । एवं हि श्रूयते "ते वा एते परिपशव्ये इत्याहुती स यदि कामयेत जुहुयादेते यद्यकामयेतापि नाद्रियेत" इति ॥ २४ ॥

वपाश्रपणीभ्यां नियोजनीं चात्वाले प्रास्यति "माऽहिर्भूरिति ॥ २५ ॥

रशनाबहुत्वेऽपि विकारे अहिपृदाकुशब्दौ उपमानार्थत्वान्न विपरिणम्येते । उपमायाश्चानङ्गत्वादविपरिणामः । अङ्गभूतं हि प्रकाशयितव्यम् । न चोपमाऽङ्गभूतेति । भूरिति तु पदं रशनापरत्वाद्विपरिणम्यते एव ॥ २५ ॥

प्रतिप्रस्थातः पत्नीमुदानयेत्याह नेष्टरिति सोमे ॥ २६ ॥

सोमग्रहणं च सोमविषयमेव । तत्र हि नेष्टा विद्यते । एवं च सति सोमबाह्येषु पशुषु प्रतिप्रस्थातरिति वक्तव्यम् ॥ २६ ॥

इति षष्ठाध्याये पञ्चमी कण्डिका ॥

६

पान्नेजनहस्तां वाचयति नयन्नमस्त आतानेति॥ १ ॥

पान्नेजनहस्तां पत्नीं नयन् वाचयति "नमस्त आताना" इति । पत्नीबहुत्वे च क्रत्वर्थत्वादेकैव पान्नेजनहस्ता । संस्कारार्थत्वात्सर्वासां वाचनमिति ॥ १ ॥

पशोः प्राणाञ्छुन्ध्यति पत्नी ॥ २ ॥

प्राणशब्देन प्राणायतनान्यभिधीयन्ते । तानि पान्नेजनीभिरद्भिः पत्नी शोधयतीत्यर्थः ॥ २ ॥

तानीदानीमाह—

मुखं नासिके चक्षुषी कर्णौ नाभिं मेढ्रं पायुं पादान्त्सऽहृत्य "वाचं ते शुन्धामीति प्रतिमन्त्रम्॥ ३ ॥

मेढ्रं प्रजननमुच्यते । शेषं प्रसिद्धमेव ॥ ३ ॥

शेषेण यजमानश्च शिरःप्रभृत्यनुषिञ्चतो "मनस्त" इति शिरः ॥ ४ ॥

पान्नेजनीशेषेण यजमानः, चशब्दादध्वर्युश्च । अध्वर्युः काण्वीयायां पठ्यते "अध्वर्युश्च यजमानश्च" इति । विलिङ्गत्वादभिधीयते "मनस्त इति शिरः" । शेषमन्त्रा यथार्थं विनियुज्यन्ते ॥ ४ ॥

"यत्ते क्रूरमित्यङ्गानि ॥ ५ ॥

अनुषिञ्चत इत्यनुवर्त्तते ॥ ५ ॥

शमहोभ्य" इति पश्चात्पशोर्निषिञ्चतः ॥ ६ ॥

(१) संस्कारत्वाच्चाव्यतिरिक्ते (पशावेव) । निषिञ्चामीति च मन्त्रेऽध्याहारः॥६॥

उत्तानं पशुं कृत्वाऽग्रेण नाभिं तृणं निदधात्योषध" इति॥७॥

नाभ्यग्रे हि वपायाः स्थानम् ॥ ७ ॥

"स्वधित" इति प्रज्ञातयाऽभिनिधाय च्छित्वाऽग्रं सव्ये कृत्वा दक्षिणेन मूलमुभयतोऽनक्ति लोहितेन "रक्षसामिति॥८॥

प्रज्ञाता च घृताक्ता धारा उच्यते । यया पशुसमञ्जनं कृतम् । छित्वा सतृणं चर्म, तृणाग्रं सव्ये पाणौ कृत्वा, दक्षिणेन ( तृण ) मूलं द्विगुणीकृत्योभयतोऽनक्ति लोहितेन "रक्षसाम्" इत्यनेन मन्त्रेण ॥ ८ ॥

"निरस्तमित्यपास्यति ॥ ९ ॥

अक्तं मूलम् ॥ ९ ॥

इदमहमित्यभितिष्ठति यजमानः ॥ १० ॥

रक्षोऽभिधायकत्वादुदकोपस्पर्शनम् । अत्र च बहुयजमानके एक एवाभितिष्ठति । क्रत्वर्थत्वात् ॥ १० ॥

वपामुत्खिद्य वपाश्रपण्यौ प्रोर्णौति "घृतेन द्यावा-पृथिवी" इति ॥ ११ ॥

प्रोर्णौति वपया वेष्टयति वपाश्रपण्यौ । तयोश्च उखाकार्यापत्त्या तन्मन्त्रेणोहितेनादानं "द्यौ स्थः पृथिवी स्थ" इति (२) ॥ ११ ॥

---

( १ ) पश्चाद्भागनिषेकान्तस्य पशुसंस्कारत्वात् अनेकपशुषु प्रतिपशु निषेकः ।

( २ ) "द्यौरसि पृथिव्यसि" इति उखाऽऽदानमन्त्रः । वपाश्रण्योर्द्वित्वात् तदभिधानाय असीत्यस्योहेन स्थ इति द्विवचनान्तत्वम् । द्यौरित्यस्य पृथिवीत्यस्य च उपमात्वेनानङ्गत्वात् न द्विवचनान्तत्वेन विपरिणामः ।

## परिवास्य चात्वालेऽवसिच्य शामित्रे प्रतपति ॥१२॥

परिवासनं च च्छेदनमुच्यते ॥ १२ ॥

## शामित्रैकदेशमाहवनीये प्रास्यत्यग्नीत् ॥ १३ ॥

तच्च "पुनरुल्मुकमग्नीदादत्ते" (श० ब्रा० ३।८।२।१८) इति पुनःशब्दोपादानान्नि-र्मन्थ्यपक्षे शामित्रैकदेशस्य न प्रासनमिति। काण्वानामपि च "तत्पुनरप्यर्जति" इति पठ्यते। पुनःशब्दस्य कृतार्थवृत्तित्वात् ॥ १३ ॥

## तृणाग्रं चाध्वर्युर्वाथो वेरिति ॥ १४ ॥

आहवनीये प्रास्यतीत्यनुवर्त्तते। अधस्तनपदार्थेऽग्नीदुक्तः। चशब्देन तस्यानु-कर्षणं मा भूदित्यध्वर्युग्रहणम्। एवं चानेनैव ज्ञापकेन ज्योतिष्टोमे "नेष्टा तोत इत्येनां वाचयति" इत्युक्त्वा "सोमक्रयण्या च समीक्षमाणाम्" ( का० श्रौ० ७।६।२३–२४ ) इत्यत्र चशब्देन नेष्टुरेवानुकर्षणं युक्तम्। तथा च ब्राह्मणम् "तं नेष्टा वाचयति" इति प्रकृत्य "अथैनाꣳ सोमक्रयण्या संख्यापयति" इत्याह ॥ १४ ॥

## उत्तरतास्तिष्ठन्प्रतप्य वपामन्तरा यूपाग्नी हृत्वा दक्षिणतः प्रतिप्रस्थाता श्रपयति परीत्य ॥ १५ ॥

उत्तरतस्तिष्ठन्नाहवनीये प्रतप्य वपामन्तरेण यूपाग्नी हृत्वा पूर्वेण यूपं परीत्य दक्षिणतो व्यवस्थितः प्रतिप्रस्थाता श्रपयति। सम्प्रदाये तु चात्वालावसेकादि प्रति-प्रस्थाता। "चात्वालेऽवसिच्य शामित्रे प्रतपति" इति। प्रतपनं च श्रपणैकदेशः। "तां पशुश्रपणे प्रतपति तथो ह्यस्यात्रापि शृता भवति" ( श० ब्रा० ३।८।२।१८ ) इति हि श्रूयते। श्रपणं च प्रतिप्रस्थातृकर्तृकमिति सम्प्रदायः ॥ १५ ॥

## वपाꣳस्रुवेणाभिधास्यत्यग्निराज्यस्येति ॥ १६ ॥

अभिधारणं तु प्राकृतमेव, प्रकृतिलिङ्गसंयोगात्। अतश्च स्थाल्याज्यमिति ॥१६॥

## स्तोकेभ्योऽनुवाचयति। शृतायाꣳ शृताप्रचरेत्याह प्रति-प्रस्थाता। स्वाहाकृतिभ्यः प्रेष्येति ॥ १७ ॥

स्वाहाकृतिशब्देनोत्तमः प्रयाज उच्यते ॥ १७ ॥

## हुत्वा वपामभिघारयति पृषदाज्यं ध्रुवां प्रथममाज्य-भागौ चेत् ॥ १८ ॥

चेच्छन्दो यद्यर्थः, यद्याज्यभागावत्र क्रियेते इति। निरूढे ह्याज्यभागयोर्विकल्पः ॥ १८ ॥

तेनोच्यते—

अत्राज्यभागौ कुर्वन् ॥ १६ ॥

आज्यभागौ कुर्वन्नत्रावसरे करोति इति। अग्नीषोमीये पुनराज्यभागौ न स्त एवेत्युक्तमेव ॥ १९ ॥

वपया चरिष्यन्नुपस्तीर्य हिरण्यमवधाय वपामवद्यन्नाहेन्द्राग्निभ्यां छागस्य वपायै मेदसोऽनुब्रूहीति ॥२०॥

उपस्तीर्य जुह्वामाज्यं, हिरण्यशकलमवधाय। "अवद्यन्नाह" इति च सहानुवाचनार्थम्। "इन्द्राग्निभ्यां छागस्य" इति च प्रयोगोपदर्शनार्थम्, न सौर्यादिव्युदासार्थम्। विकल्पेन ह्यत्र देवताः श्रूयन्ते इति ॥ २० ॥

हिरण्यमवधाय द्विरभिघारणं सोमे ॥ २१ ॥

निरूढे तु सकृदभिघारणम्। "सा वा एषा पञ्चावत्ता वपा भवति" इति वचनात्। सोमशब्दनं चाग्नीषोमीयोपलक्षणम्। अतस्तद्विकारेषु निरूढवर्जं सर्वत्र द्विरभिघारणमिति ॥ २१ ॥

आश्राव्याहेन्द्राग्निभ्यां छागस्य वपां मेदः प्रेष्येति ॥ २२ ॥

एतदपि प्रयोगोपदर्शनार्थमेव ॥ २२ ॥

प्रस्थितमिति च प्रसुते ॥ २३ ॥

प्रसुतशब्देन सवनीयोऽभिधीयते। तद्विकारेषु च प्रस्थितशब्दे प्राप्ते सौत्रामण्यामुपसंहारादन्यत्र न भवतीति। उपसंहृतो हि प्रस्थितशब्दः सौत्रामण्यां "प्रस्थितमिति च त्रिपशोः सर्वम्" इति ॥ २३ ॥

हुत्वा वपाश्रपण्यावनुप्रास्यति प्राचीं विशाखां प्रतीचीमितरां "स्वाहाकृते" इति ॥ २४ ॥

वपाश्रपणीबहुत्वे मन्त्रस्य विपरिणामः ॥ २४ ॥

चात्वाले मार्जयन्ते सपत्नीका इदमापः प्रवहतेति ॥ २५ ॥

मन्त्रलिङ्गाद्भिर्मार्जनमिति ॥ २५ ॥

इति षष्ठाध्याये षष्ठी कण्डिका ॥

पशुदेवतावनस्पतिभ्यामेव वा स्रुग्व्यूहनमभिसम्बध्यते । न वसुमदादिदेवताभिः । कुत एतत् ? नोमोपदेशात्तासाम् । सोमे हि ता उपदिश्यन्ते 'इन्द्राय त्वा वसुमते रुद्रवत इन्द्राय त्वाऽऽदित्यवत' इत्येवमादिनेति ॥ १४ ॥

एवं प्राप्ते उच्यते—

## सर्वा वा सवनीयसौम्यभावात् ॥ १५ ॥

सर्वा वा वसुमदाद्या अपि व्यूहनेनाभिसम्बध्यते । कुत एतत् ? सवनीयेषु सौम्ये च भावात्तासाम् । कथं कृत्वा ? सर्वत्र हीन्द्रोऽभीज्यते । सवनीयान् प्रकृत्य हि श्रूयते—'सर्वे ऐन्द्रा भवन्तीति । ननु च गुणभेदोऽत्र । किं क्रियतां वचनमत्र । निर्वापे हि हरिवदादिविशिष्ट इन्द्रो, यागे च निर्गुणो व्यूहने च वसुमदादिविशिष्ट इति । वचनेन हि विधानम् , नास्ति वचनस्यातिभारः । तस्मात्साधूक्तम् 'सर्वा वा सवनीयसौम्यभावादिति । सौम्ये निस्सन्दिग्ध एव सद्भावः ॥ १५ ॥

इति दशमाध्याये सप्तमी कण्डिका ॥



८

## विमुच्य स्रुचौ द्रोणकलशे हारियोजनग्रहणमुपयामगृहीतोऽसि हरिरसीति ॥ १ ॥

चोदकपरम्परापरिप्राप्तं स्रुग्विमोकं कृत्वा द्रोणकलशे हारियोजनग्रहणम् 'उभयामगृहीतोऽसि हरिरसि' इत्यनेन मन्त्रेण ॥ १ ॥

## धानाश्चावपति हर्योर्धाना इति ॥ २ ॥

चशब्दादनन्तरम् । श्रयणञ्चैतच्छाखान्तरश्रवणात् । 'धानाभिर्हारियोजनं श्रीणाति' इति । प्रयोजनं श्रयणधर्मोऽत्र भवति ॥ २ ॥

## उन्नेताऽनुवाचयति मूर्धनि कृत्वा धानासोमेभ्योऽनुब्रूहीति ॥ ३ ॥

एतावानेव प्रैष इति सम्प्रदायः । इन्द्राय धानासोमेभ्य इत्यपरे । तत्पुनर्युक्तमयुक्तं वेति विचारणीयम् । न ह्यत्र चोदकप्राप्तिरस्ति । 'अनुवाचनप्रैषो यथादेवतम्' ( का० श्रौ० १.९।१३ ) इत्येतदर्शपूर्णमासविषयम् । अतोऽत्र दुर्लभा प्राप्तिर्देवतापदोच्चारणस्य । एवञ्च कृत्वा 'इन्द्राय मरुत्वतेऽनुब्रूहि' इति वचनात् 'देवाय सवित्रेऽनु-

वाचयति' इति वचनाद्देवतापदोच्चारणम्। यदुच्यते 'आश्राव्याह दधिघर्मस्य यज' इति तत्र चोदकपरिप्राप्त्या देवतापदोच्चारणम्। इह पुनर्न तथा घर्म इवेति सम्प्रदायः ॥३॥

## आश्राव्याह धानासोमान् प्रस्थितान् प्रेष्येति ॥ ४ ॥

उन्नेतैवाभिप्रवृत्तत्वात्। तथा च लिङ्गम्–'द्वौ वोन्नेतारौ कुर्वीत तयोर्यतरो नाश्रावयेदित्युन्नेतुराश्रावण दर्शयति ॥ ४ ॥

## भक्षं हरेदिच्छन् ॥ ५ ॥

इच्छन् सर्वहुतं करोति धानावर्जम् ॥ ५ ॥

## उत्तरवेदौ वा निधाय विलाभम् ॥ ६ ॥

उत्तरवेदौ वा निधाय द्रोणकलशं विलभ्य विलभ्य धानाः, वा सदसि विलाभः ॥ ६ ॥

## यस्ते अश्वसनिरिति प्राणभक्षं भक्षयित्वोत्तरवेदौ निवपन्ति ॥ ७ ॥

धानाः। उत्तरवेदावपि विलाभे सदस्येव प्राणभक्षः। तत्र हि सर्वभक्षाणां विधानम् 'उदरमेवास्य सदस्तस्मात्सदसि भक्षयन्ति' ( श० ब्रा० ३.६।१।११ ) इति। धानाभक्षणं सर्वेषाम् 'अथैतस्य हारियोजनस्य सर्व एव लिप्सन्त'(१) इति ॥ ७ ॥

## शाकलाधानं देवकृतस्येति प्रतिमन्त्रम् ॥ ८ ॥

तच्च सर्वेषां सहकारिणामपि विधानसामर्थ्यात् ॥ ८ ॥

## अपरेण चात्वालं यथास्वं चमसान् पूर्णपात्रानवमृशन्ति हरितकुशानवधाय संवर्चसेति ॥ ९ ॥

चात्वालमपरेण चमसान्पूर्णपात्रान्कृत्वा हरितकुशानवधाय यथास्वमवमृशन्ति संवर्चसेति। बहुवचनोपदेशादधिकाराच्च सहकारिवचनाच्च सर्वर्त्विजः। येषामपि चमसा न सन्ति तेऽपि यथाख्यया सन्निहितान् चमसानवमृशन्ति ॥ ९ ॥

## मुखान्यालभन्ते ॥ १० ॥

पूर्णपात्रावमर्शानन्तरम् ॥ १० ॥

---

१. 'तस्मादेतस्मिन् सर्वेषामेव भक्षः' इति शतपथब्राह्मणं ( ४।४।३।१० ) इति स्वशाखीयं वचनम्।

दधिक्राव्ण इत्याग्नीध्रे दधिभक्षणम् ॥ ११ ॥

सर्वे कुर्युरधिकारात्, सहकारिप्रत्ययाच्च ॥ ११ ॥

पत्नीसंयाजाः पशुवत् ॥ १२ ॥

पशुवदिति किमर्थमुच्यते ? बहवो ह्यत्र सवनीयाः पुरोडाशास्समानतन्त्राः, भूयसां सधर्मत्वन्यायात्तदीया मा भूवन्निति। यद्येवमस्तु तथेति, नैतदेवम्; पशुतन्त्रं ह्यत्र महत, लघु पौरोडाशिकम्। तेन बृहद्घोषाकटकन्यायेन पाशुकतन्त्राभ्युपगम एष युक्तरूप इति साधूच्यते पशुवदिति ॥ १२ ॥

समिन्द्र ण इति नव समिष्टयजूꣳषि जुहोति प्रतिमन्त्रम् ॥ १३ ॥

साभ्यासिकमिदमेकं कर्मेत्युक्तमेव। नवसंख्या तु पाशुकी, तत्तन्त्राभ्युपगमात्। तथा च पशुगणे सवनीयपशुविकारत्वान्नवैव भवन्ति ॥ १३ ॥

आसन्द्यौदुम्बर्यौ चात्वालꣳ हरति सोमलिप्तञ्च ॥ १४ ॥

हरति ॥ १४ ॥

कृष्णविषाणामेखले चात्वाले प्रास्यति माहिर्भूरिति ॥ १५ ॥

अहिपृदाकुशब्दयोरुपमानार्थत्वात् बहुत्वेऽप्यनूहः ॥ १५ ॥

प्रतिप्रस्थाता च शङ्कुयोक्त्रे तूष्णीम् ॥ १६ ॥

चशब्दाच्चात्वाले प्रास्यति ॥ १६ ॥

उरुꣳहीति वाचयति यजमानम् ॥ १७ ॥

साम प्रेष्यति गाय ब्रूहीति वा ॥ १८ ॥

वेति विकल्पः ॥ १८ ॥

व्यध्वोदकान्तयोश्च ॥ १९ ॥

साम प्रेष्यति। व्यध्वशब्देनार्धपथ उच्यते ॥ १९ ॥

सर्वे निधनमुपयन्ति ॥ २० ॥

सर्वशब्दो निरवग्रहः सर्वर्त्विग्विषयः ॥ २० ॥

## आहृतमादायावभृथं गच्छन्ति स्यन्दमानानाᳬं स्थावराः २१

यद्वात्वालमाहृतमासन्द्यौदुम्बर्यादि तदादायावभृथं कर्तुं यन्ति स्यन्दमानानामपां याः स्थावरा आपः। "स यः स्यन्दमानानाᳬं स्थावरो ह्रदः स्यात्" इति ( श० ब्रा० ४।४।५।१० ) वचनात् ॥ २१ ॥

## तदभावेऽन्याः ॥ २२ ॥

"यद्यु ता न विन्देदपि या एव काश्चापोऽभ्यवेयात्" इति ( श० ब्रा० ४।४।५।१० ) ॥ २२ ॥

## नमो वरुणायेति वाचयत्यपोऽवक्रमयन् ॥ २३ ॥

"नमो वरुणायेत्यमुं मन्त्रं वाचयति बाहुगृहीतं यजमानमपोऽवतारयन् ॥२३॥

## प्रास्य समिधं चतुर्गृहीतेनाभिजुहोत्यग्नेरनीकमिति ॥२४॥

समिधमप्सु प्रास्य चतुर्गृहीतेनाभिजुहोति "अग्नेरनीकमित्यनेन मन्त्रेण ॥२४॥

## अपरेण प्रयाजान् बर्हिर्वर्जम् ॥ २५ ॥

अपरेण चतुर्गृहीतेन बर्हिर्वर्जं प्रयाजान्करोति। अपरग्रहणं पूर्वचतुर्गृहीतहोमस्यावसरप्रज्ञप्त्यर्थम्। न हि तस्यावसरोऽभिहित इति। किं च समानयनव्युदासार्थं च ॥ २५ ॥

## अप्सु जुहोति ॥ २६ ॥

आहवनीयकार्ये अपां विधानम्। अतश्च तद्धर्मसम्बन्धो भवति ॥ २६ ॥

## एककपालेनावदायं चरतीति॥ २७ ॥

"वारुणेनैककपालेनावभृथमभ्यवयन्ति" इति वचनात्। स च पूर्वमेवाभिहितः "सौम्यश्चरुर्वारुणश्चैककपालोऽधिकौ" इति। एककपालानां हि सर्वहुतत्वमुक्तमाचार्येण, तेनोच्यते "अवदायं चरतीति ॥ २७ ॥

## ऋजीषस्येच्छन्नवद्येदग्नीवरुणाभ्याᳬं सर्वहुतᳬं शेषम् ॥२८॥

करोति ॥ २८ ॥

## ऋजीषस्य च सकृत्पूर्वे चेत् ॥ २९ ॥

"स यद्यमुत्रर्जीषस्य द्विरवद्येदथात्र सकृत्" इति ( श० ब्रा० ४।४।५।१७ ) वचनात् ॥ २९ ॥

# वश एतत्कुर्यात् ॥ ३० ॥

वशशब्दो हीच्छावचनः। इच्छयैतत्षडाहुतिकं करोति। इच्छयाऽन्यत्प्रकारान्तरम् ॥ ३० ॥

तत्राह—

# यजमानोक्तावाज्यभागौ बर्हिर्वर्जं चानुयाजौ ॥ ३१ ॥

इच्छयैतद्दशाहुतिकं करोति। यजमानोक्ताविति। सहकारिवचनाद्यौ वा यजमानो ब्रूयादिति ॥ ३१ ॥

# अन्यतरत् कृत्वा ॥ ३२ ॥

इति दशमाध्यायेऽष्टमी कण्डिका ॥

९

# समुद्रे त इत्यृजीषकुम्भं प्लावयति ॥ १ ॥

अत्र पक्षद्वयस्यान्यतरदेकं कर्तव्यम्। नान्ये पदार्थाः। येन प्रयाजाज्यभागानुयाजानामेव पुनर्विधानम्। अतो यावदुक्तताऽस्य। प्रतिपत्तयस्तु क्रियन्ते। समुद्रे त इत्यनेन मन्त्रेण ऋजीषकुम्भं प्लावयत्युदके। १ ॥

# देवीराप इति विसृज्योपतिष्ठते ॥ २ ॥

विसृज्य ऋजीषकुम्भम् उपतिष्ठते 'देवीराप' इति ॥ २ ॥

# अवभृथेति मज्जयति ॥ ३ ॥

ऋजीषकुम्भं बोलयतीत्यर्थः ॥ ३ ॥

# कृष्णाजिनञ्च मा मैद्र्यं ज्यैष्ठ्यꣳ श्रैष्ठ्यं व्यौषीरिति ॥ ४ ॥

चशब्दान्मज्जयति। कृष्णाजिनञ्च प्रकृतत्वादासनकृष्णाजिनम् ॥ ४ ॥

# पुत्रायैनत्प्रदाय वरुणप्रघासवत्स्नानप्रभृत्या समिदाधानात् ॥ ५ ॥

एनदिति कृष्णाजिनम्। वारुणप्रघासिकावभृथवत्स्नानं कृत्वाऽऽसमिदाधानात्करोति। तदीयोपदेशस्यातिदेशोऽयम्। न हि तद्धर्मप्रवृत्तिरत्रेति। इत एव हि तत्र धर्माः प्रवृत्ताः ॥ ५ ।

सोमलिप्तं त्रास्यति ॥ ६ ॥

चरितार्थत्वात्प्रतिपत्तिः ॥ ६ ॥

अदानं पूर्वयोः ॥ ७ ॥

वाससोः । अतिदेशापवादोऽयम् ॥ ७ ॥

उद्वयमित्युन्नेत्रोन्नीता आमहीयां जपन्तो गच्छन्ति "अपाम सोममृता अभूमागन्म ज्योतिरविदाम देवान् । किं नूनमस्मान् कृणवदरातिः किमु धूर्तिरमृतं मर्त्यस्येति ॥ ८ ॥

जपश्च सर्वेषां बहुवचनोपदेशात् । सहकारिणामपि विज्ञानसामर्थ्यात् । अस्मिंश्चावसरे व्रतग्रहणं भवत्युन्मुक्तदीक्षत्वात् । ततो बर्हिर्होमादि ॥ ८ ॥

शालाद्वार्यमपरेणास्ते यजमानः कृष्णाजिनमङ्के कृत्वा स्रुवाहुतिं जुहोति मैद्र्यं ज्यैष्ठ्यꣳश्रैष्ठ्यमग्निर्दधातु स्वाहा इति ॥ ९ ॥

स्रुवाहुतिं जुहोत्यध्वर्युराहवनीये 'मैद्र्यं ज्येष्ठ्यꣳश्रैष्ठ्यमग्निर्दधातु स्वाहा' इत्यनेन मन्त्रेण ॥ ९ ॥

कृष्णाजिनं निधायोदयनीया प्रायणीयवत् ॥ १० ॥

वतिः प्रायणीयधर्मातिदेशार्थः ॥ १० ॥

तथा चाह—

पथ्यास्वस्तिश्चतुर्थी ॥ ११ ॥

इति । 'शालामुखीये उदयनीयया चरन्ति' इति च शाखान्तरात् शालाद्वार्ये कर्तव्या ॥ ११ ॥

पात्रप्रोक्षणाद्याऽऽज्यासादनात्सवनीयवत् परिव्ययणादि मैत्रावरुणी वशाऽनूबन्ध्या ॥ १२ ॥

पात्रप्रोक्षणग्रहणं शालाद्वार्ये श्रपणनियमव्युदासार्थम् । सवनीये हि पात्रासादनविधानेन शालाद्वार्ये श्रपणनियमो ज्ञापितः । तद्वदत्रापि मा भूदिति पात्रप्रोक्षणादीत्युक्तम् । सा च सवनीयवदिति । यदुक्तं भवति-सकृत्प्रोक्षित इध्मः, आग्नीध्र उत्पवनम्, एकवृत्स्तरणमिति । परिव्ययणस्य पश्वङ्गत्वेन विधानात्तदपवर्गे चापवर्गमाशङ्क्य परिव्ययणादीत्युक्तम् । मित्रावरुणदेवत्या वशा रिक्ता सा च गौर्भवति 'गौरनुबन्ध्या' इति वचनात् ॥ १२ ॥

## स्वर्वर्वगूहनादि वा कृतत्वात् ॥ १३ ॥

स्वर्वर्वगूहनादि वा कर्तव्यं न परिव्ययणादीति । कुत एतत् ? कृतत्वात्परिव्ययण-संस्कारस्य । यूपसंस्कारो ह्ययम् । स च यूपः सर्वपश्वर्थः । संस्कारोऽपि तद्वदेवेति । अत एव स्वर्वर्वगूहनादीत्युत्तरपदप्रधानो बहुव्रीहिः । स्वर्वगूहनं यस्यादौ तदादि । तच्चोपाकरणम् । एवं सत्युपाकरणमन्थनयोरत्र नियम इति ॥ १३ ॥

## वशाऽभाव उक्षा ॥ १४ ॥

"यदि वशां न विन्देदप्युक्षवश एव स्यात्" इति ( श० ब्रा ०४।५।१।९ ) ॥१४॥

## उभयाभावे पयस्या ॥ १५ ॥

कर्त्तव्या ॥ १५ ॥

## आसाद्यैनामाज्यभागप्रभृतीडान्तामेके ॥ १६ ॥

एके आदितो ब्राह्मणतर्पणान्ताम् । विकल्प एवायम् ॥ १६ ॥

## उदवसानीयाऽऽग्नेयः पञ्चकपालः समारूढनिर्मथिते॥१७॥

उदवसानीयेष्टिरुच्यते । तत्र चाग्नेयः पञ्चकपालो भवति । समारोपश्च प्राजहिते कर्त्तव्यः । गार्हपत्यो हि स इति ॥ १७ ॥

## हिरण्यं दक्षिणाऽनड्वान् वा ॥ १८ ॥

वेति विकल्पः ॥ १८ ॥

## पशुवद्वाऽऽहुतिः ॥ १९ ॥

'अथो चतुर्गृहीतमेवाज्यं गृहीत्वा' इति ( श० ब्रा० ४।५।१।१६ ) श्रुतेः ॥१९॥

## तदन्ते सायमाहुतिः ॥ २० ॥

देया ॥ २० ॥

## सोमाङ्गं सन्निधिविरोधाभ्याम् ॥ २१ ॥

सा च सोमाङ्गं भवति । सोमसन्निधौ विधानात् "अथ यदेवैषोदवसानीयेष्टिः सन्तिष्ठतेऽथ सायमाहुतिं जुहोति" इति ( श० ब्रा० ४।५।१।१६ ) । अपि च नित्यत्वे सति कालो विरुध्यते ॥ २१ ॥

## नित्या वा प्रातराहुतिश्रुतेः ॥ २२ ॥

अथवा नित्यैषा न सोमाङ्गम् । कुत एतत् ? प्रातराहुतिश्रवणात् "काल एव प्रातराहुतिम्" इति (श० ब्रा० ४।५।१।१६) । सोमयागनिमित्तः सायमाहुतेरपकर्ष इति ॥२२॥

## नियतक्रियाऽतः ॥ २३ ॥

अतः परं नित्यानां क्रिया न प्रागतः। उन्मुक्तदीक्षत्वेऽप्यवभृथादूर्ध्वमिति ॥२३॥

## एष प्रथमस्सोमः ॥ २४ ॥

"एष वाव प्रथमो यज्ञानां यज्ज्योतिष्टोम" इति। सर्वविकाराणामयं प्रथमः सोमः ॥ २४ ॥

## आदीप्य प्रविशन्ति ॥ २५ ॥

आदीपनं च बर्हिषः। तद्धि प्रकृत्य श्रूयते—'यदनुपोष्य प्रयायात् ग्रीवाबद्धमेनं (यजमानं) स्वर्गं नयेरन्' इति। निन्दार्थवादोऽयमनुपोषस्य ॥ २५ ॥

## षडुत्तरेऽत्यग्निष्टोम उक्थ्यः षोडशी वाजपेयोऽतिरात्रोऽप्तोर्यामः ॥ २६ ॥

अत्रात्यग्निष्टोमवाजपेयाप्तोर्यामाणां ज्योतिष्टोमस्य प्राथम्यविधानेनोत्तरकालता सिद्धा। उक्थ्यषोडश्यतिरात्राणामप्याचार्येणैव ज्ञापितोत्तरकालता 'उक्थ्यं चोत्तरेष्वेकया' (का० श्रौ० १०।५।५) इति, उक्थ्यविग्रहणमुत्तरेष्विन्द्रावरुणाभ्याम्' (का० श्रौ० १०।८।१०) इति च। तेनात्र विकारप्रज्ञप्त्यर्थं षडुत्तर इत्युच्यते, न क्रमार्थम्। षडुत्तरे षड्विकारा इत्यर्थः। उत्तरो हि विकारो भवति प्रकृत्यपेक्षया, प्रकृतिश्च पूर्वेति। तत्र च अत्यग्निष्टोमवाजपेयाप्तोर्यामाणां "ज्योतिष्टोमधर्मा एकाहद्वादशाहयोः" (का० श्रौ० १२.१.१) इत्यनेनैव विकारत्वं ज्ञापितम्। ज्योतिष्टोमप्रकरणसमधीतानामपि चोक्थ्यादीनामसमानविधानता। नित्यानित्यसंयोगविरोधात्। अतस्तेऽपि विकारा एव। तेन क्रतुविकारत्वस्यावाच्यत्वात्संस्थाविकारार्थोऽयमारम्भः। षडुत्तरेषट् संस्थाविकारा इति। तत्रोक्थ्यषोडश्यतिरात्राणामग्निष्टोमविकारत्वम्। अत्यग्निष्टोमस्याप्यग्निष्टोमसंशब्दनात् अग्निष्टोमविकारत्वम्। वाजपेयस्य षोडशिविकारत्वम्। कथं ज्ञायते? येन क्रतुपशू स्तत्र दर्शयति—"आग्नेयमग्निष्टोम आलभते अग्निर्वा अग्निष्टोमोऽग्निष्टोममेवैतेनोज्जयत्यैन्द्राग्नमुक्थ्येभ्य आलभत ऐन्द्राग्नानि वा उक्थ्यान्युक्थ्यान्येवैतेनोज्जयत्यैन्द्रं षोडशिनं आलभते इन्द्रो वै षोडशी षोडशिनमेवैतेनोज्जयति" इत्येवमभिधाय "सारस्वतं सप्तदशाय स्तोत्रायालभते तदेतदनतिरात्रे सति रात्रे रूपं क्रियत" इति (श० ब्रा० ५।१।३।१) षोडशिक्रतुपशूनामिह दर्शनं भवति। अतिरात्रेऽप्येते भवन्तीति चेत्। न। "अनतिरात्रे सति रात्रे रूपं क्रियत" इति श्रुतेः। तस्मात्षोडशिविकारो वाजपेय इति। अप्तोर्यामेऽपि "तिरोह्नीयेभ्यो रात्रिपर्याय उत्तम" इति तिरोन्ह्यानां दर्शनं भवति। तेनातिरात्रविकारोऽप्तोर्याम इति गम्यते। षडुत्तरे षड् विकारा इति विकारत्वज्ञापनस्य प्रयोजनं किमिति चेत्। स्वस्वप्रकृत्यपेक्षया क्रतुकरणं यथा स्यादिति। तेनात्यग्निष्टोमे आग्निष्टोमिकं क्रतुकरणं, वाजपेये षोडशिनः, अप्तोर्यामे च अतिरात्रिकम्, उक्थ्यादिषु तूक्तमेवेति। अत एव च सूत्र-

कारेण अत्यग्निष्टोमोऽग्निष्टोमानन्तरं पठितः, षोडश्यनन्तरं वाजपेयः, अतिरात्रसमनन्तरमप्तोर्याम इति। तथा च धर्मसूत्रकारेण गोतमेनाप्युक्तम् "अग्निष्टोमोऽत्यग्निष्टोम" इत्येवमाद्यभिधाय सप्तसोमसंस्था, इति। तस्मात् षडुत्तरे षट् संस्थाविकारा इति सूत्रार्थः। अत्यग्निष्टोमादयो विकृताभिः संस्थाभिः संस्थिता इति ॥ २६ ॥

## तेषामुक्थ्योऽच्छावाकमभि सन्तिष्ठते होतारमितरे ॥२७॥

तेषां संस्थाविशेषाणाम् उक्थ्योऽच्छावाकमभिसन्तिष्ठते। होतारञ्चेतरेऽभिसन्तिष्ठन्ते। किमर्थमिदमुच्यते? वाजपेये हि श्रूयते–'षोडश्यन्ते स्तोत्रञ्चमसैरेव' इति। स्तुतमनुशंसति इति च तच्छंसनं होतुर्यथा स्यादिति। तथा सोमातिरेके क्वचिदुक्तम् "ऐन्द्रावैष्णवं होता शंसतीति। तथा पूर्ववद्धोतेति। क्वचिच्च नोक्तमाचार्येण। यथा 'अतिरात्राच्चेन् बृहन्महाव्रतमेके यथोक्तम्' इति। अत्रापि स्तुतमनुशंसतीति होतुश्शस्त्रं यथास्यादित्यनुक्तसङ्ग्रहार्थं होतारमितर इत्युक्तम् ॥ २७ ॥

## वैश्यराजन्ययोः सोमे(१) न्यग्रोधस्तिभीनुपनह्येच्छन् भक्षाय ॥ २८ ॥

वैश्यराजन्ययोः सोमयागे कर्तव्ये न्यग्रोधस्तिभीनुपनह्येच्छन् भक्षायेच्छन् होमायापि। भक्षो हि हुतशेषस्यैव भवति। तस्माद्धोमायापीति। एवं होमदर्शनं भवति 'यदान्यांश्चमसानुन्नयन्त्यथैनमुन्नयन्ति यदेताञ्जुहोत्यथैनं कुशतरुणेनोपहत्य जुहोति' इति ॥ २८ ॥

## क्रयणप्रभृत्यनुसोममावृता समानमासादनं प्रागभिषवात्२९

क्रयणप्रभृति सह सोमेन सोमावृता समानमासादनादि कर्तव्यम्। सोमद्रव्यविकाराच्च प्रकृतावप्यूहः प्रवर्तत एव ॥ २९ ॥

## चमसोन्नयनकाले वाऽऽहृत्य दध्नोन्मृद्य तच्चमसमनून्नयेत् ॥

विकल्प एवायम्, तुल्यशास्त्रत्वात् ॥ ३० ॥

## हूयमानेषु कुशतरुणेन जुहोत्यहं त्वदस्मीत्यहं त्वदस्मीति ॥ ३१ ॥

इति दशमाध्याये नवमी कण्डिका ॥

इति कर्कभाष्यसहिते कात्यायनश्रौतसूत्रे दशमोऽध्यायः ॥

---

१. वेदे स्तिभिनीशब्द उपलभ्यते। अत्र स्तिभिशब्दः प्रयुक्तः। न्यग्रोधस्य वटवृक्षस्य स्तिभयः स्तिभिन्यो वा अङ्कुरा मुकुलानि वा कथ्यन्ते।

# एकादशोऽध्यायः

१

ब्रह्मत्वमतः ॥ १ ॥

आध्वर्यवमनुविहितम् । अतः परं ब्रह्मत्वं व्याख्यायत इति ॥ १ ॥

वाग्यतः कर्मणि वर्त्तमाने ॥ २ ॥

तच्च सौमिके । ऐष्टिकपाशुकेषु तूक्तमेव ॥ २ ॥

हिरण्यवत्याᳫं हुतायां दक्षिणाऽनुगच्छत्याक्रयात् ॥ ३ ॥

हिरण्यवत्यामाहुतौ हुतायां दक्षिणतो व्यवस्थितोऽनुगच्छत्याक्रयात् ॥ ३ ॥

क्रीते आङ्क्तीत्य पूर्वेणानः परीत्यापरेण वा दक्षिणोऽनुगच्छत्यानिधानात् ॥ ४ ॥

क्रीते सोमे पदार्थतया प्राङ्क्त्वा दक्षिणतो व्यवस्थितमनः पूर्वेणापरेण वा गत्वाऽनुगच्छत्यासोमनिधानात् ॥ ४ ॥

दक्षिणाग्निं वापरेण घर्मे ॥ ५ ॥

दक्षिणाग्निमपरेण वा प्रवर्ग्ये, वा दक्षिणेनेति सम्प्रदायः । अन्ये त्वाहवनीयं दक्षिणेनेति विकल्पमिच्छन्ति । दर्शपूर्णमासयोर्दृष्टत्वात् । तत्पुनर्नातीव युक्तरूपम् । न ह्यत्र दार्शपूर्णमासिकी धर्मप्रवृत्तिरपूर्वत्वात् ॥ ५ ॥

स्तम्बयजुर्हरिष्यत्याहवनीयदेशं दक्षिणेनास्ते वेदिसंहितः ॥ ६ ॥

स्तम्बयजुर्हरिष्यत्यध्वर्यौ आहवनीयदेशं दक्षिणेनास्ते वेदिसंलग्नः ॥ ६ ॥

एवं सर्वत्र प्रागग्नीषोमप्रणयनात् ॥ ७ ॥

आहवनीयदेशं दक्षिणेनास्ते । सर्वत्रग्रहणात्पूर्ववत् स्वपूर्वेषु ॥ ७ ॥

कर्मणः कर्मणो वा संहितस्तत्तदेवान्वेत्य ॥ ८ ॥

दक्षिणत आस्ते । अत्र चैके तत्तदेवान्वेत्येति बहिर्वेदावेवेच्छन्ति । अपरे स्वन्तर्वेदावपीनि विप्रतिपत्तिः ॥ ८ ॥

आहवनीये प्रणीयमानेऽप्रतिरथस्य द्वादश ब्रुवन्नग्नौ ॥९॥

अनुगच्छति ॥ ९ ॥

सर्वत्रैके ॥ १० ॥

प्रणयनोद्देशेन विधानात् । तत्पुनरयुक्तम्, प्रणयनविशेषे विहितत्वात् । तस्मादग्नावेव ॥ १० ॥

स्तीर्णायां यथार्थमेत्य ॥ ११ ॥

आस्ते दक्षिणतः । नियमार्थमिदमुक्तम् ॥ ११ ॥

अग्नीषोमीयप्रणयनायोत्तरेण धिष्ण्याञ्छालाद्वार्यं पूर्वेणेत्यास्ते दक्षिणतः ॥ १२ ॥

शालाद्वार्यस्यैव ॥ १२ ॥

हुते च सोममादायाग्निमन्वेति ॥ १३ ॥

हुते च वैसर्जिने सोमं गृहीत्वा चशब्दात् शालाद्वार्यं पूर्वेणाग्निमन्वेति ॥१३॥

यजमानो वा सोमं हरेत् ॥ १४ ॥

तुल्यशास्त्रत्वात् ॥ १४ ॥

अन्यस्मै प्रदायानिहिते यथेतमेत्यास्ते दक्षिणतः ॥ १५ ॥

अन्यस्मै प्रदाय सोमम् अनिहित आग्नीध्रेऽग्नौ उत्तरेण धिष्ण्यानेत्यास्ते तस्यैव दक्षिणतः ॥ १५ ॥

हुते च सोममादायाहवनीयमतीत्य ॥ १६ ॥

हुते वैसर्जिने सोममादाय चशब्दादन्यस्मै प्रदाय सोममाहवनीयमतीत्य चशब्दादास्ते दक्षिणतः ॥ १६ ॥

अपररात्रेऽग्नीषोमप्रणयनवदिच्छन् ॥ १७ ॥

यदुक्तं भवति उत्तरेण धिष्ण्याञ्छालाद्वार्यं च पूर्वेणेत्य तस्यैव दक्षिणत आस्ते । इच्छन्नाहवनीयस्य दक्षिणतः ॥ १७ ॥

**विप्रुषाᳬहोमᳬ हुत्वा प्रतिहर्तारमन्वारभेत वाऽदीक्षितः ॥ १८ ॥**

विप्रुड्ढोमकाले अदीक्षितः प्रतिहर्त्तारमन्वारभेत वा, न वेति विकल्पः । दीक्षितस्य तु नियमतो विहितोऽन्वारम्भः ॥ १८ ॥

**प्रस्तोत्राऽऽमन्त्रित एतं ते देवसवितः स्तुत सवितुः प्रसव इत्युक्त्वा प्रसौति ॥ १९ ॥**

प्रस्तोत्राऽऽमन्त्रितो ब्रह्मा प्रसौति 'ब्रह्मन् स्तोष्याम' इत्येवं प्रस्तोत्राऽऽमन्त्रितः "एतं ते देवसवितरित्युक्त्वा स्तुत सवितुः प्रसव" इति प्रसौति । अस्य प्रसवार्थत्वात् ॥ १९ ॥

**देवसवितरेतद् बृहस्पते प्रेति वा ॥ २० ॥**

उक्त्वा 'स्तुत सवितुः प्रसव' इति प्रसौति ॥ २० ॥

**रश्मिना सत्यायेति वा प्रतिमन्त्रम् ॥ २१ ॥**

प्रतिमन्त्रं प्रतिस्तोत्रं 'स्तुत सवितुः प्रसव' इत्यनेनैव प्रसौति । अस्मिंश्च पक्षेऽप्तोर्यामेऽन्त्यस्यैवावृत्तिः, मन्त्रान्तराभावात् ॥ २१ ॥

**येन प्रवेशनं तस्मिंस्तत्सर्पणम् ॥ २२ ॥**

सदसि येन द्वारेण प्रवेशनमङ्गीकृतं तस्मिन्नेव सर्पणम् । यदुक्तं भवति द्वार्ययोरभिमर्शनम् ॥ २२ ॥

**पूर्वेण यूपं परीत्यापरेण चेत् ॥ २३ ॥**

अपरेण द्वारेण प्रवेष्टुमिच्छति ततः पूर्वेण यूपमेति । पूर्वेण चेदपरेण ॥२३॥

**प्रशास्तुर्दक्षिणत आस्ते ॥ २४ ॥**

**अपरेण धिष्ण्यानितरे ॥ २५ ॥**

अधिकारात् ब्रह्मपुरुषा आसते ॥ २५ ॥

**नेष्टा च ॥ २६ ॥**

चशब्दादपरेण धिष्ण्यमास्ते । अध्वर्युपुरुषत्वात् पृथक्त्वेनोपादानम् ॥ २६ ॥

विसꣳस्थितसञ्चरः प्रशास्तृधिष्ण्यं वोत्तरेणापवमाने ॥२७॥

विसंस्थितसञ्चरः–अपरिसमाप्तसञ्चरः । अपवमाने प्रशास्तृधिष्ण्यं वोत्तरेणेति, वा दक्षिणेन । पवमानार्थन्त्वपरिसमाप्ते च सवने दक्षिणेनैवेति ॥ २७ ॥

स्वꣳस्वमितरे ॥ २८ ॥

इतरे पुरुषाः स्वधिष्ण्यान्नेवमेव गच्छन्ति ॥ २८ ॥

इत्येकादशाध्याये प्रथमा कण्डिका ॥

इति कर्कभाष्यसहिते कात्यायनश्रौतसूत्रे
एकादशोऽध्यायः ॥



# द्वादशोऽध्यायः

## द्वादशाहः

### १

श्रुत्यर्थमनुविधित्सताऽऽचार्येण ज्योतिष्टोमोऽनुविहितः। इदानीं श्रुतिमन्त्रपाठावसरप्राप्तो द्वादशाहोऽनुविधीयते। तत्र श्रुतिपाठः—"सर्वे ह वै देवा अग्रे सदृशा आसुः" इत्यतिग्राह्यग्रहविधानं द्वादशाहे—"तान्वै पृष्ठ्ये षडहे गृह्णीयात्पूर्वे त्र्यहे" ( श० ब्रा० ४।५।४।१३ ) इत्येवमादि। मन्त्रपाठोपि च "अग्ने पवस्व स्वपा उत्तिष्ठन्नोजसा" इत्येवमाद्यतिग्राह्यग्रहमन्त्राः। ततो द्वादशाहस्य श्रुतिमन्त्रपाठावसर इति। तत्र तावद्धर्मप्राप्त्यर्थमधिकरणमारभ्यते—

**ज्योतिष्टोमधर्मा एकाहद्वादशाहयोस्तद्गुणदर्शनात्॥१॥**

ज्योतिष्टोमस्य धर्मा ज्योतिष्टोमधर्माः। ज्योतिष्टोमशब्देन उपांश्वादिहारियोजनपर्यन्तो ग्रहयागाभ्यासोऽभिधीयते। ज्योतींषि यस्य स्तोमाः स ज्योतिष्टोमः। स्तोमैर्ह्यसौ द्योत्यत इति। ते च सोमयागस्य स्तोमाः ग्रहं गृहीत्वा चमसान्वोन्नीय स्तोत्रमुपाकरोतीति। तस्माज्ज्योतिष्टोमशब्देन सोमयागोऽभिधीयते। नन्वेवं सति ऐन्द्रवायवादीनामप्रवृत्तिर्विकारेषु भवति? नैष दोषः, "उद्भिदा यजेत" "बलभिदा यजेत" इति (१)चाऽव्यक्तत्वसामान्यात् ज्यौतिष्टोमिको विध्यन्तः(२) प्रवर्त्तते। उद्भिदादिषु च यागमात्रं श्रूयते। न च द्रव्यदेवतमन्तरेण यागः सम्भवति। अतो द्रव्यदेवतस्यापि प्रवृत्तिरिति। यत्र पुनर्द्रव्यदेवतस्य यागस्य विधानम्, यथा "ऐन्द्राग्नमेकादशकपालं निर्वपेत्" इति, तत्र तद्व्यतिरिक्तस्य प्रवृत्तिर्युक्ता। इह पुनर्न तथा। इह हि यागमात्रमेव श्रूयते तच्च द्रव्यदेवतमन्तरेण न भवति। द्रव्यदेवतमपि साधनत्वाद्धर्मो भवति। तेन तस्यापि प्रवृत्तिर्युक्तरूपेति। तस्य च धर्मा एकाहेषु द्वादशाहे च प्रवर्त्तन्ते। एकाहजात्यपेक्षया च द्विवचनम्। य एवैकस्मिन्नेकाहे धर्मप्रवृत्तिहेतुः स एव सर्वेष्वेकाहेष्वपि। कश्चासौ? धर्माणामनाम्नानम्। अव्यक्तसामान्येन च ग्रहणम्। द्वादशाहे त्वेकस्मिन्नेव ज्यौतिष्टोमिकधर्मप्रवृत्तिः। ततोऽन्यत्राहर्गणेषु धर्मप्रवृत्तिं वक्ष्यति। तद्गुणाश्चात्र दृश्यन्ते। वाजपेये "अगृहीते माहेन्द्रे" (श० ब्रा० ५।१।४।२) रथावहरणादि करोति रथावहरणावसरविधिपरे वाक्ये माहेन्द्रं दर्शयति। तथा "तं वै प्रातः सवने गृह्णीयादाग्रयणं गृहीत्वा" ( श० ब्रा० ४।५।४।६ ) इति षोडशिनोऽवसरविधिपरे वाक्ये आग्रयणं दर्शयति। तथा "माध्यन्दिने वैनान्त्सवने गृह्णीयादुक्थ्यं गृहीत्वा" ( श० ब्रा०

---

१. स्वार्थचोदितदेवताराहित्यमव्यक्तपदार्थः।

२. अङ्गकलाप इत्यर्थः।

४।५।४।७ ) इति अतिग्राह्यावसरविधिपरे वाक्ये उक्थ्यं दर्शयति। एकत्र चावस्थितं लिङ्गं स्थालीपुलाकन्यायेन सर्वत्र गमकम्, न्यायस्य तुल्यत्वात्। तुल्यो हि न्यायो धर्माणामनाम्नानमपेक्ष्या चाव्यक्तत्वसामान्येन ग्रहणमिति। न्यायस्तु पूर्वाभिहित एव सामर्थ्यादिति। एवमेताश्चोदना वैकृत्यः समर्था भवन्ति। इतरथा सापेक्षाः सत्योऽनर्थिका एव स्युरिति ॥ १ ॥

आनुमानिकस्याप्यतिदेशापवादत्वेनेदमधुनोच्यते—

## प्रथमस्य व्रात्यस्तोमसाद्यस्क्रेषु वचनात् ॥ २ ॥

व्रात्यस्तोमादिषु प्रथमस्य धर्मा उत्तरेषु प्रवर्त्तन्ते। न ज्योतिष्टोमिकाः। कुतः? वचनात्। उच्यतेऽनेनेति वचनं नामधेयं, नामधेयादित्यर्थः। तुल्यनामत्वात्तत्रैव प्रतीतिर्भवति। प्रतीत्या च धर्मसम्बन्धो भवति नान्यथेति। लिङ्गं च भवति। साद्यस्क्रे सोमक्रयणं त्रिवर्षं साण्डमभिधाय साद्यस्क्रान्तरे स्त्री गौः सोमक्रयणीत्याह। तच्चैवमेवोपपद्यते। वचनस्यातिदेशं तु वक्ष्यति—इषुश्येनवदिति। नन्वेवं तत्पूर्वमभिहितमेव "दर्शपूर्णमासधर्मा इष्टिपशुषु सामर्थ्यात्" ( का० श्रौ० ४।३।२ ) इत्यत्रानुमानिकवचनातिदेशः। वैश्वदेवधर्माश्चातुर्मास्येषु" (का० श्रौ० ४।३।४) इति प्रत्यक्षवचनातिदेशः। "सोमाद्यावभृथे" (का० श्रौ० ४।३.५) इति नामातिदेशः। त्रिः प्रकारोऽप्यतिदेश उक्तः। किमर्थं पुनरिहोच्यते? सत्यमेतदेवम्। तत्र तु व्यक्तचोदनाविषयम्। इहाव्यक्तचोदनाविषयलिङ्गोपन्यासार्थोऽयमारम्भः। न हि व्यक्तचोदनालिङ्गोक्तिरिह गमिका भवति। तस्मादपुनरुक्तता ॥ २ ॥

## अग्निष्टुत्सु च ॥ ३ ॥

चशब्दात्प्रथमस्य धर्माः प्रवर्तन्ते नामधेयादेव। नन्वग्निष्टुद्बहुत्वमेव नास्ति। एक एवाग्निष्टुत्, "त्रिवृदग्निष्टुदग्निष्टोमस्तस्य वायव्यास्वेकविंशमग्निष्टोमसाम कृत्वा ब्रह्मवर्चसकामो यजेत" इत्यभिधायाऽऽह "एतस्यैव रेवतीषु वारवन्तीयमग्निष्टोमसाम कृत्वा पशुकामो ह्येतेनेव यजेत" इति। एतस्यैवेति सर्वनामशब्देन स एवाग्निष्टुत्कार्यान्तरे विधीयते। तस्मादेक एवाग्निष्टुदिति ॥ ३ ॥

एवं प्राप्ते आह—

## एके ॥ ४ ॥

तन्नेच्छन्ति, प्राप्तकर्मानुवादेनानेकगुणविधानासम्भवात्। न हि पूर्वस्याग्निष्टुतो रेवत्यः सन्ति। ता विधातव्याः, तासु च वारवन्तीयम्, तच्चाग्निष्टोमसाम्नः कार्ये पशुकामे चेति वाक्यभेदः। कर्मान्तरपक्षे तु सगुणकर्मविधानान्नैष दोषो भवति। तस्मात्प्रतिफलमग्निष्टुतां बहुत्वम् ॥ ४ ॥

प्रकृतमिदानीमभिधीयते—

## (१)द्वादशाहः सत्त्रमहीनश्च ॥ ५ ॥

अत्र विशेषमाह—

## आसत उपयन्तीति सत्त्रलिङ्गम्, यजत इत्यहीनस्य॥६॥

"द्वादशाहमृद्धिकामा उपेयुः" इति । तथा "त्रयोदशरात्रमासीरन्" इति सत्त्र-लिङ्गम् । "द्वादशाहेन प्रजाकामं याजयेत्" इत्यहीनलिङ्गम् । अस्य तु कथनप्रयोजनं सत्त्रे सत्त्रात्मको धर्मो दातृत्वेन प्रवर्त्तते, अहनि चाहीनात्मकः ॥ ६ ॥

## (२)उभयतोऽतिरात्रं सत्त्रमुपरिष्टादहीनस्य ॥ ७ ॥

## यजमानाः सर्वे सत्त्रेषु ॥ ८ ॥

यजमाना एव सर्वे सत्त्रेषु कर्त्तारो भवन्ति । ये ऋत्विजस्ते यजमाना इत्यने-नार्त्विजीनान्पदार्थाल्लक्षणयाऽनूद्य यजमानाः कर्तृत्वेन विधीयन्ते ॥ ८ ॥

## अदक्षिणानि च स्वामियोगात् ॥ ९ ॥

तानि च सत्त्राण्यदक्षिणानि भवन्ति । न हि कश्चिदात्मनैवात्मानं परि-क्रीणीते ॥ ९ ॥

## गृहपतिर्याजमानमयुक्तत्वात् ॥ १० ॥

याजमानं यत्कर्म तद् गृहपतिः करोति, कर्मान्तरे तस्यायुक्तत्वात् । इतरेषां चाध्वर्यवादिषु योगात् ॥ १० ॥

## दर्शनाच्च ॥ ११ ॥

दृश्यते चायमर्थो यथा गृहपतेर्याजमानं कर्मेति । तस्माद्यदि बहवो दीक्षेरन् गृहपतय एव व्रतमभ्युत्सिच्य प्रयच्छेयुरिति ॥ ११ ॥

## सर्वे संस्कारात् ॥ १२ ॥

हेतुश्चायमुपदेशश्च । यत्संस्कारकं कर्म तत्सर्वैरभ्युपेयम् । कस्य चित्संस्कार-परिलोपो मा भूदिति ॥ १२ ॥

## दर्शने वचनात् ॥ १३ ॥

---

१. द्वादशाहयागः सत्त्रात्मकः, अहीनात्मकश्चेति सूत्रार्थः ।

२. सत्त्रस्यादावन्ते चाऽतिरात्रो भवति अहीनस्यान्ते एवेति सूत्रार्थः ।

यत्तु दर्शनमुक्तं तद्वचनम् ॥ १३ ॥

## अविभवति गृहपत्यन्वारम्भः ॥ १४ ॥

यत्र पुनः पदार्थबहुत्वस्याविभवः पुरुषार्थरूपतापि गम्यते। यथाग्न्यन्वाधाने "ममाग्ने वर्चो विहवेष्वस्तु" इत्येवमादि। तत्र गृहपतेः कुर्वतोऽन्वारम्भः कर्त्तव्यः। सर्वैरेव हि तत्कृतं भवतीति ॥ १४ ॥

## परार्थेष्वेकः कृतत्वात् ॥ १५ ॥

यत्र पुनः क्रत्वभिनिर्वृत्त्यर्थमेव कर्म। यथा पात्रासादनमाज्यावेक्षणं वा, तत्रैकस्यैव कर्तृत्वम्, कृतत्वात्पदार्थस्य ॥ १५ ॥

## अग्निं चेष्यमाणः समारोह्य गृहपतिर्मध्ये मन्थत्यर्द्धश इतरे दक्षिणोत्तराः ॥ १६ ॥

ते यद्यग्निं चेष्यमाणा भवन्तीति वचनाच्चेष्यमाण इत्युक्तम्। समारोह्येति च पूर्वकालतामात्रे ल्यबादेशो न समानकर्तृकतायां चोदको मा बाधीति। गृहपतिर्मध्ये मन्थनं करोति। अर्द्धश इतरे दक्षिणोत्तरा मन्थन्ति ॥ १६ ॥

## गृहपत्याहवनीयेऽङ्गारप्रासनम् ॥ १७ ॥

## तत्र प्राजापत्यः पशुः ॥ १८ ॥

तत्र विहारे प्राजापत्यः पशुर्भवति। पुनर्ग्रहणाच्चाहर्गणे प्राजापत्यस्य नियमः। तथा चाश्वमेधे नियमदर्शनं भवति—"प्राजापत्यमालभ्योत्सीदन्तीष्टय" इति ॥ १८ ॥

## आज्येन पत्नीसंयाजा गृहपतिवर्जम् ॥ १९ ॥

"गृहपतेरेव गार्हपत्ये जाघन्या पत्नीः संयाजयन्त्याज्येनेतरे प्रतियजन्त आसते" (श० ब्रा० ४।६।८।१९) इति वचनात् ॥ १९ ॥

## तदहर्दीक्षा ॥ २० ॥

दीक्षायाः पशोश्चैककालतोच्यते। तत्र दीक्षाकाले पशुः कर्त्तव्यः। न पशुकाले दीक्षा। एवं सोमकालविरोधो न भवति। इतरथा कालस्य विरोधः स्यात् ॥ २० ॥

## अशक्तौ नियतक्रिया समारूढनिर्मथितेषु सर्वत्र ॥ २१ ॥

पशुदीक्षयोरेककालताऽशक्तौ, स्वकाले पशुं कृत्वा समारोपननिर्मन्थनपूर्विका नियतानां क्रिया। सर्वत्र ग्रहणाच्च त्रिष्वपि मन्थनपक्षेषु ॥ २१ ॥

दीक्षाकाल उदग्वꣳशायां पूर्ववन्मन्थनम् ॥ २२ ॥

उदग्वंशायामिति नियमः । पूर्ववदिति यथापूर्वमुक्तम् ॥ २२ ॥

गार्हपत्ये प्रासनमत्र ॥ २३ ॥

अङ्गारस्य भवति ॥ २३ ॥

आहवनीयस्ततः ॥ २४ ॥

उद्ध्रियते दक्षिणाग्निश्च, तुल्यन्यायत्वात् ॥ २४ ॥

तत्र दीक्षा ॥ २५ ॥

भवति ॥ २५ ॥

उपवसथप्रभृति प्रागग्नीषोमप्रणयनादुपशमय्य चिनोत्ये-नाञ्छालाद्वार्याद्दक्षिणोत्तरान्धिष्ण्यवत् ॥ २६ ॥

अग्नीषोमप्रणयनात् प्रागदक्षिणोत्तरान् गार्हपत्यानुपशमय्य शालाद्वार्याद्दक्षिणो-त्तरांश्चिनोति गार्हपत्यान्धिष्ण्यवत् ॥ २६ ॥

कुत एतत् ?

श्रुतेः ॥ २७ ॥

अथेतरेभ्य उपवसथे धिष्ण्यानिति । धिष्ण्यानित्यसत्यपि वतिप्रत्यये वत्यर्थो गम्यते, अतस्मिंस्तच्छब्दस्य तद्वदतिदेशार्थत्वात् ॥ २७ ॥

वा यथोक्तं गृहपतेः ॥ २८ ॥

वाशब्दात्पक्षो विपरिवर्त्तते । न धिष्ण्यवच्चिनोति । किं तर्हि ? यथोक्तं गृहपतेः गार्हपत्यस्य चयनं तथेतरेषामपि, गार्हपत्याविशेषात् । धिष्ण्यशब्दस्तर्हि कथम् ? संस्थानवचन इत्यदोषः ॥ २८ ॥

इति द्वादशाध्याये प्रथमा कण्डिका ॥

२

आग्नीध्रीय उद्यतेऽङ्गारमेकैकꣳ हरन्ति प्रतिचित्ति शाला-द्वार्यात् ॥ १ ॥

"उद्यत एवैष आग्नीध्रीयोऽग्निर्भवत्यथैते एकैकमेवोल्मुकमादाय यथा धिष्ण्यं विपरायन्ति" ( श०ब्रा०४।६।८।७ ) इति। तच्च यजमाना एव ॥ १ ॥

**प्रत्यग्नि सवनीयपुरोडाशा भूयो हविरुच्छिष्टमसत्समाप्त्या इति श्रुतेः ॥ २ ॥**

"अथ यन्नाना पुरोडाशा भूयो हविरुच्छिष्टमसत्समाप्त्या इति" ( श० ब्रा० ४।६।८।१७ ) नानापुरोडाशता च द्वादशाहिको धर्मः, सूत्राम्नानात्। प्रयोजनं विकारेष्वैकाहिकेषु न भवति ॥ २ ॥

**पत्नीसंयाजाश्च पूर्ववत् ॥ ३ ॥**

भवन्ति ॥ ३ ॥

**गृहपतिं वा पर्युपविश्य मन्थन्ते ॥ ४ ॥**

वाशब्दो विकल्पार्थः ( १ ) ॥ ४ ॥

**गृहपतिः प्रथमः प्रथमः सर्वत्र ॥ ५ ॥**

सर्वपक्षेषु ॥ ५ ॥

**जातं जातं गृहपतिर्गार्हपत्ये प्रास्यन्त्युभयत्र ॥ ६ ॥**

पर्युपवेशनपक्षे पशौ दीक्षायां चोभयत्र ग्रहणात् ॥ ६ ॥

**उपवसथप्रभृति तुल्यः सर्वेषु ॥ ७ ॥**

उपवसथप्रभृति यदुक्तं तत्पक्षत्रयेऽपि तुल्यं भवति। नाना गार्हपत्त्या इति यदुक्तं भवति ॥ ७ ॥

तृतीयं पक्षान्तरमुच्यते—

**अरण्योर्बाहुर्गृहपतेर्य इतोऽग्निर्जनिष्यते स नः सह यदनेन यज्ञेन जेष्यामोऽनेन पशुबन्धेन तन्नः सह सह नः साधुकृत्या नाना पापकृत्या य एव पापं करवत्तस्यैव तदित्युक्त्वा गृहपतिः समारोहयते स्वौ प्रथमम् ॥ ८ ॥**

---

१. गृहपतेरकस्य मन्थनं सर्वेषां सत्रिणां मन्थनमिति पक्षद्वयम्। तत्र गृहपतेर्मन्थन पक्षे सत्रिणां सहोपवेशनमित्यर्थः।

"अथेदं तृतीयं गृहपतेरेवारण्योः संवदन्ते" (श०ब्रा०४।६।८।१३) इति वचनात्। गृहपतिः समारोहयते स्वावग्नी प्रथमम् ॥ ८ ॥

यथास्वं वेतरे ॥ ९ ॥

गृहपतिर्वेति विकल्पः। गृहपतिं हि प्रकृत्य श्रूयते—"अथेतरेभ्यः समारोहयति स्वयं वैव समारोहयन्त" ( श०ब्रा०४।६।८।१३ ) इति ॥ ९ ॥

अस्मिन्नेव पक्षे अयमपरो विशेषः—

दीक्षाकाले संवादप्रभृति पशुबन्धस्थाने सत्त्रेणेति ॥१०॥

पशौ अरण्योर्वाहुः गृहपतिरित्येतस्मिन्पशुबन्धेनेति यत्तत्स्थाने सत्त्रेणेति प्रयोगः ॥ १० ॥

एकाहवद्धोत्तमे शालागार्हपत्यपुरोडाशपत्नीसंयाजाः॥११॥

एकाहवदिति। उत्तमे पक्षे वा प्राग्वंशा शाला भवति वोदग्वंशेति विकल्पः। उपवसथप्रभृति नानागार्हपत्येषु प्राप्तेषु विकल्पेन गार्हपत्यैकत्वमुच्यते। पुरोडाशपत्नीसंयाजानामप्येवमेव ॥ ११ ॥

एकपुरोडाशेषु व्रत्यासम्भवादैन्द्रं पञ्चशरावमोदनं निर्वपेत्पुरोडाशं वा "यद्योदनीयन्ति यद्यपूपीयन्ति" इति श्रुतेः ॥ १२ ॥

एकपुरोडाशपक्षेषु कथं नाम व्रत्यसम्भवः स्यादिति ऐन्द्रं पञ्चशरावमोदनं निर्वपेत् पुरोडाशं वा। यद्योदनीयन्ति विकल्पेनौदनमिच्छन्ति। यद्यपूपीयन्त्यपूपमिच्छन्ति। तस्य चास्य यागशेषस्य पुरुषार्थरूपता। न पुरुषार्थस्य यागार्थता, दृष्टार्थत्वात् ॥ १२ ॥

बार्हस्पत्यमेके ॥ १३ ॥

कुर्वन्ति नैन्द्रम् ॥ १३ ॥

दीक्षा द्वादशोपसदश्च ॥ १४ ॥

भवन्ति ॥ १४ ॥

अध्वर्युर्गृहपतिं दीक्षयति ब्रह्मादींश्चाध्वर्य्वादीन्प्रतिप्रस्थाता प्रतिप्रस्थात्रादीन्नेष्टा नेष्ट्रादीनुन्नेता उन्नेतारं ब्रह्मचारी स्नातकोऽन्यो वा ब्राह्मणो "न पूतः पावयेत्" इति श्रुतेः ॥ १५ ॥

अथोन्नेतारं स्नातको वा ब्रह्मचारी वाऽन्यो वा दीक्षितो दीक्षयति "न पूतः पावयेत् इति ह्याहु" रिति। अन्यो वा ब्राह्मण इति ब्राह्मणग्रहणं ब्रह्मचारिस्नातकयोरब्राह्मणयोरपि प्राप्त्यर्थमुन्नेतृसम्बन्धार्थं च उन्नेतृसम्बन्धो ब्रह्मचारी स्नातकश्च यथा स्यादिति ॥ १५ ॥

(१)अनुपति पत्नीरुत्तर उत्तरः ॥ १६ ॥

दीक्षयति ॥ १६ ॥

त एवोन्नेतुः ॥ १७ ॥

ब्रह्मचार्यादयः दीक्षयन्ति ॥ १७ ॥

दक्षिणाकाले कृष्णाजिनानि धून्वाना दक्षिणापथेन जपन्तो गच्छन्ति यन्मे गदायुषः परागितोऽगात्तां तेऽगद दक्षिणां नयामीतीदमहममुमामुष्यायणममुष्यपुत्रममुष्याःपुत्रं कामाय दक्षिणां नयामीति ॥ १८ ॥

अमुमामुष्यायणममुष्यपुत्रममुष्याः पुत्रमिति यथास्वमुच्चारणम्। स चायं सत्त्रधर्म्मः। अतश्चाहीने न भवति। ऐकाहिकेषु च नासाविष्यते ॥ १८ ॥

इति द्वादशाध्याये द्वितीया कण्डिका।

३

पृष्ठ्यः षडहः प्रथमोऽग्निष्टोमश्चतुर्थः षोडश्युक्थ्या इतरे ॥ १ ॥

षण्णामह्नां पृष्ठ्य इतीयं संज्ञा। सा च वैदिकी। दृश्यते च तया संव्यवहारः— "अभिप्लवं पूर्वं पुरस्ताद्विषुवत उपयन्ति पृष्ठ्यमुत्तरम्" इत्येवमादि ॥ १ ॥

तत्रातिग्राह्यग्रहणं त्र्यहे पूर्वेऽग्ने पवस्वोत्तिष्ठन्नदृशमित्यन्वहमेकैकम् ॥ २ ॥

अतिग्राह्यान्हि प्रकृत्य श्रूयते—"तान्वै पृष्ठ्ये षडहे गृह्णीयात् पूर्वे त्र्यहे आग्नेयमेव प्रथमेऽहन्यैन्द्रं द्वितोये सौर्यं तृतीये" ( श० ब्रा०४।५।४।१३ ) इति ॥ २ ॥

१. उत्तरउत्तरो दीक्षाकर्ता पतिसमीपे तत्पत्नीर्दीक्षयतीत्यर्थः।

## उत्तरे वा ॥ ३ ॥

अतिग्राह्यग्रहणम् "एवमेवान्वहम, तानु हैक उत्तरे त्र्यहे गृह्णन्ति" ( श० ब्रा० ४।५।४।१४ ) इति श्रुतेः ॥ ३ ॥

## उभयोर्वा ॥ ४ ॥

त्र्यहयोर्ग्रहणम् । एवमपि हि श्रूयते—"पूर्व एवैनांस्त्र्यहे गृहीत्वाऽथोत्तरे त्र्यहे गृह्णीयात्" ( श० ब्रा० ४।५।४।१४ ) इति । पक्षत्रयं विकल्पेन । सम्प्रदाये तु पक्षद्वयम्—पूर्वे वा त्र्यहे, उभयोर्वेति ॥ ४ ॥

## माहेन्द्रमनुहोमः ॥ ५ ॥

अतिग्राह्याणाम् ॥ ५ ॥

## अग्ने वर्चस्विन्निन्द्रौजिष्ठ सूर्य भ्राजिष्ठेति भक्षणं यजमानैः ॥ ६ ॥

सहहोमाभिषवकर्तृयजमानानामपूर्वभक्षविधानम् । न हि तत्प्रत्याम्नायः ॥६॥

## पृष्ठकाले रथसंसारणं प्रथमे दक्षिणेन वेदिम् ॥ ७ ॥

माहेन्द्रयाज्याभ्यासस्तोत्रं पृष्ठम् । तत्काले दक्षिणेन वेदिं रथसंसारणं पृष्ठ्यस्य प्रथमेऽहनि ॥ ७ ॥

## द्वितीये दुन्दुभिशब्देनोपाकरणम् ॥ ८ ॥

द्वितीयेऽहनि दुन्दुभिशब्देन पृष्ठोपाकरणम् ॥ ८ ॥

## तृतीय औपवाजनैः ॥ ९ ॥

उपवाजना व्यजनका उच्यन्ते ॥ ९ ॥

## चतुर्थेऽरणिभ्यां मन्थनं चोद्गातुरूरौ होमश्च ॥ १० ॥

चतुर्थेऽहनि अरणिभ्यां मन्थनं चोद्गातुरूरौ होमश्चाहवनीये ॥ १० ॥

## पञ्चमे (१)सावकयोदपात्र्या ॥ ११ ॥

उपाकरणम् ॥ ११ ॥

---

१. शैवाला अवकशब्दार्थः । तत्सहितयोदपात्र्येत्यर्थः ।

षष्ठे सांवाशिनेन ॥ १२ ॥

सांवाशिनशब्दार्थोऽप्रसिद्ध इत्यत आह—

मातृभिर्वत्सान्त्सᳪसृज्य सदः पूर्वेण व्यावर्त्तयन्ति ॥१३॥

स्वयमृतुयाजेज्याऽर्वाञ्चमद्य यय्यं नृवाहणᳪ रथं युञ्जाथामिह वां विमोचनं पृङ्क्तᳪ हवीᳪषि मधुना हि कं गतमथा सोमं पिबतं वाजिनीवसू इति॥ १४ ॥

सा चाध्वर्युप्रतिप्रस्थात्रोः। ताभ्यां प्रेषिताभ्यां प्रकृतावुक्तं होतरेतद्यजेति। तेन चाश्विनाविष्टौ इयमपि द्विवचनान्तत्वात् आश्विनयाग एवेति गम्यते ॥ १४ ॥

(१)होतृप्रत्ययः प्रतिगरः ॥ १५ ॥

माहेन्द्रग्रहशस्त्रे ॥ १५ ॥

प्राकृतं चान्यार्थत्वादितरेषाम् ॥ १६ ॥

प्राकृतं च प्रतिगरपदं प्रवर्त्तते, अन्यार्थत्वादितरेषां होतृकाणाम्, प्रतिगरपदानामदृष्टार्थत्वात्। एवं च कृत्वा स्तोत्रोपाकरणमपि प्राकृतं प्रवर्त्तते, अदृष्टार्थत्वाद्रथसंसारणादीनाम् ॥ १६ ॥

षडहान्ते न बहु वदेत् नान्यं पृच्छेत् नान्यस्मै प्रब्रूयात् ॥

तच्च क्रत्वर्थस्वाध्यायविषयमिति सम्प्रदायः। तत्र हि प्रश्नप्रत्याख्यानानि सम्भवन्ति। षडहान्तग्रहणाच्च तदन्त एव भवति न विकृते षडहे ॥ १७ ॥

मधोः प्राशनं घृतस्य वा ॥ १८ ॥

तत्रैतद्धर्ममात्रम् दृष्टार्थाभावात् ॥ १८ ॥

उक्थ्याश्छन्दोमास्त्रय उत्तरे ॥ १९ ॥

उत्तरे छन्दोमास्त्रय उक्थ्याः ॥ १९ ॥

अत्यग्निष्टोमोऽविवाक्यं दशमम् ॥ २० ॥

अत्यग्निष्टोमसंस्थमविवाक्यसंज्ञं दशममहर्भवति ॥ २० ॥

---

१ होतृवेदे यादृशः प्रतिगरः पठितस्तादृशः कर्तव्य इत्यर्थः।

## पत्नीसंयाजान्तान्यहान्यन्त्यवर्जम् ॥ २१ ॥

तच्चैतत्पदार्थपर्यवसानं न तदन्ताङ्गरीतिविधानम् । अवभृथस्य दीक्षोन्मोचनार्थत्वात्सर्वान्तेऽवभृथः । तत्र समिष्टयजुरन्ते पर्यवसाने प्राप्ते "पत्नीसंयाजान्तान्यहानि सन्तिष्ठन्ते" इति वचनादिह पर्यवसानम् । "द्वादशाहमृद्धिकामा उपेयुः" इति युगपत्परिसमाप्तिरित्यत इदमुच्यते अन्त्यवर्जमिति ॥ २१ ॥

इति द्वादशाध्याये तृतीया कण्डिका ॥



४

## एकैको वाग्यतः सोमं रक्षत्याबोधनात् ॥ १ ॥

"तेषामेकैक एव वाचंयम आस्ते" ( श० ब्रा० ४।६।९।६ ) इति वचनात् आबोधनात् इत्येतावन्तं कालं रक्षणमस्य ॥ १ ॥

"वाचमाप्याययंस्तया पीनया यातयाम्न्योत्तरमहस्तन्वते" (श० ब्रा० ४।६।९।६) इत उत्तराहःशेषभावं दर्शयति—

## वसतीवरीपरिहरणादि वा ॥ २ ॥

यतवाक्त्वं भवति, उत्तराहःशेषभूतत्वात् "तेषामेकैक एव वाचंयम आस्ते" ( श० ब्रा० ४।६।९।६ ) ॥ २ ॥

## इतरे विसृज्यन्ते स्वाध्यायाय समिद्भ्यो वा ॥ ३ ॥

इतरे दीक्षिताः स्वाध्यायार्थं समिदर्थं च गच्छन्ति । अथेतरे विसृज्यन्ते समिद्द्वारा वा स्वाध्यायं वा' ( श० ब्रा० ४।६।९।६ ) इति वचनात् । स्वाध्यायश्चोत्तराहःशेषभूतो नित्यप्रतिषेधात् । वाशब्दश्चार्थे द्रष्टव्यः । सोमरक्षितात्विहस्थ एव स्वाध्यायं करोति । समिधश्चाप्यानीयन्ते । कार्यार्थत्वादुभयोः ॥ ३ ॥

## तत्राप्यशनम् ॥ ४ ॥

अशनमपि तत्र गतानां भवति । "तत्राप्यशनन्ति" ( श० ब्रा० ४।६।९।६ ) इति वचनात् ॥ ४ ॥

## दशमे वा सन्निधेः ॥ ५ ॥

दशमे वाऽहनि समित्स्वाध्यायोपगमो भवति । तत्सन्निधौ हि शिष्यते वा । सर्वत्र, प्रकरणात् । सन्निधिः क्रमः स प्रकरणेन बाध्यते । तस्मात्सर्वत्रैव ॥ ५ ॥

अस्तमिते समिदाधानꣳ सर्वेषु ॥ ६ ॥

सर्वेष्वहःसु यजमानेषु अग्निषु च प्रतिपत्तव्यम्, शाखान्तरात् ॥ ६ ॥

दशमेऽपराह्णेऽप उपस्पृश्य शालाप्रवेशनम् ॥ ७ ॥

दीक्षितानाम् ॥ ७ ॥

शालाद्वार्येऽन्वारब्धेष्विह रतिरिति जुहोति ॥८॥

"तेषु समन्वारब्धेष्वेते आहुती जुहोति" (श०ब्रा० ४।६।९।७) इति श्रुतेः ॥८॥

अपरामुपसृजन्निति ॥ ९ ॥

आहुतिं जुहोति ॥ ९ ॥

उत्तरेण परिक्रम्यापरेण हविर्धानं प्रविश्योत्तरस्य हविर्धान-स्यापरकूबरीमालभ्य सत्त्रस्यर्द्धिं गायन्ति सत्त्रस्य ऋद्धिरिति ॥ १० ॥

शालाद्वार्यादुत्तरेण परिक्रम्यापरेण द्वारेण हविर्धानम्प्रविश्य उत्तरस्य हविर्धानस्य दक्षिणामपरकूबरीमालभ्य सत्रस्यर्धिं गायन्ति सत्रस्य (१)ऋद्धिरित्याहुः सर्व एव दीक्षिताः ॥ १० ॥

उत्तरवेदिश्रोण्यां वोत्तरस्याम् ॥ ११ ॥

सत्रस्यर्धिगानं कुर्वन्ति । वाशब्दाद्विकल्पः, शाखस्य तुल्यत्वात् ॥ ११ ॥

युवं तमिति दक्षिणस्याधोऽक्षं प्राञ्चो निष्क्रामन्ति ॥१२॥

"युवं तम्" (२)इत्यनेन मन्त्रेण दक्षिणस्य हविर्द्धानस्य अधोऽक्षं प्राञ्चो निष्कामन्ति। सदः प्रविश्य पूर्वेण स्वासनेषूपविशन्ति। पूर्वेण द्वारेण सदः प्रविश्य धिष्ण्याऽव्यवायेन स्वासनेषूपविशन्ति ॥ १२ ॥

ग्रहं गृह्णाति प्राजापत्यं वायुं पृथिव्या पात्रेण ग्रहणसादन-स्तोत्रोपाकरणहोमभक्षाहरणभक्षणानि मनसा ॥ १३ ॥

कर्त्तव्यानि ॥ १३ ॥

---

१, २. मन्त्राविमौ वाजसनेयसंहितायामष्टमाध्याये समाम्नातौ।

चतुर्होतृव्याख्यानं होतुः ॥ १४ ॥

शस्त्रं भवति ॥ १४ ॥

गृहपतिरजानति ॥ १५ ॥

होतर्यजानति गृहपतिर्व्याचक्षीत ॥ १५ ॥

प्रतिगृणात्यरात्सुरिमे यजमाना भद्रमेभ्यो यजमानेभ्योऽभूदिति ॥ १६ ॥

चतुर्होतृव्याख्याने प्रतिगरः ॥ १६ ॥

ब्रह्मोद्यं वदन्ति ॥ १७ ॥

तन्न ज्ञायते किमिति ? अत आह—

प्रजापतेरगुणाख्यानम् ॥ १८ ॥

कुतोऽर्थवादात् प्रजापतिमेव तत्परिवदन्ते ॥ १८ ॥

अप्रतिभायां वा तद्वादः ॥ १९ ॥

प्रजापतिं परिवदितुं प्रतिभेव नास्ति, तस्य विधिप्रतिषेधाभावात्। तस्माद-सदेतत् ॥ १९ ॥

आश्वमेधिकं वा नामधेयात् ॥ २० ॥

आश्वमेधिकं वा ब्रह्मोद्यम्। कुत एतत् ? नामधेयात्। नामधेयं हि ब्रह्मोद्यमिति तत्रैव प्रतीतिं जनयति ॥ २० ॥

अनस्तमिते गृहीत्वौदुम्बरीं वाचं यच्छन्ति ॥ २१ ॥

तच्च प्रतिपत्तिपरिसमाप्त्युत्तरकालम् पत्नीसंयाजान्ते हि सत्रोत्थानम्। "तद्वा एतत् दशमेऽहन्त्सत्त्रोत्थानं क्रियते" ( श० ब्रा० ४।६।९।६ ) इति ॥ २१ ॥

अस्तमिते निष्क्रम्यापरेणोत्तरवेदिमासते प्रतिप्रस्थाता वसतीवरीः परिहरति ॥ २२ ॥

वचनात् ॥ २२ ॥

वाग्विसर्जनं सत्त्रकामेन ॥ २३ ॥

येन कामेन सत्त्रमारब्धं तेन वाग्विसर्जनं "असौ नः कामः समृध्यताम्" ( श० ब्रा० ४।६।९।२३ ) इति ॥ २३ ॥

**पृथक्कामेषु भूर्भुव इति ॥ २४ ॥**

भूर्भुवः स्वरिति वाग्विसर्जनम्। "यद्यु अनेककामाः स्युर्लोककामा वा प्रजाकामा वा पशुकामा वाऽनेनैव वाचं विसृजेरन् भूर्भुवः स्वरिति" (श० ब्रा० ४।६।९।२३,२४) ॥

**सुब्रह्मण्याह्वानं गृहपतेर्यं(१) वाह गृहपतिः ॥ २५ ॥**

**सुब्रह्मण्य उपमा ह्वयस्वेत्युक्त्वा समिदाधानम् ॥ २६ ॥**

यस्य यस्य सुब्रह्मण्याह्वानं स सुब्रह्मण्य उप माह्वयस्वेत्युक्त्वा समिदाधानं करोति ॥ २६ ॥

**अप उपस्पर्शनाद्येतत्सत्त्रोत्थानम् ॥ २७ ॥**

सत्त्रोत्थानमिति नामधेयम्। तच्च संव्यवहारार्थम्। दशरात्रोऽसत्त्रोत्थान इति ॥ २७ ॥

इति द्वादशाध्याये चतुर्थी कण्डिका ॥

५

अतिग्राह्यषोडशिप्रसङ्गेनेदमुच्यते—

**अन्तराग्रयणोक्थ्यावागन्तुस्थानं ग्रहाणाम् ॥ १ ॥**

आग्रयणोक्थ्यावन्तरेणागन्तवो ग्रहा ग्राह्याः ॥ १ ॥

**प्रातः सवनेऽतिग्राह्यान्गृहीत्वा षोडशिनं खादिरेण चतुस्स्रक्तिना तिष्ठ युक्ष्वा हीति वा ॥ २ ॥**

"तं वै प्रातः सवने गृह्णीयात्, आग्रयणं गृहीत्वा" ( श०ब्रा०४।५।३।७ ) इति वचनात्। ततः षोडशिनं गृह्णाति खादिरेण चतुःस्रक्तिना "आतिष्ठ" "युक्ष्वा हि"(२) इति मन्त्रविकल्पः। अतिग्राह्यबहुत्वस्याभावाच्च बहुवचनमुच्चारणार्थम्। अतिग्राह्य-षोडशिनोः पौर्वापर्यं शाखान्तरात्। अस्यापि हि ग्रहणमाग्रयणादुत्तरमेव, "तं वै प्रातः-सवने गृह्णीयादाग्रयणं गृहीत्वा" ( श०ब्रा०४।५।३।७। ) इति ॥ २ ॥

१. अथवा गृहपतियं ब्रह्मादिकं सत्त्रिणं प्रत्याह स करोतीत्यर्थः।

२. मन्त्राविमौ वाजसनेयसंहितायामष्टमाध्याये ३३।३४ संख्याकौ।

माध्यन्दिने वाऽऽग्रयणादुत्तरः ॥ ३ ॥

षोडशी गृह्यते। एवमपि श्रूयते-"माध्यन्दिने वैनं सवने गृह्णीयादाग्रयणं गृहीत्वा" (श०ब्रा०४।५।३।८।) इति ॥ ३ ॥

धाराग्रहान्ते वाऽतिग्राह्यात् ॥ ४ ॥

"माध्यन्दिने वैनान्त्सवने गृह्णीयादुक्थ्यं गृहीत्वा" (श०ब्रा ४।५।४।७) इति श्रुतेः ॥ ४ ॥

पूतभृतो वोपाकरिष्यन्पृष्ठम् ॥ ५ ॥

षोडशिनं गृह्णाति। पृष्ठमुपाकरिष्यन्नतिग्राह्यान्गृह्णातीति योगविभागः। एवं चातिग्राह्याणां कालत्रयम् षोडशिग्रहस्य तु चत्वारः कालाः। अन्तराग्रयणोक्थ्यौ तृतीयसवने कण्वपाठाच्चतुर्थः कालः ॥ ५ ॥

अपो निधायांऽशवदाभ्यग्रहणमौदुम्बरेण चतुःस्रक्तिना ॥६॥

अंशुग्रहणे वाच्येऽदाभ्यग्रहणोक्तिः सन्नियोगसिद्ध्यर्था ॥ ६ ॥

अंशोस्तूष्णीं सर्वम् ॥ ७ ॥

वक्ष्यमाणं पदार्थजातम् ॥ ७ ॥

अनुच्छ्वसंश्चेच्छ्वत् ॥ ८ ॥

वक्ष्यमाणकमेव ॥ ८ ॥

अद्र्यादानांशुनिवपनोपसर्जनसकृत्प्रहरणग्रहणहोमात् हिरण्यं चोपजिघ्रति ॥ ९ ॥

अथ हिरण्यमभिन्यनक्तीति वचनात् ॥ ९ ॥

उद्यम्य वा प्रहरणम् ॥ १० ॥

स चायं विकल्पः, शाखस्य तुल्यत्वात् ॥ १० ॥

सत्त्रसहस्रसर्ववेदसवाजपेयराजसूयविश्वजित्सर्वपृष्ठ्येषु ग्रहणमवकाश्यश्चेत् ॥ ११ ॥

यजमानः ॥ ११ ॥

द्वादशवत्सतर्यो गर्भिण्यो दक्षिणाऽसत्त्रे ॥ १२ ॥

अदक्षिणत्वात्सत्राणामसत्त्र इत्युक्तम् ॥ १२ ॥

बुभूषतोऽदाभ्यं गृह्णाति ॥ १३ ॥

सन्नियोगशिष्टत्वाददाभ्यस्य भूतिरिच्छयेष्यते ॥ १३ ॥

आसिच्य निग्राभ्याः पात्रे तस्मिंस्तूष्णीं त्रीनᳪशूनवधायाग्नये त्वा गायत्रच्छन्दसमिति प्रतिमन्त्रम् ॥ १४ ॥

अंशुपात्रे निग्राभ्यास्तूष्णीमासिच्य त्रीनशूनवधाय "अग्नये त्वा गायत्रच्छन्दसम्" इति प्रतिमन्त्रम्। मन्त्राभावात् 'तूष्णीम्' इति लौकिकवागुच्चारणप्रतिषेधः ॥१४॥

उपयामः सर्वत्राविशेषात् ॥ १५ ॥

सर्वेष्वेवांश्ववधानेषूपयामो भवति। कुत एतत्? सर्वैर्हि योगोऽविशिष्टः। यथाद्येन तथोपरितनाभ्यामपि। तस्मादुपयामस्यानुषङ्गः ॥ १५ ॥

किं च—

विग्रहादित्यग्रहप्रतिषेधाच्च ॥ १६ ॥

विग्रहादित्यग्रहेषु च प्रतिषेधो भवति—"तं वै नोपयामेन गृह्णीयान्न योनौ सादयेत्" इति। तथा आदित्यग्रहे—"तं वै नोपयामेन गृह्णीयादग्रे ह्येवैष उपयामेन गृहीतो भवति" ( श० ब्रा० ४।३।५।११ )। तस्मादंशववधानं प्रत्युपयाम इति। अन्ये पुनरन्यथा वर्णयन्ति। उपयामः सर्वग्रहेष्वेव भवति यत्राप्यनाम्नातः। कुत एतत्? अविशेषेण हि श्रूयते—"तद्य उपयामेन ग्रहा गृह्यन्ते" ( श० ब्रा० ४।१।२।६ ) इति। विग्रहादित्यग्रहप्रतिषेधाच्च। एवञ्च सति वाजपेये सप्तदशसु सोमग्रहेषु उपयामः सिद्धो भवति। सम्प्रदाये पुनर्यत्रैवोपयामाम्नानं तत्रैव भवति, नान्यत्र। नन्वनेनैव सर्वविषयता भवतु, नेत्युच्यते। न ह्येष विधिः। (१)यच्छब्दाभिसम्बन्धात्प्राप्तानुवादोऽयम्। अंशववधाने तु विद्यमानत्वादनुषङ्गोऽनुमन्यते। विग्रहादित्यग्रहे अनुषङ्गस्य प्रतिषेधः। तत्रोपयामो विद्यत एवेत्यभिप्रायः। "उपयामगृहीतोसीन्द्राय त्वा बृहद्वते वयस्वते" ( श० ब्रा० ४।२।३।१० ) इत्युक्थ्ये। आदित्यग्रहेष्वपि "उपयामगृहीतोऽसीति गृहीत्वा गृहीत्वा द्विदेवत्याननुजुहोति" इति। सर्वविषयोऽयमुपयाम इत्ययमेवोज्ज्वलतरः पक्षः। न हि विग्रहादित्यग्रहेष्वनुषङ्गप्रतिषेधो युज्यत इति। तस्मात्सर्वविषयतोपयामस्येत्येवं बुध्यामहे ॥ १६ ॥

---

१. यत्तदादिशब्दघटितेषु विधायकत्वशक्तिः कुण्ठिता भवतीति विधिमन्त्राधिकरणे ( पू० मी० १. ४. ५. ) साधितम्।

अनुष्टुप्त इत्युक्त्वा धनोत्यꣳशुभिर्त्रेशीनां त्वेति गच्छन्ना-हवनीयं तस्मै त इति जुहोति ॥ १७ ॥

"तस्मै ते" इत्यनेन मन्त्रेण जुहोत्युदकम् ॥ १७ ॥

अꣳशून्त्सोमे निदधात्युशिक्कमिति प्रतिमन्त्रम् ॥ १८ ॥

ईषान्तरेणावहृताꣳशून्त्सोमे ततो हि ते गृहीता इति ॥ १८ ॥

अंशुवद्दक्षिणा ॥ १९ ॥

भवति ॥ १९ ॥

उक्थ्यान्ते षोडशिचरणमुपस्थायैनं यस्मान्न जात इति चमसानुन्नीय ॥ २० ॥

उक्थ्यप्रचारान्ते षोडशिचरणम् । "यस्मान्न जातः" (वा० सं० ८।३६) इत्युपस्थायेनं चमसानुन्नीय पूर्वतरम् ॥ २० ॥

इति द्वादशाध्याये पञ्चमी कण्डिका ॥

६

तृणहिरण्यैः स्तोत्रोपाकरणमुपास्तमयꣳ सोमोऽत्यरेच्युपा-वर्त्तध्वमिति कृष्णेऽश्व उपतिष्ठति ॥ १ ॥

तृणहिरण्यैः षोडशिनः स्तोत्रोपाकरणम् । अस्तमनसमये "सोमोत्यरेच्युपावर्त्त-ध्वम्" इत्यनेन मन्त्रेण कृष्णेऽश्व उपतिष्ठति ॥ १ ॥

इन्द्रश्च सम्राडिति भक्षणम् ॥ २ ॥

भवति ॥ २ ॥

आ पात्रप्रक्षालनात्कृत्वाऽतिरात्रश्चेत्सौम्येन सहाश्विनो द्विकपालः सर्वत्र ॥ ३ ॥

आ पात्रप्रक्षालनात्कृत्वा षोडशिनः । अत्रैव च षोडशिसंस्थापरिसमाप्तिः । उत्तरेणातिरात्रे विशेष उच्यते । सौम्येन सहाश्विनो द्विकपालः सर्वत्र कर्त्तव्यः । सर्वत्र ग्रहणाच्चातोऽन्यत्राप्याश्विनो द्विकपाल एव भवति ॥ ३ ॥

अतिरात्र एवापरो विशेष उच्यते—

त्रयः पर्यायाश्चमसैश्चतुस्तोत्रः पर्यायः ॥ ४ ॥

चमसयागपर्यायास्त्रयः । चतुःस्तोत्र एकैकः पर्यायः ॥ ४ ॥

तत्र च—

होतुः प्रथमं प्रथममुक्थ्यवदितरेषु ॥ ५ ॥

शस्त्रकर्त्तारः ॥ ५ ॥

तदन्ते चमसानुन्नीय स्तोत्रोपाकरणꣳ सन्धेः ॥ ६ ॥

तेषां पर्यायाणामन्ते चमसानुन्नीय सन्धिस्तोत्रोपाकरणम् ॥ ६ ॥

होता शꣳसत्याश्विनम् ॥ ७ ॥

पर्यायान्तेष्वभिप्रवृत्त्याऽच्छावाको मा भूदिति होतेत्युच्यते ॥ ७ ॥

शस्त्रान्त आश्विनेन सर्वहुतेन चरति एकदानंश्चमसैः॥८॥

आश्विनो भवति वचनसामर्थ्यात्सर्वहुतश्च ॥ ८ ॥

अश्विभ्यान्तिरोन्ह्यानाꣳ सोमानामनुवाचनप्रैषौ ॥ ९ ॥

अत्र भवतः । ज्योतिष्टोमे षोडश्यतिरात्रयोः क्रतुपशवः क्रतुकरणं चोक्तम् । क्रतुशेषः संस्थाविशेषोऽत्राभिहित इति ॥ ९ ॥

ऐन्द्राग्नः सवनीयोऽन्वहम् ॥ १० ॥

भवति । स चायमहर्गणधर्मः । तथा च विकृतावैकाहिकेष्वपि भवति ॥ १० ॥

स्तोमायनं वा ॥ ११ ॥

यथास्वं भवति ॥ ११ ॥

एकादशिना वा विहृताः ॥ १२ ॥

भवन्ति ॥ १२ ॥

अस्मिंश्च पक्षे—

द्वादश आद्यः ॥ १३ ॥

भवति ॥ १३ ॥

## सर्वसमासो वैन्द्राग्नी वा ॥ १४ ॥

वेति विकल्पः ॥ १४ ॥

## यावच्छेषमुत्तरेषु ॥ १५ ॥

उत्तरेष्वहर्गणेषु एकादशिने पक्षे यावच्छेषमालम्भनम् ॥ १५ ॥

## काम्यः सत्त्रम् ॥ १६ ॥

नित्यवचनाभावात् काम्यत्वे प्राप्ते काम्यग्रहणं पृथक्कामानामधिकारप्रज्ञापनार्थम् ॥ १६ ॥

## अहीने व्यूढच्छन्दसि दशरात्रस्य चतुर्थनवमयोरह्नोराग्रयणग्रहणं प्रथमम् ॥ १७ ॥

"तद्यत्रैतद्द्वादशाहेन व्यूढच्छन्दसा यजते" (श० ब्रा० ४।५।९।१) इति । व्यूढच्छन्दाश्चाहीनोऽस्ति यमङ्गीकृत्य उद्गातुर्होतुश्छन्दसां व्यूहनमाम्नातम् । तत्र विशेषव्याचिख्यासयेदमाह—दशरात्रस्य चतुर्थनवमयोरह्नोराग्रयणग्रहणं प्रथमम् ॥ १७ ॥

## शुक्रस्य षष्ठसप्तमयोः ॥ १८ ॥

प्रथमग्रहणं भवति । प्राथम्यं चैन्द्रवायवापेक्षया, नोपांश्वन्तर्यामापेक्षया । येनैवमाह—"अथैतत्प्रज्ञातमेव पञ्चममहर्भवति तदैन्द्रवायवाग्रान् गृह्णाति" (श० ब्रा० ४।५।९।३) इति प्रज्ञात एवाहन्यैन्द्रवायवाग्रान् ग्रहान् दर्शयति ॥ १८ ॥

## असादनमा पूर्वेषां ग्रहणात् ॥ १९ ॥

पूर्वेषां ग्रहणादर्वागसादनं तस्य ॥ १९ ॥

## परिमार्जनभृतिकाले हिङ्कृत्य सादनम् ॥ २० ॥

यस्य हिङ्कारो विहितः इतरस्य तत्र हिङ्कृत्यैव ॥ २० ॥

## अव्यूढो वा ॥ २१ ॥

छन्दसां व्यूहनपक्षेऽपि वाऽव्यूढो भवति द्वादशाहः । एवमपि श्रूयत इति ॥२१॥

## उभयतोऽतिरात्रः ॥ २२ ॥

अयं द्वादशाहो भवति । या त्वन्यतरतोऽतिरात्रोक्तिरुक्ता सा विकृतिविषया ॥ २२ ॥

## अतिप्रेषितेऽग्नीदाह श्वः सुत्यामिन्द्राग्निभ्यां प्रब्रवीमि विश्वेभ्यो देवेभ्यो ब्राह्मणेभ्यः सोमपेभ्यो ब्रह्मन्वाचं यच्छेति ॥ २३ ॥

सर्वान्प्रैषानतीत्य वर्त्तते इत्यतिप्रेषितो हारियोजनोत्तरकाल इत्यर्थः। तत्राग्नीदाह "श्वः सुत्यामिन्द्राग्निभ्यां प्रब्रवीमि" इत्येवमादि। अयं च श्वस्तनाऽहःशेषभूतः। ब्रह्मन्वाचं यच्छेत्ययं त्वद्यतनस्यैव। प्रयोजनमैकाहिकेषु विकारेषु द्वादशाहिकेषु च यथार्थं प्रयोगः ॥ २३ ॥

## प्रायणीयेऽद्य सुत्यामेके प्राप्तकालत्वात् ॥ २४ ॥

प्रायणीयोऽतिरात्रो द्वितीयेऽहनि परिसमाप्यते। तत्र पार्ष्ठिकं प्रथममहर्भवति। तेनैतदुच्यतेऽद्य सुत्यामिति वक्तव्यम्। प्राप्त एव हि काल इति ॥ २४ ॥

एवं प्राप्त आह—

## न पूर्वशेषात् ॥ २५ ॥

पूर्वस्यैवाह्नः शेषभूतोऽयमित्यतिप्रेषितः। ततश्च श्वःशब्देन कर्मान्तरमुच्येत नाऽहरन्तरम् ॥ २५ ॥

## अचोदितत्वाच्च ॥ २६ ॥

न चैवंविधा चोदना विद्यते—'प्रायणीयेऽद्य सुत्यामिति वक्तव्यम्' इति ॥२६॥

## तस्माच्च श्वोभावात् ॥ २७ ॥

तस्माच्च कर्मणः। श्वःशब्देन कर्मान्तरमुच्यते ॥ २७ ॥

## अग्निमद्येति च लिङ्गात् ॥ २८ ॥

अद्यशब्दः कर्मविषयः। अग्निमद्य होतारमवृणीतायं यजमान इति। अन्यस्मिन्नेवाऽहरन्तरे वृतो होताऽद्यशब्देनोच्यते। तत्र कर्मविषयेऽद्यशब्द उपपद्यते नान्यथेति ॥ २८ ॥

इदमेव तावद्विचार्यते किं प्रायणीयात् उत्तरं यदहस्तस्मिन्नेवाहन्यारब्धव्यमुत द्वितीय इति। किं तावत्प्राप्तम्? सूत्रेणैवोपक्रमः—

## प्रायणीयादुत्तरमहः श्वः कालाभावात् ॥ २९ ॥

प्रायणीयादवसितादुत्तरमहः उत्तरङ्कर्म श्व आरब्धव्यं न तस्मिन्नेवाहनि। कुत एतत्? कालो हि न सम्भवेत्। तत्र प्रागवाचः प्रवदनात्प्रातरनुवाककालः। तथोपांशव-

न्तर्यामयोः "तयोरुदितेऽन्यतरं जुहोत्यनुदितेऽन्यतरम्" ( श० ब्रा० ४।१।२।११ ) इति कालो न सम्भाव्यते। श्वः पुनः क्रियमाणे सम्भवति॥ २९॥

एवं प्राप्ते प्राह—

## न सम्पच्छ्रुतेः॥ ३०॥

नैतदेवं श्व आरब्धव्यमिति। अद्यैवारभ्यते। कुत एतत्? सम्पच्छ्रुतिर्हि भवति "षट्त्रिंशदहो वा एष यद् द्वादशाहः षट्त्रिंशदक्षरा वै बृहती तद् बृहतीमभिसम्पद्यते" इति। तच्चैवमुपपद्यते श्वस्तनेऽहन्यारम्भे न षट्त्रिंशद्भिर्व्यवतिष्ठेत। तत्र सम्पच्छ्रुतिविरोधात्॥ ३०॥

## कालो वचनात्॥ ३१॥

यः पुनः कालविरोधः स वचनादिति॥ ३१॥

इति द्वादशाध्याये षष्ठी कण्डिका॥

इति कर्कभाष्यसहिते कात्यायनश्रौतसूत्रे

द्वादशाहो द्वादशाध्यायश्च समाप्तः।



# त्रयोदशोऽध्यायः ।

## गवामयनम्

१

उक्तो द्वादशाहः । तत्सन्निधावेव गवामयनस्य परामर्शोऽस्ति "सौर्यं द्वितीयं पशुमालभते वैषुवतेऽहन्प्राजापत्यं महाव्रते" ( श० ब्रा० ४।६।३।२ ) इति गवामयनमेव तावदारभ्यते । पूर्वं धर्मप्राप्त्यर्थमधिकरणम् ।

### द्वादशाहधर्माः सत्रेषु तद्गुणदर्शनात् ॥ १ ॥

द्वादशाहिका धर्माः सत्त्रेषु प्रवर्त्तन्ते । तद्गुणा ह्यत्र दृश्यन्ते "अभिप्लवं पूर्वं पुरस्ताद्विषुवत उपयन्ति पृष्ठ्यमुत्तरम्" इति, तथा "पृष्ठ्यमुपरिष्टाद्विषुवतः पूर्वमुपयन्ति" इति चेति पौर्वापर्यविधिपरे वाक्ये द्वादशाहिकं पृष्ठ्यं दर्शयति । न्यायस्तु पूर्वमुक्त एव सामर्थ्यात् । गण एव गणमनुग्रहीतुं समर्थो नान्यः ॥ १ ॥

### गवामयनायैकाष्टकायां दीक्षा ॥ २ ॥

"एकाष्टकायां दीक्षेत" इति वचनात् ॥ २ ॥

### फाल्गुनीपौर्णमासे ॥ ३ ॥

अत्रापि हि वचनम् "फाल्गुनीपौर्णमासे दीक्षेरन्" इति ॥ ३ ॥

### चैत्र्याम् ॥ ४ ॥

"पौर्णमासे दीक्षेत" इति वचनादेव ॥ ४ ॥

### चतुरहे वा पुरस्तात्प्राक्पौर्णमास्याः ॥ ५ ॥

पौर्णमासी च फाल्गुनी सा ह्यत्र पूर्वमभिहिता । तस्याः पुरस्ताच्चतुरहे दीक्षेरन् । एवमपि हि श्रूयते "प्राक्पौर्णमास्याश्चतुरहे दीक्षेरन्" इति ॥ ५ ॥

### चैत्र्यानन्तर्यात् ॥ ६ ॥

चैत्री वा चतुरहविशेषणत्वेन प्रतिपत्तव्या । तस्या ह्यनन्तरमेतत् श्रूयते "चैत्र्यां चैत्रे पौर्णमासे दीक्षेरन्" इति वचनादेव ॥ ६ ॥

### सर्वा वाऽविशेषात् ॥ ७ ॥

सर्वाः पौर्णमास्यश्चतुरहविशेषणत्वेन प्रतिपत्तव्याः, विशेषानवगमात्। एवं च पौर्णमासीशब्दः सर्वत्र प्रवर्तमानो न सङ्कोचितः स्यात् ॥ ७ ॥

## माघी वा क्रयश्रुतेः ॥ ८ ॥

वाशब्दः पक्षव्यावृत्तौ। माघी वा चतुरहविशेषणम्। न पौर्णमासीमात्रम्। एवं हि श्रूयते "प्राक्पौर्णमास्याश्चतुरहे दीक्षेरन्निति दीक्षितानामेकाष्टकायां क्रयः सम्पद्यते" इति। एकाष्टका नाम माघकृष्णाष्टमी ॥ ८ ॥

कुत एतत्?

## लोकप्रत्ययात् ॥ ९ ॥

एषा हि लोके एकाष्टकेति प्रसिद्धा ॥ ९ ॥

किं च—

## अर्थवादाच्च ॥ १० ॥

अर्थवादश्चात्र भवति "ता उत्तिष्ठन्त ओषधयो वनस्पतयोनूत्तिष्ठन्ते"। "तान् दीक्षितानुत्तिष्ठन्ते" "ओषधिवनस्पतीनां प्ररोहो भवति"। तच्चैवमुपपद्यते। तथा तह्यपोऽभिनन्दमाना अवभृथमभ्यवयन्ति। एतदप्येवमेव घटते। वनस्पतिप्ररोहोऽपामभिनन्दनं च चैत्रोद्देश एव भवति। तस्मान्माघी चतुरहविशेषणम् ॥ १० ॥

## पवमानेषूद्गातारमन्वारभेरन्श्येनोऽसि गायत्रच्छन्दा अनु त्वारभे स्वस्ति मा सम्पारय सुपर्णोऽसि त्रिष्टुप्छन्दा ऋभुरसि जगच्छन्दा इतीतरयोः सवनयोः सवनान्तेषु जपन्ति मयि भर्गो मयि महो मयि यशो मयि सर्वमिति ॥ ११ ॥

बहुवचनोपदेशात्सर्वे यजमानाः उद्गात्रालम्भसवनान्तजपान् कुर्वन्ति ॥ ११ ॥

## सर्वत्रैके ॥ १२ ॥

सर्वत्रैवैक एतदिच्छन्ति ॥ १२ ॥

कुत एतत्?

## यजतिशब्दात् ॥ १३ ॥

पुरुषो ह नारायणं प्रजापतिरुवाच यजस्व यजस्वेत्येवमुक्त्वैतत्सर्वमभिहितमिति ॥ १३ ॥

## न प्रकरणात् ॥ १४ ॥

नैतदेवं सर्वत्रैतदिति । येन गवामयनं प्रकृत्यैतच्छ्रूयते । तत्र यजतिशब्दोऽप्यत्र गृह्यते प्रकरणमपि । तस्मान्न सर्वत्रैतदुद्गात्रालम्भः । सवनान्तजपश्च गवामयनधर्मत्वा-दैकाहिकेष्वपि प्रवर्त्तते ॥ १४ ॥

इति त्रयोदशाध्याये प्रथमा कण्डिका ॥

२

## अभिप्लवः षडहोऽग्निष्टोमौ प्रथमान्त्या उक्थ्या इतरे ॥ १ ॥

षण्णामन्हाममिप्लव इतीयं वैदिकी संज्ञा । संस्थामात्रनिर्देशश्चात्र । संस्थास्त्वै-काहिकाः । एवं ह्याहाऽभिप्लवरूयहः त्र्यावृद्धिर्ज्योतिर्गौरायुरिति । ज्योतिरादय एव प्रतिलोमानुलोमाः । तथा चाग्निष्टोमौ प्रथमान्त्यौ भवतः उक्थ्या इतरे । एवं चात्र नाम्ना धर्मा ऐकाहिका भवन्ति न द्वादशाहिकाः । सत्रगणधर्मास्तु प्रवर्त्तन्त एव ॥ १ ॥

## अतिरात्राच्चतुर्विंशमहरग्निष्टोम उक्थ्यो वा ॥ २ ॥

अतिरात्रादवसिताच्चतुर्विंशमहःसंज्ञकोऽग्निष्टोम उक्थ्यो वा भवति । गवामय-निकश्चायम् । ततश्च द्वादशाहिका अपि धर्माः प्रवर्त्तन्ते ॥ २ ॥

## चत्वारोऽभिप्लवा पृष्ठयश्च मासः ॥ ३ ॥

## एवं चत्वार उत्तरे ॥ ४ ॥

मासा भवन्ति ॥ ४ ॥

## षष्ठे त्रयोऽभिप्लवाः पृष्ठ्यः ॥ ५ ॥

षष्ठे मासेऽभिप्लवास्त्रयः पृष्ठ्यश्च ॥ ५ ॥

## अभिजिदग्निष्टोमः ॥ ६ ॥

ननु चायमग्निष्टोमसंस्थ एवाभिजित् किमुच्यते अग्निष्टोम इति ? उच्यते, अग्निष्टोमग्रहणादभिजिदन्तरं तत्संज्ञकं गवामयनिकमेतत् । अतश्चात्र द्वादशाहिका अपि धर्माः प्रवर्त्तन्ते ॥ ६ ॥

## त्रयः स्वरसामानोऽग्निष्टोमा उक्थ्या वा ॥ ७ ॥

स्वरसामसंज्ञकास्त्रयो भवन्ति अग्निष्टोमा उक्थ्या वा ॥ ७ ॥

## अग्निष्टोमो विषुवान् ॥ ८ ॥

विषुवत्संज्ञकोऽग्निष्टोमो भवति ॥ ८ ॥

## प्रातरनुवाकः सन्धिवेलायामुदिते यथोक्तं वा ॥ ९ ॥

दिवाकीर्त्यमेतदहर्भवतीति श्रूयते। तेनैतदुच्यते सन्धिवेलायामिति। यद्येवम् नेयता चोदकपरिप्राप्तकालबाधः शक्योऽभ्युपेतुम्। दिवाकीर्त्यता हि ब्राह्मणविषया। अस्य ब्राह्मणं दिवा कीर्त्यत इति। दिवा कीर्त्यत इति दिवाकीर्त्यम्। कीर्त्तनशब्दश्चोच्चारणार्थो नानुष्ठानार्थः। एवं चेद्यथोक्तमेवेत्यवधार्यते ॥ ९ ॥

## सौर्य उपालभ्यः ॥ १० ॥

"सौर्यं द्वितीयं पशुमालभते वैषुवतेहन्" (श० ब्रा० ४।६।३।३) इति वचनात् ॥ १० ॥

## उदुत्यमिति ग्रहग्रहणमतिग्राह्यवद्भक्षवर्जम् ॥ ११ ॥

अतिग्राह्यवच्च विधिर्भवति भक्षवर्जमस्य ॥ ११ ॥

## पूर्वपक्षप्रतिलोमम् ॥ १२ ॥

पूर्वपक्षः प्रातिलोम्येनोत्तरो भवति ॥ १२ ॥

अत्र विशेषमाह—

## अभिजितस्थाने विश्वजिदग्निष्टोमः ॥ १३ ॥

स च—

## सर्वपृष्ठश्चेत्सर्वेऽतिग्राह्याः ॥ १४ ॥

भवन्ति। एतदपि चाग्निष्टोमग्रहणाद्विश्वजिदन्तरं नैकाहिक इति। ऐकाहिकत्वे हि अग्निष्टोमग्रहणं न करोत्याचार्यः कृतं च। तस्माद्विश्वजिदन्तरं गवामयनिकमेतत्। अतश्च द्वादशाहिका अप्यत्र धर्म्मा भवन्ति ॥ १४ ॥

## षष्ठे मासे त्रयोऽभिप्लवा गोऽआयुषी दशरात्रो महाव्रतमग्निष्टोमः ॥ १५ ॥

अत्र दशरात्रो द्वादशाहिको महाव्रतं गवामयनिकं शेषा ऐकाहिकाः ॥ १५ ॥

महाव्रते विशेषमाह—

## प्राजापत्य उपालभ्यः ॥ १६ ॥

भवति। "प्राजापत्यं महाव्रते" ( श० ब्रा० ४।६।३।२ ) इति वचनात् ॥ १६ ॥

ग्रहं गृह्णाति वि न इन्द्र वाचस्पतिं विश्वकर्मन्निति वाऽतिग्राह्यवत् ॥ १७ ॥

गृहीतस्य विधिर्भवति ॥ १७ ॥

उप मा यन्तु मज्जयस्सनीडा उप मा जन्तुरुपमा मनीषा प्रियामहं तन्वं पश्यमानो मयि रमो देवानां तेजसे ब्रह्मवर्चसायेति भक्षणं यजमानैः, पृष्ठ्योपाकरणं (१)बाणेन शततन्तुना ॥ १८ ॥

कर्तव्यम् ॥ १८ ॥

मौञ्जास्तन्तवो वैतसं वादनम् ॥ १९ ॥

इति त्रयोदशाध्याये द्वितीया कण्डिका ॥

३

बृसीषूपविशन्ति प्रेङ्खे होता फलकेऽध्वर्युः प्रतिगृणाति ॥१॥

प्रेङ्खशब्देन हि दोलोच्यते ॥ १ ॥

उद्गाताऽऽसन्द्यां प्रादेशपाद्यां सोमासन्दीवत् ॥ २ ॥

अन्यदन्तर्वेदि ॥ ३ ॥

वक्ष्यमाणं कर्म भवति ॥ ३ ॥

अभिगराऽपगरौ ॥ ४ ॥

अभिगरो दीक्षितस्तुतिः, अपगरश्च निन्दा ॥ ४ ॥

तच्चेदमुक्तम्—

(२)आक्रोशत्येकः प्रशंसत्यपरः ॥ ५ ॥

---

१. बाणो महती वीणा।

२. एकः सत्रिणो निन्दामपरश्च स्तुतिं करोतीत्यर्थः।

पुंश्चलूब्रह्मचारिणावन्योन्यमाक्रोशतः ॥ ६ ॥

पुंश्चलूर्जवनचपला स्त्री ॥ ६ ॥

शूद्रार्यौ चर्म्मणि परिमण्डले व्यायच्छेते ॥ ७ ॥

निमित्तसप्तमीयम् (१) चर्म्मणि निमित्तभूते ॥ ७ ॥

(२)जयत्यार्यः ॥ ८ ॥

मार्जालीयं दक्षिणेन परिवृत्ते मिथुनं सम्भवति ॥ ९ ॥

क्षत्रियः सन्नाहयति दक्षिणां वेदिश्रोणिमपरेण ॥ १० ॥

सन्नहनक्रियां कारयति । कारिते चाध्येषणा क्षत्रियं सन्नह्यस्वेति ॥ १० ॥

मर्माणि त इति कवचं प्रयच्छति ॥ ११ ॥

क्षत्रियाय ॥ ११ ॥

तूष्णीमन्येभ्यः ॥ १२ ॥

बहुवचनोपदेशात्त्रिभ्यः । अन्यशब्दस्य समानजातीयनियमात्क्षत्रियेभ्यः ॥ १२ ॥

त्रिः समन्तं परियन्ति शालामपरेणोत्तरेण चात्वालं वशा-चर्मकटे बिशाख्यां वा स्तीर्णमुच्छ्रितं वा विध्यन्त्य-निष्पत्रम् ॥ १३ ॥

कटे आस्तीर्णं विशाख्यां वोच्छ्रितं अनिष्पत्रमिति अनिःश्रृतपत्रं विध्यन्ति क्षत्रियाः ॥ १३ ॥

दक्षिणेन चर्मयन्ति त्रिर्बिद्ध्वा पुरस्ताद्विमोचनम् ॥ १४ ॥

वितानस्य ॥ १४ ॥

सदः स्रक्तिषु दुन्दुभीन्वादयन्ति ॥ १५ ॥

---

१. शूद्रत्रैवर्णिकौ वर्तुले चर्मणि व्यायच्छेते विरुद्धमात्माभिमुखमाकर्षणं कुर्वाते, मदीयमिदं मदीयमिदमिति-स्पर्धया स्वाभिमुखं बलादाकर्षणं कुर्वाते इति यावत् ।

२. तयोस्त्रैवर्णिको जयतीत्यर्थः ।

आग्नीध्रमपरेण श्वभ्रं सवालधानेन चर्मणाऽवनह्य वालधानेनाघ्नन्ति ॥ १६ ॥

वालधानं पुच्छमुच्यते ॥ १६ ॥

(१) गोधावीणाः काण्डवीणाश्च पत्न्यो वादयन्ति ॥१७॥

उपगायन्ति ॥ १८ ॥

स्तोत्रस्योपगानं कुर्वन्ति ॥ १८ ॥

अन्यांश्च शब्दान् कुर्वन्ति ॥ १९ ॥

ये केचन गानप्रसिद्धा मूर्च्छनादयः ॥ १९ ॥

उदकुम्भान् शिरस्सु कृत्वा मार्जालीयं दास्यः परियन्ति ॥

वाचयत्येनाः पर्यायादिषु ॥ २१ ॥

एना दास्यः पर्यायादिषु वाचयति ॥ २१ ॥

हैमहा३ हैमहा३ इति ॥ २२ ॥

पर्यायानिदानीमाह—

गावो हारे सुरभय इदं मधु गावो गुल्गुलगन्धय इदं मधु गावो घृतस्य मातर इदं मधु ता इह सन्तु भूयसीरिदं मधु तकावयं प्लवामह इदं मधु शम्या प्रतरतामि वेदं मधु न वै गावो मन्दारस्य गङ्गाया उदकं पपुः सरस्वतीनदीं ताः प्राच्य उज्जिगाहीर इदं मधु निर्गीर्य सर्वा आधीरिदं मधु मध्वित्याकर्षैः कुशैर्यथेदं मध्विति ॥ २३ ॥

एवं मध्वित्याकर्षैः कुशैरिति सर्वत्रानुषङ्गः ॥ २३ ॥

---

१. गोधाचर्मणा नद्धा वीणा गोधावीणाः, काण्डः शर इत्युच्यते, तन्मय्यो वीणाः, ता उभयविधा वीणाः सर्वाः पत्न्यो वादयन्ति, स्तुतिभिः सत्त्रिणस्ता उपगायन्तीत्यर्थः ।

## अपसव्यं प्रदक्षिणं चास्तोत्रान्तात् ॥ २४ ॥

दास्यः परियन्ति(१) ॥ २४ ॥

## त्रिस्त्रिर्वा ॥ २५ ॥

अपसव्यं प्रदक्षिणं च परिगमनम् ॥ २५ ॥

## निषिच्य मार्जालीये पूर्णां निदधति ॥ २६ ॥

निषिच्य यत्र क्वचन प्रदेशे मार्जालीये पूर्णां निदधति दास्यः ॥ २६ ॥

## अभिगरादिस्तूयमाने सर्वं क्रियते ॥ २७ ॥

स्तूयमाने महाव्रतस्तोत्रे । महाव्रतशब्दश्च एकः क्रतुप्रतिपादकः महाव्रतमग्निष्टोम इति । अपरः स्तोत्रपर्यायः महाव्रतेन स्तुवीतेति । अत्र च श्रूयत इति । स एष संवत्सरस्त्रिमहाव्रतश्चतुर्विंशे महाव्रतं विषुवति महाव्रते महाव्रत एव महाव्रतमिति । त्रिष्वपि क्रतुषु महाव्रतस्तोत्रं भवतीति संप्रदायः । महाव्रत एव महाव्रतमित्यपरे । एवं हि श्रूयते त्रिमहाव्रतं प्रकृत्य–"ते तेजस्विनः आसुः सत्यवादिनः संशितव्रताः यैस्तु महाव्रतत्वमनुष्ठितमन्ये आचार्या इति । अथ य उ हैनमप्येतर्हि तथोपयुर्यथा तैरनुष्ठितम्" । एषां दोषमाह—यथा पात्रमुदकमासिक्तं विमृत्येदेवं हैते विमृत्येयुः । अतश्च उपर्युपयन्ति महाव्रतक्रतौ महाव्रतं स्तोत्रमिति त्रिमहाव्रते दोषमुद्भाव्य महाव्रते महाव्रतस्तोत्रं विदधाति । अतश्च विकल्पो न महाव्रत एव महाव्रतमिति ॥ २७ ॥

## अतिरात्रः श्वः ॥ २८ ॥

प्राप्तत्वादवाच्यमिति चेत् ? उच्यते, संवत्सरसत्त्रत्वात् पूर्णे संवत्सरेऽतिरात्राभावो मा भूदित्यतिरात्रग्रहणम् । यद्येवमतिरात्रः किमिति भवति ? "अथैतदहरत्येति यद्वैषुवतम्" इति वचनात् ॥ २८ ॥

## तिस्रोऽनूबन्ध्या मैत्रावरुणीवैश्वदेवीबार्हस्पत्याः ॥२९॥

अत्र च द्रव्याभ्यासो न कर्मबहुत्वम् । अभ्यस्तरूपमेकं कर्म (२)प्रकृतावेकत्वात् ॥ २९ ॥

## संवत्सरावरेषु सत्त्रेष्वसारस्वतेषु सहस्रदक्षिणावरेषु च ॥३०॥

---

१. अप्रदक्षिणं सकृत्परियन्ति ततः प्रदक्षिणं सकृत्परियन्ति महाव्रतस्य स्तोत्रस्य समाप्ति यावत् ।

२. प्रकृतौ ज्योतिष्टोमे एकत्वादनुबन्ध्याया आवृत्तिरेव न संख्यया कर्मभेद इत्यर्थः ।

क्रतुषु तिस्रोऽनूबन्ध्या भवन्ति । एवं श्रूयते–"स यः सहस्रं वा भूयो वा दद्यात्स एताः सर्वा आलभेत" इति । तथा—"अथो ये दीर्घसत्त्रमासीरन् संवत्सरं वा भूयो वा त एनाः सर्वा आलभेरन्" इति ॥ ३० ॥

## अनूबन्ध्यावपाहोमान्ते दक्षिणस्यां वेदिश्रोणौ सर्वके-शश्मश्रुलोमवपनम् ॥ ३१ ॥

भवतीति सूत्रशेषः ॥ ३१ ॥

## पत्न्यश्च ॥ ३२ ॥

चशब्दात् वपनेनाभिसंबध्यन्ते ॥ ३२ ॥

## त्रैधातव्युदवसानीया सर्वत्र ॥ ३३ ॥

सर्वत्रग्रहणेन संवत्सरावराणि सत्त्राणि असारस्वतानि सहस्रदक्षिणावराश्च क्रतवो गृह्यन्ते । तुल्यं हि ब्राह्मणमन्त्रानूबन्ध्याविधायकं त्रैधातवीविधायकं च ॥ ३३ ॥

## अवभृथादुदेत्य ज्योतिष्टोमोऽग्निष्टोमः पृष्ठशमनीयः॥३४॥

अवभृथग्रहणं समाप्त्युपलक्षणार्थम् । ननु चात्राग्निष्टोम एव भवति संस्थान्तरस्यानुक्तत्वात् व्यर्थमग्निष्टोमग्रहणम् । अत उच्यते, गुणकामानां प्रवृत्तिज्ञापनार्थमित्यदोषः । पृष्ठशमनीय इति च संज्ञा ॥ ३४ ॥

## सहस्रदक्षिणो वा ॥ ३५ ॥

वा प्राकृतदक्षिणः ॥ ३५ ॥

## एकाहमेके ॥ ३६ ॥

इच्छन्ति ॥ ३६ ॥

## सत्त्राङ्गं प्रकरणात् ॥ ३७ ॥

स च पृष्ठशमनीयः सत्त्रस्याङ्गं भवति । तद्धि प्रकृत्य श्रूयते "अवभृथादुदेत्य ज्योतिष्टोमोऽग्निष्टोमः पृष्ठशमनीय" इति ॥ ३७ ॥

किं च—

## फलाऽश्रुतेश्च ॥ ३८ ॥

न चात्र फलं श्रूयते । तस्मादपि सत्त्राङ्गम् ॥ ३८ ॥

## न फलं न्यायात् ॥ ३९ ॥

नैतदेवं सत्त्राङ्गमिति, न्यायेन(१) हि फलमत्र परिकल्पते ॥ ३९ ॥

## कालप्राधान्याच्च ॥ ४० ॥

अपि चाऽस्य कालप्रधानः शब्दः सत्त्रादुदवसायेति। एवं प्राप्ते पुनर्व्यावर्त्यते। सत्त्राङ्गमेव प्रकरणात्। फलाश्रुतेश्चेति (२)फलवत्सत्त्रसन्निधौ तदङ्गतेव न्याय्या। एवं च फलं न कल्पयितव्यं भवति। पृष्ठशमनीय इति चार्थानुगता संज्ञा पृष्ठानां सत्रे नियुक्तानामुपजातश्रमाणां शमनं करोतीति पृष्ठशमनीयः। सारस्वतेषु च प्रतिषेधात्—"अपृष्ठशमनीयानि सारस्वतानि" इति ॥ ४० ॥

## सहस्रदक्षिणे त्रिरात्रे प्रतिविभज्य नयन्रोहिणीमुपध्वस्तामप्रवीतामतिरेचयति त्रिरूपां वा ॥ ४१ ॥

अहीने यः सहस्रदक्षिणस्त्रिरात्रस्तत्र प्रतिविभागेन प्रत्यहं दक्षिणापथेन दक्षिणां नयन्रोहिणीं वर्णान्तरोपध्वस्तां अकामितामतिरेचयति। त्रिरूपां वेति विकल्पः। एवमेव हि श्रूयते इति ॥ ४१ ॥

## आद्येऽहन् प्रथमां नयेदन्त्ये वा पश्चात् ॥ ४२ ॥

आद्येऽहनि पक्षे गवां प्रथमां नयेत्। अन्त्ये वाऽहनि पश्चादिति ॥ ४२ ॥

## हविर्धानाग्नीध्रान्तरे द्रोणकलशमेनामाघ्रापयत्याजिघ्रेति ॥ ४३ ॥

हविर्धानाग्नीध्रान्तरे व्यवस्थितामेनां रोहिणीं द्रोणकलशमाघ्रापयत्याजिघ्रेत्यनेन मन्त्रेण ॥ ४३ ॥

## इडे रन्त इति दक्षिणेऽस्याः कर्णे यजमानो जपति ॥ ४४ ॥

प्रत्यगाशीर्योगेऽपि सति यजमानग्रहणं क्रियते। रोहिणीसंस्कारोऽयमिति अध्वर्युर्मा भूदिति ॥ ४४ ॥

## वोचेरिति वाऽन्ते ॥ ४५ ॥

मन्त्रस्य ब्रूतादिति विकल्पः ॥ ४५ ॥

---

१. विश्वजिन्न्यायेनेत्यर्थः।

२. फलवत्सन्निधावफलं तदङ्गमिति न्यायेनेत्यर्थः।

सर्वतो नवसु दशमीं कृत्वा होत्रे दद्यात् ॥ ४६ ॥

त्रिभ्योऽप्यहोभ्यस्तिस्रस्तिस्र उपादाय रोहिणीं च दशमीं कृत्वा होत्रे दद्यात् ॥४६॥

उन्नेतारौ वा कृत्वानाश्रावयते ॥ ४७ ॥

द्वौ वोन्नेतारौ कुर्वीतेति वचनात्। तयोश्च यतरोऽनाश्रावयेत् तस्मा एनां दशमीं दद्यात्, होत्रे वेति विकल्पः। उन्नयनन्तु विभागेन कुर्वाते ॥ ४७ ॥

दशदशाऽभेदेन दक्षिणा दद्यात् ॥ ॥ ४८ ॥

अन्यूना दशतो नयेदिति वचनात्। अत्र च चोदकानुरोधेन दशतीनां दानमनुष्ठेयम् ॥ ४८ ॥

अनूबन्ध्यावपाहोमान्ते दद्यादेनाम् ॥ ४९ ॥

दशमीमिति सूत्रशेषः ॥ ४९ ॥

उदवसानीयायां वा ॥ ५० ॥

वेति विकल्पः ॥ ५० ॥

अन्यदिच्छन् ॥ ५१ ॥

अन्यदिच्छया ददातीति विकल्पः ॥ ५१ ॥

अहर्गणे व्युत्क्रामताद्यन्वहम् ॥ ५२ ॥

कर्त्तव्यमिति सूत्रशेषः ॥ ५२ ॥

वसतीवरिग्रहणञ्च ॥ ५३ ॥

अन्वहमेव कर्त्तव्यम् ॥ ५३ ॥

एके माध्यन्दिने ऽवनीय ॥ ५४ ॥

एके माध्यन्दिने सवनेऽवनीय वसतीवरिग्रहणं कुर्वन्ति। एके परिहारकाल एवेति विकल्पः ॥ ५४ ॥

इति त्रयोदशाध्याये तृतीया कण्डिका ॥

इति कर्कभाष्यसहिते कात्यायनश्रौतसूत्रे

त्रयोदशोऽध्यायः समाप्तः ॥

# चतुर्दशोऽध्यायः ।

## वाजपेयः

१

## वाजपेयः शरद्यवैश्यस्य ॥ १ ॥

गवामयनमभिहितमिदानीमवसरप्राप्तो वाजपेयोऽनुविधेयः । वाजपेय इति कर्मनामधेयम् । न हि द्रव्ये गुणे वा प्रसिद्धिरस्य । स च शरदि भवति । शरदि वाजपेयेन यजेतेति वचनात् । अवैश्यस्येति शाखान्तरात् । लिङ्गाच्च । "अथ यदि ब्राह्मणो यजेत" "यदि वा राजन्यो यजेत" इति ( श० ब्रा० ५।१।४।२ ) विशेषविधानम् ॥ १ ॥

## उभयतः शुक्लपक्षौ बृहस्पतिसवने यजते ॥ २ ॥

यावुत्तरौ शुक्लपक्षौ तयोर्बृहस्पतिसवः ॥ २ ॥

## ज्योतिष्टोमेन वा ॥ ३ ॥

यजेतेति विकल्पः ॥ ३ ॥

## द्वादश वा ॥ ४ ॥

उभयतः शुक्लपक्षान्यजते ॥ ४ ॥

तत्र च—

## (१)पुरस्तादयुक्षु ज्योतिष्टोमः पार्ष्ठिकानीतरेषु ॥ ५ ॥

युक्षु पक्षेषु पार्ष्ठिकानीति ॥ ५ ॥

## प्रतिलोमं पार्ष्ठिकान्युपरि ॥ ६ ॥

उपरिष्टात् प्रातिलोम्येनायुक्षु पार्ष्ठिकानि, युक्षु च ज्योतिष्टोमः । पार्ष्ठिकान्यपि प्रातिलोम्येन त्रयस्त्रिंशारम्भणानि भवन्ति ॥ ६ ॥

## (२)सर्वाग्निष्टोमैर्वा राजसूयसोमैः ॥ ७ ॥

---

१. शुक्ले पक्षे ऽयुग्मेषु प्रथमतृतीयपञ्चमसप्तमनवमैकादशेषु षट्सु दिनेषु ज्योतिष्टोमः, युग्मेषु द्वितीयचतुर्थषष्ठाष्टमदशमद्वादशेषु च, पृष्ठे भवान्यहानि भवन्तीत्यर्थः ।

२. अथ वोभयतो राजसूयान्तर्वर्तिभिः पवित्राभिषेचनीयादिभिः सप्तभिर्नवभिर्वा सोमयागैर्यजेताग्निष्टोमसंस्थैरित्यर्थः ।

उभयतो यजते, तेषां संस्थामात्रापनयः ॥ ७ ॥

## प्रतिलोममुपरि ॥ ८ ॥

उपरिष्टात्प्रातिलोम्येन ज्योतिष्टोमादारभ्येति । अत्रांश्वदाभ्यग्रहणं राजसूयसोमोपदेशाद्भवति । पार्ष्ठिकेष्वसत्रत्वान्न भवति । अतिग्राह्यग्रहणमपि त्र्यहसंयोगान्न भवतीति सम्प्रदायः ॥ ८ ॥

## (१) नानादीक्षाः परियज्ञाः कालभेदात् ॥ ६ ॥

पार्ष्ठिकानां तन्त्रेण दीक्षाः कृताः, इहापि तथैव मा भूवन्निति नानादीक्षात्वमुच्यते । तत्कुतः ? कालभेदात् । भिन्नो ह्यत्र काल इति ॥ ९ ॥

## सप्तदशदीक्षाः ॥ १० ॥

परियज्ञानां दीक्षाः प्राप्ता एव । एतास्तु वाजपेयस्य ॥ १० ॥

## देवसवितरिति जुहोति यजत्यादिषु ॥ ११ ॥

"स कर्मणः कर्मणः पुरस्तादेतां सावित्रीमाहुतिं जुहोति" (श० ब्रा० ५।१।१।१४) इति वचनात् । कर्मशब्दः प्रायशो यजतिष्वेव वर्त्तते इत्यभिप्रायः । तेन यजत्यादिष्वित्युक्तम् ॥ ११ ॥

## सकृद्दीक्षारम्भे कर्मैकत्वात् ॥ १२ ॥

अप्सु दीक्षाद्यारम्भे सकृदेव होतव्या । कुत एतत् ? कर्मैकत्वात् । कार्यैकत्वादित्यर्थः । एकं हि कार्यं दीक्षाणां पुरुषसंस्कार इति । यजत्यादिषु पुनर्ये वाजपेयाङ्गभूता यजतयो दीक्षणीयादयः तेष्वेव न तदङ्गेष्वपि प्रयाजादिषु । न हि ते साक्षाद्वाजपेयस्य ॥ १२ ॥

## क्रयणवेद्यारम्भणप्रवर्ग्योत्सादनाग्निप्रणयनहविर्धानाग्नीषोमाणां सद आग्नीध्रधिष्ण्यनिवपनवसतीवरिग्रहणपरिहरणेषु च कर्मान्तरत्वात्प्राक्सुत्यायाः ॥ १३ ॥

क्रयणादीनि प्रागेव सुत्याया भवन्ति । यजतिविशेषणमेतत् प्राक्सुत्याया इति । अथाग्नीषोमीयेण पशुना चरित्वैतामाहुतिमुत्सृजन्तीति वचनात् ॥ १३ ॥

---

१. उभयतो विहिताः परियज्ञा बृहस्पतिसवादयः पृथग्दीक्षा भवन्तीत्यर्थः ।

## सोमात्क्रीयमाणात्सहितं दक्षिणतः सीसेन परिस्रुतः क्रयणं केशवात् ॥ १४ ॥

भवतीति सूत्रशेषः। केशवो दीर्घकेशः। षण्ढ इति केचित्। परिस्रुत्सुरोच्यते ॥ १४ ॥

## तद्द्रव्याणां वा ॥ १५ ॥

परिस्रुद्द्रव्याणां वा क्रयणं परिस्रुतो वेति विकल्पः ॥ १५ ॥

## पर्युह्यमाणेऽनुहरणम् ॥ १६ ॥

पर्युह्यमाणे सोमे परिस्रुतस्तद्द्रव्याणां वाऽनुहरणम् ॥ १६ ॥

## दक्षिणेन प्रवेश्य दक्षिणाग्नौ पक्त्वाऽपरेऽन्ते नेष्टा सुरां करोति ॥ १७ ॥

दक्षिणेन द्वारेण विमिते प्रवेश्य दक्षिणाग्नौ पक्त्वा सुरामपरेऽन्ते नेष्टा करोति। यदि न पक्वा ततः पच्यते ॥ १७ ॥

## खरं कृत्वा नाराशंसस्थानेऽपरम् ॥ १८ ॥

करोतीति वाक्यशेषः ॥ १८ ॥

## दक्षिणतः सन्धिं करोति ॥ १९ ॥

दक्षिणतो हविर्धानस्य कुद्वारं करोतीत्यर्थः ॥ १९ ॥

## यूपवेष्टनं सप्तदशभिर्वस्त्रैर्न्युद्ग्रन्थनं वा पर्यग्निकरणकाले ॥ २० ॥

"सप्तदशभिर्वासोभिर्यूपो वेष्टितो वा विग्रथितो वा भवति" (श० ब्रा० ५।२।१।५) इति वचनात्। न्युद्ग्रन्थनं चावचूलकरणम्। तच्च पर्यग्निकरणकाले पर्यग्निकरणाद्वापरतः आगन्तुकत्वात् ॥ २० ॥

## श्वो वा सवनीयेषु ॥ २१ ॥

यूपवेष्टनं भवति। तत्र हि वाजपेयशब्दो वर्त्तते। वा अग्नीषोमीय एव न्युद्ग्रन्थनं कर्त्तव्यम्, यूपसंस्कारत्वात्तस्य तदुद्देशेन विहितत्वात् ॥ २१ ॥

## उत्कीर्णसमाग्रो गौधूमचषालः ॥ २२ ॥

यूपो भवतीति वाक्यशेषः। "गर्त्तवान्यूपोऽतीक्ष्णाग्रो भवति" ( श० ब्रा० ५।२।१।७ ) इति। तथा "गौधूमं चषालं भवति" ( श० ब्रा० ५।२।१।६ ) इति श्रुतेः। गौधूमं गोधूमविकारमयं चषालं भवति ॥ २२ ॥

सुत्यादौ हिरण्यस्रजोऽपिनह्यन्तेऽधिकृता यजमानः पत्नी च सुत्यस्य तच्छब्दात् ॥ २३ ॥

हिरण्यमालिनो वाजपेयेन चरन्तीति श्रूयते। सुत्या च वाजपेयशब्दस्य वाच्या ॥ २३ ॥

सर्वत्राविशेषात् ॥ २४ ॥

सर्वत्र वा हिरण्यमालित्वम्। सर्वो ह्ययं वाजपेय इति ॥ २४ ॥

एकधनप्रवेशनकाले सुरां नेष्टाऽपरेण प्रवेश्य खरे करोति सन्धिना पात्राण्याहृत्य पात्रे वालेन पुनाति ॥ २५ ॥

नेष्टैवाभिप्रवृत्तत्वात् ॥ २५ ॥

प्रातःसवनेऽतिग्राह्यान्गृहीत्वा षोडशिनं पञ्च चैन्द्रान् ॥ २६ ॥

ग्रहान् गृह्णाति ॥ २६ ॥

इति चतुर्दशाध्याये प्रथमा कण्डिका ॥

२

ध्रुवसदमिति प्रतिमन्त्रमतिग्राह्यवद्धोमः ॥ १ ॥

पञ्चानामैन्द्राणाम् ॥ १ ॥

सप्तदशापरान् ॥ २ ॥

सोमग्रहान् गृह्णाति ॥ २ ॥

नेष्टा च तावतः सौरान् ॥ ३ ॥

चशब्दात् गृह्णाति ॥ ३ ॥

व्यत्यासं ग्रहणम् ॥ ४ ॥

"सोमग्रहमेवाध्वर्युर्गृह्णाति सुराग्रहं नेष्टैवमेवैनान्व्यत्यासं गृह्णीतः" ( श० ब्रा० ५।१।२।१६ ) इति वचनात् ॥ ४ ॥

**अत्रानतिक्रमणं ग्रहाणाम् ॥ ५ ॥**

कर्त्तव्यमिति शेषः ॥ ५ ॥

**उपर्युपर्यन्तमध्वर्युर्धारयत्यधोऽधो नेष्टा सम्पृचाविति ॥६॥**

अनेन मन्त्रेण ॥ ६ ॥

**विपृचावित्याहरतः ॥ ७ ॥**

अध्वर्युर्नेष्टा च ॥ ७ ॥

**हिरण्मयेन मधुग्रहं गृहीत्वा खरमध्ये सादयति ॥ ८ ॥**

ततः—

**उक्थ्यादि ॥ ९ ॥**

**अतिरात्रपशूनुपाकृत्य वशापृश्निं मरुद्भ्य उज्जेषेभ्यः॥१०॥**

उपाकरोति । वशा रिक्ता । पृश्निश्चित्रा ॥ १० ॥

**तदभावेऽपृश्निम् ॥ ११ ॥**

पृश्न्यभावे अपृश्निमुपाकरोति ॥ ११ ॥

**प्राजापत्यांश्च सप्तदश(१) श्यामतूपरान् बस्तान् ॥ १२ ॥**

उपाकरोति ॥ १२ ॥

**तद्गुणाभावे सर्वेषामेकदेशोऽपि ॥ १३ ॥**

तद्गुणः स्यात् । एवं हि श्रूयते—"यद्येवंसमृद्धान्न विन्देदपि कतिपया एवैवं समृद्धाः स्युः" ( श० ब्रा० ५।१।३।१० ) इति ॥ १३ ॥

**वाच उत्तममेके ॥ १४ ॥**

"तद्धैके वाच उत्तममालभन्ते" ( श० ब्रा० ५।१।३।११ ) इति वचनात् सप्तदशं पशुमेके वाच आलभन्ते, एकं प्राजापत्यमिति विकल्पः । तस्य च नोपांशुत्वमप्राजापत्यत्वात् । अत्रैतच्चिन्त्यते—किं सप्तदशपशुगणसाधनकमेकं कर्म उत सप्तदशैतानि

---

१. श्यामवर्णः शृङ्गरहितः पशुः । बस्तः साण्डः पशुः ।

कर्माणीति। कुतः सन्देहः? यदि कृतैकशेषाणां तद्धितः अयं चायश्चेत्येकशेषीकृत्य तद्धितोत्पत्तिस्तदैकं कर्म। अथ तद्धितोत्तरकालमेकशेषः प्राजापत्यश्च प्राजापत्यश्च प्राजापत्या इति तदा सप्तदशकर्माणि। अत्र च चोदकाबाधेन वाक्यस्य वर्णनं कर्त्तव्यम्। प्रकृतावेकपशुनिष्पन्नेन हृदयादिगणेन यागाभिनिर्वृत्तिः कृता, इहापि तथैव क्रियते चेत्? षोडशानामालम्भवैयर्थ्यम्। अथैकैकमवदानं गृहीत्वा एकादशसंख्या पूर्यते, तथापि सति षण्णामालम्भवैयर्थ्यप्रसङ्गः, न च चोदकानुग्रह इति। तस्मान्नैकशेषीकृतानां तद्धितोत्पत्तिर्युक्तरूपा। कृततद्धितानां त्वेकशेषत्वे नैष दोषो भवति। तस्मात्सप्तदशैतानि कर्माणीति। तेषां च (१)सम्प्रतिपन्नदेवतेकत्वात्सकृत्प्रक्षेपः। नन्वेवमपि अवदानप्रदानान्तता न सम्भवति। तत्र चोदकबाध एव। नैष दोषः, अवदानस्य प्रदानान्ततानुग्रहे सति प्रधानाभ्यावृत्तिः प्राप्नोति। न चैषा गुणानुरोधेनेष्टेति। तस्मात्सकृत्प्रक्षेप इति। सकृत्प्रक्षेपं च दर्शयति "प्रजापतय इत्युपांशु शूक्त्वा छागानांऽ हविषोनुब्रूहीति प्रजापतय इत्येवोपांशु शूक्त्वा छागानांऽ हविः प्रस्थितं प्रेष्येति वषट्कृते जुहोति" ( श० ब्रा० ५।१।३।१४ ) इति। एतदाचार्येणापि प्रदर्शितमेव, "न द्रव्यभेदे गुणयोगादिति वात्स्यः" ( का० सू० १।५।१३ ) इति ॥ १४ ॥

## माहेन्द्रान्ते वशावपाचरणम् ॥ १५ ॥

माहेन्द्रग्रहयागाभ्यासान्ते वशावपाप्रचारः ॥ १५ ॥

## अवदानैश्च द्वैधंऽ श्रृतैः ॥ १६ ॥

वशावदानैश्च द्वैधंऽ श्रृतैः प्रचारः "द्वेधावदानानि श्रपयन्ति" ( श० ब्रा० ५।१।२।५ ) इति वचनात्। चशब्दाद्वपाप्रचारोत्कर्षे द्वेधा श्रपणम्। स्वकाल एव प्रधानयागः ॥ १६ ॥

## पूर्वेभ्यो देवतास्विष्टकृद्भ्यामवद्यत्युत्तराणि विशे ददाति ॥

पूर्वाणि हृदयादीनि। उत्तराणि त्र्यङ्गानि ॥ १७ ॥

## वामदेव्यग्रहान्ते प्राजापत्यानाम् ॥ १८ ॥

वपाप्रचारः ॥ १८ ॥

## स्रुग्व्यूहनात्प्राग्घविषा ॥ १९ ॥

प्राजापत्यानां प्रचारः ॥ १९ ॥

## यथान्यायं वोभयोः ॥ २० ॥

---

१. यत्रैका देवता द्रव्यञ्च नाना तत्र सम्प्रतिपन्नदेवताकं कर्मेति व्यवहारः। तत्र हविःप्रक्षेपस्सकृद्भवति।

यथान्यायं वा उभयोः वपाहविषोः प्रचारो भवति। यथान्यायशब्देन चोदकानुसरणमुच्यते नोत्कर्ष इति ॥ २० ॥

## वशायाश्च ॥ २१ ॥

चोदकानुसार एव नोत्कर्ष इति। वाशब्दो विकल्पार्थः—विकल्पेन ह्येतदुच्यत इति ॥ २१ ॥

## ऐकध्यं च श्रपणम् ॥ २२ ॥

एकत्र श्रपणमवदानानामस्मिन्पक्षे ॥ २२ ॥

## अदानं च विशे ॥ २३ ॥

त्र्यङ्गानाम्। विट्शब्देन प्रजोच्यते ॥ २३ ॥

## माध्यन्दिनीयैः सह नैवारश्चरुर्बार्हस्पत्यः सप्तदशशरावः ॥ २४ ॥

माध्यन्दिनीयैः सवनीयैः सह नैवारश्चरुः सप्तदशशरावपरिमाणो बार्हस्पत्यः कर्त्तव्यः ॥ २४ ॥

तत्र चोदकप्राप्तेन चतुर्मुष्टिना निर्वापेण सप्तदशशरावो न भवतीति अवश्यंभाविनि संख्यामुष्टिबाधे इदमाह—

## संख्यामुष्टिनिवृत्तिः सामान्यात् ॥ २५ ॥

संख्यासामान्येन सप्तदशसंख्यया चतुःसंख्या निवर्त्त्यंते, शरावैश्च मुष्टयः। कुत एतत्? सामान्यात्। समानं हि समानस्य निवर्त्तकं भवति। यथा तैलं घृतस्येति ॥२५॥

एवं प्राप्त आह—

## न, यजतिशब्दात् ॥ २६ ॥

नैतदेवं संख्यामुष्ट्योरुभयोरपि निवृत्तिरिति। किं कारणम्? यजतिशब्दात्। यागे हि सप्तदशसंख्यशरावाणि श्रूयन्ते, चतुःसंख्या मुष्टयश्च निर्वापे। न चान्यत्र श्रुतं सत्यपि सामान्येऽन्यस्य निवर्त्तकं भवति। न हि शिरोभ्यङ्गे श्रुतं तैलं भोजने घृतस्य निवर्त्तकं भवति। कथं तर्हि चतुर्मुष्टिके निर्वापे सति सप्तदशशराव ओदनो भवति? उच्यते, अर्थादन्यतरस्य निवृत्त्या भवितव्यम्—संख्याया मुष्टीनां वा। न ह्यनिवृत्त्या सप्तदशशरावो भवति। तत्रापि संख्याया मुष्टीनां वा निवृत्तिर्नोभयोः। तत्र मुख्यत्वात् संख्यानुग्रहः जघन्यत्वान्मुष्टिलोप इति। सपादचतुःशरावपरिमाणेन पात्रेण निर्वापे क्रियमाणे सप्तदशशराव ओदनो भवति। एवं मुष्टीनां लोपः संख्यानुग्रहश्च भवति।

ननु च मुष्टयः प्रधानभूताः, संख्या गुणभूता । तदवश्यं कर्त्तव्ये बाधे वरं गुणो बाधितो न प्रधानमिति । अत्रोच्यते, न हि संख्यामुष्ट्योरत्र गुणप्रधानभावः । उभयोरपि हि निर्वापसम्बन्धः । संख्याया मुष्टिसम्बन्धविधाने मुष्टीनां च निर्वापसम्बन्धविधौ वैरूप्यलक्षणो वाक्यभेदः प्राप्नोति । तस्मादुभयोर्निर्वापसम्बन्धः । यश्च गुणयोः परस्परतो व्यवच्छेद्यव्यवच्छेदकभावः सोऽर्थान्न शब्दादिति । न हि व्यवच्छेद्यमन्तरेण संख्याया निर्वापसम्बन्धो भवति । तस्मात्संख्यानुग्रहो मुष्टिलोपश्चेति सिद्धम् ॥ २६ ॥

**सप्तदश सप्तदशशतानि ददाति गोवस्त्राजावीनाम् ॥२७॥**

प्रत्येकम् ॥ २७ ॥

**सप्तदशवृषल्यो निष्ककण्ठ्यः ॥ २८ ॥**

चतुःसौवर्णिको निष्कः कण्ठे यासां ता निष्ककण्ठ्यः ॥ २८ ॥

**हस्तिवह्यकमहानसानाम्(१) ॥ २९ ॥**

सप्तदशसंख्याविशिष्टानां दानम् ॥ २९ ॥

**(२) जातेर्जातेश्च सप्तदशगणपूरणात् ॥ ३० ॥**

कुत एतत् ? सप्तदशसप्तदशानि ददातीति श्रुतेः । भिन्नजातीयत्वे नैतद्भवतीत्यभिप्रायः ॥ ३० ॥

**द्रव्येषु वा सप्तदशता ॥ ३१ ॥**

न भिन्नजातीयेषु । एवं हि श्रूयते-सप्तदशसप्तदशानि ददातीति । गोदानं च दक्षिणा सूचितं "महाभागा हि गावः" इति । तस्माद् गोद्रव्येषु सप्तदशता ॥ ३१ ॥

इति चतुर्दशाध्याये द्वितीया कण्डिका ॥



३

**मरुत्वतीयान्त इन्द्रस्य वज्र इति रथावहरणम् ॥ १ ॥**

तच्च रथवाहनात् । तस्य च प्रदेशान्तरे दृष्टार्थत्वात् । रथावहरणं करोतीति अवपूर्वश्च हरतिरवतारणे प्रवर्त्तते ॥ १ ॥

---

१. महानसो रथः ।

२. यावद्गवाश्वाजाविजातीयसप्तदशगणाः पूर्यन्ते तावद्ददातीति भावः ।

दक्षिणेन चात्वालमावर्त्तयति वाजस्येति धूर्गृहीतम् ॥ २ ॥

रथमावर्त्तयति चात्वालस्य दक्षिणतो वाजस्येत्यनेन मन्त्रेण ॥ २ ॥

अश्वान्प्रोक्षत्यपोऽवनीयमानान्स्नातान्वागतानप्स्वन्तरिति ॥

अनेन मन्त्रेण ॥ ३ ॥

देवीराप इति वा प्रोक्षति ॥ ४ ॥

समुच्चयो वा ॥ ५ ॥

मन्त्रयोर्भवति । एवमपि हि श्रूयते ॥ ५ ॥

दक्षिणं युनक्ति वातो वेति ॥ ६ ॥

अनेन मन्त्रेण रथे ॥ ६ ॥

उत्तरं वातरंहा इति ॥ ७ ॥

युनक्तीति वर्त्तते ॥ ७ ॥

दक्षिणाप्रष्टिं (१)जवो यस्त इति ॥ ८ ॥

दक्षिणाप्रष्टिं दक्षिणस्य द्वितीय उच्यते ॥ ८ ॥

अयुक्तश्चतुर्थोऽनुगच्छति सर्वयन्त्री ॥ ९ ॥

यन्त्रीति कविकापर्याणाद्युपेतः ॥ ९ ॥

बार्हस्पत्यमेनानाघ्रापयति वाजिन इति ॥ १० ॥

अनेन मन्त्रेण । बार्हस्पत्यो नैवारचरुस्तम् अश्वानवघ्रापयति । अवघ्राणं चाश्वसंस्कारो वाक्यशेषात्—"तद्यदश्वानवघ्रापयति वीर्यमेवेष्वेतद्दधाति" ( श० ब्रा० ५।१।४।१५ ) इति । स चायमाजिधावनार्थः संस्कारः । ततश्च विस्मरणे तदुत्तरकालं न भवति ॥ १० ॥

चतुर्युजो युनक्त्यपरांस्तूष्णीं बहिर्वेदि षोडश ॥ ११ ॥

रथान् । योजनक्रियाशेषत्वात् मन्त्रप्राप्तिर्मा भूदिति तूष्णीमित्युच्यते ॥ ११ ॥

देवस्याहमिति ब्रह्मा रथचक्रमारोहत्युत्करे नाभिमात्रे स्थाणौ स्थितम् ॥ १२ ॥

स्थाणुः खैडकमुच्यते ॥ १२ ॥

---

१. धुर्यपेक्षया प्रकृष्टं देशमश्नातीति प्राष्टर्वाह्यो युग्य इत्यर्थः ।

ऐन्द्राः क्षत्रियस्य चक्रदुन्दुभ्याः ॥ १३ ॥

क्षत्रियस्य चक्रारोहणदुन्दुभिवादनावहरणमन्त्रा ऐन्द्रा भवन्ति ॥ १३ ॥

सप्तदश दुन्दुभीनासजत्यनुवेदि पश्चादाग्नीध्रात् ॥१४॥

आग्नीध्रमपरेण सप्तदशदुन्दुभीनवलगयति अनुवेदि ॥ १४ ॥

बृहस्पते वाजमित्येकं दुन्दुभिमाहन्ति तूष्णीमितरान् ॥१५॥

आहन्तीति वर्त्तते। तत्र च तूष्णीमिति मन्त्रनिवृत्त्यर्थमाह ॥ १५ ॥

क्षत्रियः सप्तदशेषुप्रव्याधानस्यति तीर्थादुदीचः ॥ १६ ॥

इषुप्रव्याध इषुप्रक्षेप उच्यते। तीर्थादारभ्य सप्तदशेषुप्रक्षेपान्प्रक्षिपतीत्यर्थः ॥१६॥

अन्त्ये मिनोत्यौदुम्बरीं शाखाम् ॥ १७ ॥

अन्त्ये प्रक्षेपे शाखामौदुम्बरीं निखनति ॥ १७ ॥

देवस्याहमिति यजुर्युक्तमारोहति यजमानः ॥ १८ ॥

यजुर्युक्तं रथं यजमानो देवस्याहमित्यनेन मन्त्रेण आरोहति ॥ १८ ॥

अध्वर्योश्च तूष्णीं ब्रह्मचार्यन्तेवासी वा वाचनाय ॥१९॥

चशब्दाद्यजुर्युक्तं रथन्तरमध्वर्योर्ब्रह्मचारी अध्वर्युणा य उपनीतः तस्य वाऽन्तेवासी शिष्यो यजमानवाचनायारोहति ॥ १९ ॥

इतरेषामेकस्मिन्राजन्यो वैश्यो वा सौरप्रतिग्रहाय ॥२०॥

आरोहतीति वर्त्तते। इतरेषां रथानां राजन्यवैश्ययोरन्यतर एकस्मिन्नारोहति सौरप्रतिग्रहणाय ॥ २० ॥

आजिं शीघ्रं यन्ति ॥ २१ ॥

आजिशब्देन स्पर्धोच्यते। स्पर्धया अहमहमिकया शीघ्रं धावन्ति ॥ २१ ॥

वाजिन इति वाचयति ॥ २२ ॥

ब्रह्मचार्यन्तेवासी वा यजमानम् ॥ २२ ॥

इति चतुर्दशाध्याये तृतीया कण्डिका।

४

ब्रह्मा त्रिः सामानि गायति ॥ १ ॥

त्रिस्सामगानं करोतीत्यर्थः ॥ १ ॥

दुन्दुभीन्वादयन्ति ॥ २ ॥

बहुवचनोपदेशात् प्रकृता अप्रकृताश्च ॥ २ ॥

एष स्य इति प्रत्यृचं जुहोति ॥ ३ ॥

धावत्स्वेवैष स्य इति प्रत्यृचमाहुतीर्जुहुयात् ॥ ३ ॥

अनुमन्त्रयते वा ॥ ४ ॥

तानेव धावतोऽश्वान् । "अथैताभ्यां जगतीभ्यां जुहोति, वाऽनु वा मन्त्रयते" ( श०ब्रा०५।१।५।१८ ) इति वचनात् ॥ ४ ॥

उत्तरेण च त्र्यृचेन ॥ ५ ॥

चशब्दाज्जुहोति अनुमन्त्रयते वा । "अथोत्तरेण त्र्यृचेन जुहोति वाऽनु वा मन्त्रयते" ( श०ब्रा०५।१।५।२१ ) इति वचनात् । असन्नियोगार्थं पृथग्योगकरणम् ॥५॥

सुन्वन् जयति ॥ ६ ॥

सुन्वन्यजमानो जिनातीतरान् रथान् ॥ ६ ॥

शाखां प्रदक्षिणं कृत्वा यन्ति ॥ ७ ॥

औदुम्बरीं शाखाम्प्रदक्षिणं कृत्वा आगच्छन्ति रथैः ॥ ७ ॥

आगतेषु ब्रह्मावरोहति देवस्याहमिति ॥ ८ ॥

सर्वेष्वागतेषु रथचक्रात् ब्रह्माऽवरोहति देवस्याहमित्यनेन मन्त्रेण ॥ ८ ॥

एषा ह व इति मन्त्राहतमवहरते ॥ ९ ॥

दुन्दुभिम् ॥ ९ ॥

तूष्णीमितरान् ॥ १० ॥

दुन्दुभीनवहरत इति ॥ १० ॥

अवरुह्य नैवारमालभते तीर्थे स्थितमामा वाजस्येति ॥ ११ ॥

यजमानोऽवरुह्य रथात् चात्वालोत्करावन्तरेण तीर्थे तस्मिन् स्थितं नैवारं चरुम् आमावाजस्येत्यनेन मन्त्रेणालभते ॥ ११ ॥

यजुर्युक्तानाघ्रापयति वाजिन इति ॥ १२ ॥

यजुर्युक्तांस्त्रीनश्वान्नैवारमाघ्रापयति वाजिन इत्यनेन मन्त्रेण ॥ १२ ॥

चतुर्थं युक्त्वाऽध्वर्यवे ददाति ॥ १३ ॥

चतुर्थमश्वं युक्त्वाऽध्वर्यवे रथं ददाति ॥ १३ ॥

सर्वेभ्यः षोडश ॥ १४ ॥

सर्वेभ्य एवर्त्विग्भ्यः षोडश रथान् ददाति ॥ १४ ॥

अध्वर्युयजमानौ मधुग्रहꣳ सौरप्रतिग्रहाय प्रयच्छत उत्तरस्यां वेदिश्रोणा उपविष्टाय ॥ १५ ॥

सौरप्रतिग्रहीता च राजन्यो वैश्यो वा योऽसौ रथमारूढः ॥ १५ ॥

नेष्टा च सौरान्पश्चिमेन निर्हृत्य शालामपरेण हृत्वैकं प्रयच्छन्नाहानेन त इमं निष्क्रीणामीति ॥ १६ ॥

नेष्टा च सौरग्रहान् पश्चिमेन हविर्धानद्वारेण निर्हृत्य शालामपरेण हृत्वैकं सौरप्रतिग्रहाय प्रयच्छन्नाहानेन त इमं निष्क्रीणामीति । ततः सर्वानेव सौरग्रहान् प्रयच्छति । मधुग्रहमादत्ते ॥ १६ ॥

ब्रह्मणे मधुग्रहं ददाति सपात्रम् ॥ १७ ॥

ग्रहशब्दस्य द्रव्यविषयत्वात् सपात्रमित्युच्यते ॥ १७ ॥

तꣳ स यथेष्टं कुरुते ॥ १८ ॥

ददातीति वाऽन्यत्रासिञ्चति वा पिबति वेति ॥ १८ ॥

द्वादश स्रुवाहुतीर्जुहोत्यापये स्वाहेति प्रतिमन्त्रं वाचयति वा ॥ १९ ॥

विकल्पः, श्रुतेः । वाचनपक्षेऽपि द्वादशसंख्या यथा स्यादिति द्वादशग्रहणम् ॥१९॥

षड् वोत्तराः ॥ २० ॥

जुहोति वाचयति वा। "अथ षट् क्लृप्तीर्जुहोति वा वाचयति वा" (श० ब्रा० ५।२।१।३) इति श्रूयते ॥ २० ॥

नेष्टा पत्नीमानेष्यन्कौशं वासः परिधापयति चण्डातकं दहरं वा ॥ २१ ॥

परिधापयतीति कारितत्वादध्येषणाऽत्र भवति। चण्डातकं चलनक उच्यते। एवं ह्यभियुक्तोपदेशः—अर्धोरुकं विलासिन्या वासश्चण्डातकं विदुः। दहरं तु कौपीनम्, दहरशब्दस्य अल्पवाचकत्वात् ॥ २१ ॥

अन्तरं दीक्षितवसनात् ॥ २२ ॥

परिधापयति कौशम् ॥ २२ ॥

निश्रयणीं यूप उच्छ्रयत्युत्तरां दक्षिणां वा ॥ २३ ॥

"स दक्षिणत उदङ्रोहेदुत्तरतो वा दक्षिणा" (श० ब्रा० ५।२।१।९) इति वचनात् ॥ २३ ॥

आरोक्ष्यन् जायामामन्त्रयते जाय एहि स्वो रोहावेति रोहावेति प्रत्याह प्रजापतेरित्यारोहतः ॥ २४ ॥

जायापती ॥ २४ ॥

स्वरिति गोधूममालभते ॥ २५ ॥

चषालम् ॥ २५ ॥

शिरसा यूपमुज्जिहीतेऽमृता इति ॥ २६ ॥

अनेन मन्त्रेण यूपोच्छ्रयमुज्जिहीते ॥ २६ ॥

अस्मे व इति दिशो वीक्षते ॥ २७ ॥

यजमानः ॥ २७ ॥

(१)सप्तदशाश्वत्थपत्त्रोपनद्धानूषपुटानुदस्यन्त्यस्मै विशः ॥

प्रजाः ॥ २८ ॥

---

१. यजमानपुत्रादयो यजमानाय क्षारमृत्तिकायाः पुटान् सप्तदशाश्वत्थपत्रैर्बद्धानूर्ध्वं क्षिपन्तीत्यर्थः।

प्रतिगृह्णात्येनान् ॥ २९ ॥

तांश्च यजमानः प्रतिगृह्णाति ॥ २९ ॥

नमो मात्र इति भूमिमवेक्षते, सरुक्मे बस्तचर्मण्य-
वरोहति, भूमौ वा ॥ ३० ॥

सरुक्मायामेव । भूमिग्रहणं सरुक्मार्थमेव, न ह्यन्यथावाच्यमर्थप्राप्तत्वात् ॥ ३० ॥

उत्तरवेदिमपरेणौदुम्बरीमासन्दीं बस्तचर्मणा स्तृणातीयं
त इति ॥ ३१ ॥

अनेन मन्त्रेण ॥ ३१ ॥

सुन्वन्तमस्यामुपवेशयति यन्तासीति ॥ ३२ ॥

बाहुगृहीतं यजमानमासन्द्यामुपवेशयति यन्तासीत्यनेन मन्त्रेण ॥ ३२ ॥

नीवारेण प्रचरति ॥ ३३ ॥

अस्मिन्नवसरे ॥ ३३ ॥

प्राक्स्विष्टकृत औदुम्बरे पात्रेऽप आसिच्य पयश्च ॥ ३४ ॥

सप्तानां षड्वर्गाणां पयोऽत्रासिच्यते ॥ ३४ ॥

सप्तदशान्नान्यावपति ॥ ३५ ॥

यावत्स्मृति वा ॥ ३६ ॥

तच्च—

एकवर्जम् ॥ ३७ ॥

एकमन्नं वर्जयित्वा ॥ ३७ ॥

अभोजनं तस्योच्छ्वासात् ॥ ३८ ॥

तस्य चाभोजनमुच्छ्वासात् यावज्जीवमित्यर्थः ॥ ३८ ॥

स्रुवेण सम्भृताञ्जुहोति वाजस्येममिति प्रतिमन्त्रम् ॥ ३९ ॥

सप्तैतानि जुहोति कर्माणि । ततश्च सप्तानां षड्वर्गाणां पयोऽत्रासिच्यते । सप्त औषधचतुर्मुष्टिकानि भवन्ति चोदकानुग्रहाय । अपां चाज्यधर्मो भवति वर्ण-सामान्यात् ॥ ३९ ॥

शेषेणाभिषिञ्चति यजमानं देवस्य त्वेति ॥ ४० ॥

मन्त्रेण । शेषश्च हुतशेषः ॥ ४० ॥

सरस्वत्यै वाचस्थाने विश्वेषां त्वा देवानाम् ॥ ४१ ॥

प्रयोगः ॥ ४१ ॥

सरस्वत्यैं त्वेति वा ॥ ४२ ॥

सम्राडयमसावित्याह नामग्रहं त्रिरुच्चैः ॥ ४३ ॥

एवमेव श्रुतत्वात् ॥ ४३ ॥

अग्निरेकादरेणेत्यनुवाकं द्वादशवत्कृत्वा नैवारस्विष्टकृदिडं करोति माहेन्द्रादि च ॥ ४४ ॥

द्वादशवदिति जुहोति वा वाचयति वा । अत्रापि हि श्रूयते—"अथोज्जितीर्जुहोति वाचयति वा" ( श० ब्रा० ५।२।२।१६ ) ॥ ४४ ॥

अवरुह्य गच्छति स्तोत्राय प्रहितः ॥ ४५ ॥

"तꣳस्तोत्राय प्रमीवति स उपावरोहति सोऽन्ते स्तोत्रस्य भवत्यन्ते शस्त्रस्य" ( श० ब्रा० ५।२।२।२१ ) इति ॥ ४५ ॥

उज्जितिभ्यो वोत्तरो माहेन्द्रः ॥ ४६ ॥

भवति । ततः स्विष्टकृदिडं करोति ॥ ४६ ॥

षोडश्यन्ते स्तोत्रं चमसैरेव ॥ ४७ ॥

षोडशिग्रहयागान्ते स्तोत्रं चमसैरेव भवति । ग्रहो न भवत्येवकारकरणात् ॥४७॥

ऋत्विक्चमसेषु सप्तदशावनयनि ॥ ४८ ॥

सप्तदशसोमग्रहान् ऋत्विक्चमसेष्ववनयति । इयांस्तु विशेषः ॥ ८ ॥

द्वौ द्वौ ॥ ४९ ॥

अवनयति ॥ ४९ ॥

एकन्नेष्टुः ॥ ५० ॥

चमसेऽवनयति ॥ ५० ॥

उदवसानीयान्ते यूपवेष्टनान्यध्वर्यवे ददाति ॥ ५१ ॥

वासांसि ॥ ५ ॥

यथोपयुक्तं हिरण्यस्रजः ॥ ५२ ॥

दीयन्ते । या यस्य हिरण्यस्रक् उपयुक्ता ॥ ५२ ॥

इति चतुर्दशाध्याये चतुर्थी कण्डिका ॥

इति कर्कभाष्यसहिते कात्यायनश्रौतसूत्रे

चतुर्दशाध्यायस्समाप्तः ॥



# पञ्चदशोऽध्यायः

## राजसूयः

### १

श्रुतिमन्त्रपाठानुसारिणाऽऽचार्येण वाजपेयोऽनुविहिताः। इदानीमवसरप्राप्तो राजसूयोऽनुविधेयः। तदर्थं सूत्रम्।

## राज्ञो राजसूयः ॥ १ ॥

भवतीति सूत्रशेषः। स चायं राजशब्दः क्षत्रियजातिनिमित्तः प्रदेशान्तरे दृश्यते। तस्य यत्कर्म स्मृतिविहितं तद्राज्यमित्युच्यते। किं च तत्? जनपदपुरपरिपालनादि।(१) ननु च राज्ययोगाद्राजशब्दप्रयोगः सार्वभौमः। तद्युक्ते ह्यक्षत्रियेऽपि राजशब्दं प्रयुञ्जते जना इति—राज्यं यः करोति स राजेति। एवं च कृत्वा राजसूय एवावेष्ट्यां दर्शनं भवति—"यदि ब्राह्मणो यजेत बार्हस्पत्यं मध्ये निधायाहुतिमाहुतिं हुत्वा तमभिघारयेत् यदि राजन्य ऐन्द्रं यदि वैश्यो वैश्वदेवम्" इति त्रयाणामपि वर्णानामधिकारं दर्शयति। तत्कथम? यदि राज्यस्य कर्त्ता राजा तदैवमुपपद्यते।

अत्रोच्यते—न राज्यकर्त्ता राजेति शक्यते वक्तुम्। न ह्यत्र प्रत्ययलोपः प्रातिपदिकस्य प्रत्यापत्तिर्वा स्मर्यते। राजशब्दात्तु कर्म्मणि ष्यञ्प्रत्ययो विधीयते। तेन राज्ञः कर्म राज्यमिति शक्यते वक्तुं न राज्यस्य कर्त्ता राजेति। यच्चावेष्ट्यां ब्राह्मणादीनां दर्शनमुक्तं, तद्राजसूयाद्बहिरन्नाद्यकामस्यावेष्टिर्विहिता तद्विषयमिति। यत्त्वेकदेशे जातौ राजशब्दप्रयोगो योगात्सार्वभौम इति। अत्र ब्रूमः, एकदेशेऽपि शब्दशक्तिमन्तरेण प्रयोगोऽनुपपन्न एव। सार्वभौमस्तु प्रयोग उपचारवृत्त्या राज्ञः कर्म कुर्वन् राजेव राजेत्युच्यत इति। तथा च समानचोदनायां दृश्यते "तस्माद्राष्ट्र्यश्वमेधेन यजेत क्षत्रिययज्ञ उ वा एष यदश्वमेध" इति। तथा "तस्माद्ब्राह्मणक्षत्रियमधस्तादुपास्ते राजसूये यजमानं सन्तमृत्विक्त्वेन" इति क्षत्रियस्य राजसूयं दर्शयति ॥ १ ॥

## अनिष्टिनो वाजपेयेन ॥ २ ॥

तस्माद्वाजपेयेनेष्ट्वा न राजसूयेन यजेतेति श्रुतेः ॥ २ ॥

## इष्टिसोमपशवो भिन्नतन्त्राः कालभेदात् ॥ ३ ॥

अनुमत्यादय इष्टयः पवित्रादयः सोमाः मद्धूलादयः पशव एते भिन्नतन्त्रा भवन्ति। कुत एतत्? कालभेदात्। भिन्नकालीनं ह्येषां विधानमिति। ननु च काल-

१. पूर्वमीमांसायां द्वितीयतृतीयेऽवेष्टचधिकरणं द्रष्टव्यम्।

भेदात् भेद उक्त एव। किमुच्यते कालभेदादिति ? सत्यमेवम्, फलैक्यप्रज्ञापनार्थमिदमुच्यते कालभेदाद्भेदो न फलभेदादिति। तत्कुतः ? राजसूयेन स्वाराज्यकामो यजेतेति राजसूयस्य सकलकालसम्बन्धः। (१)राजसूयशब्दश्च यजतिशब्दसामानाधिकरण्याद्यजतिषु वर्त्तते। तेन च सर्वयजतीनामेकं फलमिति ॥ ३ ॥

## पवित्रश्चतुर्दीक्षः ॥ ४ ॥

स च सोमयागो दीक्षासम्बन्धात् ॥ ४ ॥

## सहस्रदक्षिणः ॥ ५ ॥

एवं चाश्वदाभ्यग्रहणं तिस्रोऽनूबन्ध्यास्त्रेधातवी चात्र भवन्तीति ॥ ५ ॥

## माघीपक्षयजनीये दीक्षा ॥ ६ ॥

माघपौर्णमास्या उपरिष्टात्पक्षे गते यद्यजनीयं तत्र दीक्षा। फाल्गुनावतारप्रतिपदीत्यर्थः ॥ ६ ॥

## तदन्ते पूर्णाहुतिर्गृहेष्विच्छतो वरदक्षिणा ॥ ७ ॥

"स यदि कामयेत जुहुयादेतां यद्यु कामयेतापि नाद्रियेत" इति वचनादिच्छत इत्युक्तम् ॥ ७ ॥

## श्वः प्रभृत्यन्वहं पञ्चोत्तराणि ॥ ८ ॥

हवींषि भवन्तीति शेषः। अथ श्वोभूते अथ श्वो भूत इति वचनात् अन्वहमेकैकम् ॥ ८ ॥

तान्याह—

## अष्टाकपालोऽनुमत्यै ॥ ९ ॥

पुरोडाशो भवतीति शेषः ॥ ९ ॥

## शम्यायाः पश्चाद्धविष्यशन्नं स्रुवे कृत्वा दक्षिणाग्न्युल्मुकमादाय दक्षिणा गत्वा स्वयं प्रदीर्ण ईरिणे चाग्नौ जुहोत्येष ते निर्ऋत इति ॥ १० ॥

शम्यायाः पश्चाद्धविष्येषु यदवसीयन्ते तण्डुला वा पिष्टं वा तत् स्रुवे कृत्वा दक्षिणाग्न्युल्मुकं गृहीत्वा दक्षिणां दिशं गत्वा स्वयं प्रदीर्णे कुत्सारे ईरिणे वोषरे अग्नौ जुहोत्येष ते निर्ऋत इति मन्त्रेण। अग्निग्रहणाच्चेतिकर्त्तव्यताव्युदासः ॥ १० ॥

१. राजसूयशब्द आख्यातपरतन्त्रः, आख्यातान्तं पदं यान् यागानाचष्टे तेषु वर्तत इत्यर्थः।

अनपेक्षमेत्यानुमतस्य संवपनादि करोति ॥ ११ ॥

संवपनादिग्रहणाच्च ईक्षणान्त एतद्भवति ॥ ११ ॥

वासो देयम् ॥ १२ ॥

आनुमतस्य दक्षिणा ॥ १२ ॥

हिरण्यमाग्नावैष्णवे ॥ १३ ॥

पुनरुत्सृष्टो गौरग्नीषोमीये ॥ १४ ॥

अनड्वान् सारण्ड ऐन्द्राग्ने ॥ १५ ॥

देयः ॥ १५ ॥

गौराग्रयणे ॥ १६ ॥

देयः । गौरेवाग्रहणे भवति । अतश्च गवाग्रयणं यवाग्रयणं व्रीह्याग्रयणं विशेष्यते, न सौम्याग्रयणमिति ॥ १६ ॥

चातुर्मास्यप्रयोगः फाल्गुन्याम् ॥ १७ ॥

भवतीति शेषः । चातुर्मास्यशब्दो धर्मातिदेशार्थो नेतानि चातुर्मास्यानि । चातुर्मास्यवद्राजसूययागा एते । अतश्च नित्यानामपि क्रिया भवति । नैतैः कृतत्वम-चातुर्मास्यत्वात् ॥ १७ ॥

पौर्णमासेन कृष्णपक्षानेत्यामावास्येन शुक्लाना शुनासीरीयात् ॥ १८ ॥

अत्रापि दर्शपौर्णमासवद्राजसूये एवायं न दर्शपौर्णमासाविति ॥ १८ ॥

पवित्रदीक्षास्थाने शुनासीरीयम् ॥ १९ ॥

भवतीति सूत्रशेषः ॥ १९ ॥

(१)पञ्चवातीयमाहवनीयं प्रतिदिशं व्युह्य मध्ये च स्रुवेणाग्निषु जुहोत्यग्निनेत्रेभ्य इति प्रतिमन्त्रम् ॥ २० ॥

पञ्चवातीयमिति कर्मणो नामधेयम् । होममन्त्राणां लिङ्गेन व्यवस्था ॥ २० ॥

---

१. फाल्गुनशुक्लप्रतिपद्येव पञ्चवातीयसंज्ञकं वक्ष्यमाणं कर्म भवति । खरमध्यस्थं हस्त-प्रेरित एव खरमध्य एव प्राच्यादिदिक्षु स्थापयित्वा मध्ये चावशिष्य पञ्चस्वग्निषु जुहोतीत्यर्थः ।

(१)उत्तराः समस्य ये देवा इति प्रतिमन्त्रम् ॥ २१ ॥

जुहोतीति शेषः । समस्य चाग्नीनिति ॥ २१ ॥

त्रियुक्तोऽश्वरथो दक्षिणा ॥ २२ ॥

त्रिभिरश्वैर्युक्तो रथो दक्षिणा ॥ २२ ॥

व्याधितस्याप्येवम् ॥ २३ ॥

व्याधिगृहीतस्यापि पञ्चवातीयं भवति ॥ २३ ॥

इन्द्रतुरीयम् ॥ २४ ॥

व्याख्यास्यत इति शेषः । एतच्च काण्वानां श्वो भूतेषु पठ्यते ॥ २४ ॥

आग्नेयः ॥ २५ ॥

वारुणो यवमयश्चरुः ॥ २६ ॥

अन्यत्रापि ॥ २७ ॥

वारुणो यवमय एव भवति ॥ २७ ॥

रौद्रश्च गावेधुकः ॥ २८ ॥

चशब्दादन्यत्रापि रौद्रो गावेधुको भवति ॥ २८ ॥

वहिनि दध्यैन्द्रम् ॥ २९ ॥

या गौर्वहति स्कन्धेन सा वहिनीत्युच्यते । तदीयं दध्यैन्द्रं भवति ॥ २९ ॥

इति पञ्चदशाध्याये प्रथमा कण्डिका ॥

२

अपामार्गहोमः ॥ १ ॥

व्याख्यास्यत इति सूत्रशेषः । इन्द्रतुरीयाच्च श्वोभूते काण्वानां पठ्यते ॥ १ ॥

स्रुवे पालाशे वैकङ्कते वापामार्गतन्दुलान् कृत्वा ॥ २ ॥

तेनैव सर्वहोमः कर्त्तव्यः ॥ २ ॥

---

१. प्रतिदिशं व्यूढमाहवनीयमेकत्र कृत्वा उत्तराः पञ्चाहुतीर्जुहोतीत्यर्थः ।

# त्र्यम्बकवद्दिगग्नी ॥ ३ ॥

अग्निर्दक्षिणाग्निर्दिगुदीची ॥ ३ ॥

# प्राची वा ॥ ४ ॥

स यदि प्राङित्वा जुहोति प्राचं स्रुवमस्यति यद्युदङित्वा जुहोत्युदञ्चं स्रुवमस्यतीति श्रूयते । अत्र च गमनमात्रे विकल्पः । वितानं तु प्राङ्मुखमेव ॥ ४ ॥

# अग्ने सहस्वेत्युल्मुकादानम् ॥ ५ ॥

अन्वाहार्यपचनात् ॥ ५ ॥

# देवस्य त्वेति जुहोति ॥ ६ ॥

प्राकुदङ् वा गत्वा ॥ ६ ॥

# रक्षसां त्वेति स्रुवमस्यति तां दिशं यस्यां जुहोत्यवधिष्म रक्ष इत्यायन्त्यनपेक्षम् ॥ ७ ॥

अभिचर्यमाणोऽपि तां दिशं गत्वाभिचरतो नामादिशेद्धोमः स्रुवप्रासनागमनेषु । स चायं नामादेशो रक्षःशब्दस्य स्थाने भवति । अमुमसाविति च ॥ ७ ॥

# त्रिषंयुक्तेषु ॥ ८ ॥

कर्मोच्यते ॥ ८ ॥

# आग्नावैष्णव ऐन्द्रावैष्णवो वैष्णवो वामनो दक्षिणा ॥९॥

# लिङ्गग्रहणे गौः सर्वत्र ॥ १० ॥

भवति ॥ १० ॥

# आग्नापौष्ण ऐन्द्रापौष्णः पौष्णः श्यामो दक्षिणा ॥११॥

अस्यापि श्वो भूते काण्वपाठात् ॥ ११ ॥

# अग्नीषोमीय ऐन्द्रासौम्यः सौम्यो बभ्रुर्दक्षिणा ॥१२॥

अस्यापि श्वो भूत एव काण्वीयायां पठ्यते ॥ १२ ॥

# एकादशकपालः प्रथमः प्रथमश्चरव इतरे ॥ १३ ॥

भवन्ति ॥ १३ ॥

वैष्णवस्त्रिकपालो वा ॥ १४ ॥

भवति चरुर्वा ॥ १४ ॥

श्वो वैश्वानरो द्वादशकपालो वारुणश्चैकतन्त्रे ॥ १५ ॥

भवत इति शेषः ॥ १५ ॥

श्वो नैकः ॥ १६ ॥

भवतीति विकल्पः ॥ १६ ॥

ऋषभः पूर्वस्य दक्षिणा कृष्णं वास उत्तरस्याभावेऽकृष्णम् ॥ १७ ॥

तन्त्रभेदे चैतद्भवति । ऐकतन्त्र्ये तु चोदकपरिप्राप्त्यान्वाहार्य इति ॥ १७ ॥

इति पञ्चदशाध्याये द्वितीया कण्डिका ।

३

द्वादशोत्तराणि रत्नहवींꣳषि ॥ १ ॥

भवन्ति । द्वादशग्रहणं क्रियते । चतुर्गृहीतस्यापि श्वो भूतेऽनुष्ठानं यथा स्यादिति ॥ १ ॥

प्रतिगृहमेकैकꣳ श्वः श्वः ॥ २ ॥

कर्त्तव्यम् ॥ २ ॥

समारूढनिर्मथितेऽग्नयेऽनीकवते सेनान्यः ॥ ३ ॥

गृहे ॥ ३ ॥

बार्हस्पत्यश्चरुः पुरोहितस्य ॥ ४ ॥

गृह इति सर्वत्रानुवर्त्तते ॥ ४ ॥

ऐन्द्रो यजमानस्य ॥ ५ ॥

एकादशकपालो यजमानस्य ॥ ५ ॥

अदित्यै महिष्याः ॥ ६ ॥

अदित्यै चरुर्महिष्याः ॥ ६ ॥

वारुणः सूतस्य ॥ ७ ॥

सूतश्चाश्वसारथिः ॥ ७ ॥

मारुतो ग्रामण्यः ॥ ८ ॥

सप्तकपालः । ग्रामणीर्महत्तरः ॥ ८ ॥

सावित्रः क्षत्तुः ॥ ९ ॥

अष्टाकपालो द्वादशकपालो वा । क्षत्ता प्रतीहारो दूतो वा ॥ ९ ॥

आश्विनः सङ्ग्रहीतुः ॥ १० ॥

सङ्ग्रहीता रथयोजयिता ॥ १० ॥

पौष्णो भागदुघस्य ॥ ११ ॥

भागदुघो भोजयिता ॥ ११ ॥

रौद्रो यजमानस्याक्षावापगोविकर्त्तगृहेभ्यो गवेधुकानाम् ॥

आहरणं कृत्वा । अक्षावापोऽक्षक्षेप्ता । अक्षगोप्तेत्यपरे । गोविकर्त्तो हालिकः ॥ १२ ॥

चतुर्गृहीतं जुषाणोऽध्वाज्यस्य वेत्विति दूतस्य ॥ १३ ॥

निर्ऋतः परिवृत्त्यै कृष्णव्रीहीणां नखनिर्भिन्नानां दर्विहोमे एष ते निर्ऋत इति जुहोति वषट्कृते वा ॥ १४ ॥

ततश्च विकल्पोऽयम् ॥ १४ ॥

यथासंख्यं दक्षिणा हिरण्यं शितिपृष्ठर्षभो धेनुरश्वः पृषच्छ्वेतोऽनड्वान्यमावभावेनुपूर्वजौ श्यामस्त्रिदक्षिणो रौद्रः शितिबाहुशितिबालयोरन्यतरः ॥ १५ ॥

शितिबाहुः श्वेतसक्थिः शितिबालः श्वेतपुच्छः तयोरन्यतरः ॥ १५ ॥

असिर्नखरः ॥ १६ ॥

नखरो ऽपरिवारः ॥ १६ ॥

वालदामंबद्धमक्षावपणम् ॥ १७ ॥

अक्षा उप्यन्ते यस्मिंस्तदक्षावपणम् ॥ १७ ॥

उत्तरस्याऽप्युक्ष्णवेष्टितं धनुः ॥ १८ ॥

अप्युक्ष्णशब्देन स्नाय्वभिधीयते । अजगरचर्मेत्यपरे ॥ १८ ॥

चर्मतूण्यः सेषुकाः ॥ १६ ॥

सहेषुभिः । चर्मतूण्यश्चर्ममय्यो भस्त्रा उच्यन्ते ॥ १९ ॥

लोहित उष्णीषः ॥ २० ॥

कृष्णापस्तर्य्यपहतोत्तमस्य ॥ २१ ॥

जीर्णा अपहता अपस्तरी कृष्णा गौरुत्तमस्य दक्षिणा ॥ २१ ॥

परिवृत्तीं चाह माऽमेद्येशायां वात्सीदिति ॥ २२ ॥

मत्स्वाम्ये मा वात्सीरित्येतदुक्तं भवति । ततश्चासौ ब्राह्मणगृहं प्रविशति । तत्र राज्ञो न स्वाम्यमिति ॥ २२ ॥

सौमारौद्रोऽतश्चरुः शुक्लापयसि शुक्लवत्सायाः ॥ २३ ॥

सैव दक्षिणा ॥ २४ ॥

अनूचानोऽप्ययशा यजेत ॥ २५ ॥

अनेन ॥ २५ ॥

किलासाबाधं तु ॥ २६ ॥

किलासाशब्देन व्याधिविशेष उच्यते । तद्बाधमिच्छंश्च यजते । तुशब्दश्चार्थः ॥ २६ ॥

मित्राबार्हस्पत्यश्चरुः ॥ २७ ॥

श्वो भूते भवतीति शेषः ॥ २७ ॥

बार्हस्पत्यमधिश्रित्याश्वत्थी या स्वयं भग्ना प्राच्युदीची वा शाखा तत्पात्रेणापिदधाति ॥ २८ ॥

बार्हस्पत्यं चरुम् ॥ २८ ॥

विनाटाद्रथपर्यूढान्नवनीतं स्वयं जातमाज्यमासिच्य पात्रे तस्मिंस्थविष्ठांस्तण्डुलानग्नित्रायावपति ॥ २९ ॥

विनाटो दृतिरुच्यते । ततो रथपर्यूढात् स्वयं जातं नवनीतमाज्यं भवति । अत्र च तण्डुलेष्वाज्यमासिच्यते, नाज्ये तण्डुलांश्चोदकानुग्रहाय । तण्डुलानां चाध्वर्यूपायेन तक्रादिना स्पन्दनं पक्ष्यर्थतया कार्यम् ॥ २९ ॥

ऊष्मणा शृतो भवति ॥ ३० ॥

मैत्रः ॥ ३० ॥

अणिष्ठानितरस्मिन्नेकं प्रदानम् ॥ ३१ ॥

इतरस्मिन्बार्हस्पत्ये चरौ । स चायमेक एव यागः । मैत्राबार्हस्पत्य इति समुदायात्तद्धितोत्पत्तेः । अतश्च एकं प्रदानम् । अर्धाधिकया चावदानग्रहणम् ॥ ३१ ॥

गौर्दक्षिणा ॥ ३२ ॥

अभिषेचनीयदशपेययोर्दक्षिणोत्तरे देवयजने ॥ ३३ ॥

भवतः ॥ ३३ ॥

दक्षिणमभिषेचनीयस्य ॥ ३४ ॥

तयोश्च दक्षिणमभिषेचनीयस्य भवति ॥ ३४ ॥

फाल्गुनीपक्षयजनीयेऽभिषेचनीयाय दीक्षते ॥ ३५ ॥

फाल्गुन्योः पक्षेऽतीते यद्यजनीयं तत्र दीक्षा । चैत्रशुक्लप्रतिपदीत्यर्थः ॥ ३५ ॥

इति पञ्चदशाध्याये तृतीया कण्डिका ॥



४

भार्गवो होता ॥ १ ॥

भृगुगोत्रो होता भवति अभिषेचनीयदशपेययोरेव न सर्वत्र। तत्रैव हि श्रूयते इति ॥ १ ॥

पञ्चापवर्गः ॥ २ ॥

पञ्चभिरहोभिरपवर्गश्च । यदुक्तं भवत्येका दीक्षेति ॥ २ ॥

सोमं क्रीत्वा द्वैधमुपनह्य पर्युह्यैकं ब्रह्मागारे निदधाति॥३॥

स च दशपेयार्थः ॥ ३ ॥

अग्नीषोमीयस्य पशुपुरोडाशमनु देवसूहवीꣳषि निर्वपति यजप्रैषाणि ॥ ४ ॥

देवसूहवीꣳषीति नामधेयम् । यज प्रैषाणीति कुतः ? चोदकेन । यद्येवं किमर्थमिदमुच्यते यजप्रैषाणीति ? मुख्यत्वात्पशुपुरोडाशधर्माशङ्कानिवृत्त्यर्थम् ॥ ४ ॥

प्लाशुकानाꣳ सवित्रे सत्यप्रत्यसवाय ॥ ५ ॥

प्लाशुकाः पुनः प्ररूढा व्रीहयः ॥ ५ ॥

आशूनामग्नये गृहपतये ॥ ६ ॥

आशवः पक्षत्रयपाकिनो व्रीहयः ॥ ६ ॥

उत्तरे चरवः ॥ ७ ॥

श्यामाकः सोमाय वनस्पतये ॥ ८ ॥

नैवारो बृहस्पतये वाचे ॥ ९ ॥

हायनानामिन्द्राय ज्येष्ठाय ॥ १० ॥

हायना रक्तशालयः ॥ १० ॥

रुद्राय पशुपतये ॥ ११ ॥

नाम्बो मित्राय सत्याय ॥ १२ ॥

स्वयं जाता व्रीहयो नाम्बाः ॥ १२ ॥

वरुणाय धर्मपतय इति ॥ १३ ॥

अष्टौ ॥ १३ ॥

उत्तमेन चरित्वा सविता त्वेत्याह यजमानबाहुं दक्षिणं गृहीत्वा नामास्य गृह्णाति मन्त्रे यथास्थानम् ॥१४॥

यस्मिन् स्थाने अमुमिति सर्वनाम तत्र नामग्रहणम् । तत्संस्कारात् ॥ १४ ॥

मातापित्रोश्च ॥ १५ ॥

यथास्थानं नामग्रहणम् ॥ १५ ॥

काण्वानां पठ्यते—एष वः कुरवो राजा पाञ्चालो राजेति च । तदुच्चारणार्थमेव मा भूदत आह—

यस्याश्च जाते राजा भवति ॥ १६ ॥

जातिग्रहणं जनपदोपलक्षणार्थम् । यस्मिञ्जनपदे राजा भवति तस्य च नाम गृह्णातीत्यर्थः ॥ १६ ॥

कुत एतत् ?

देशस्यानवस्थितत्वात् ॥ १७ ॥

न हि शास्त्रे देशव्यवस्था कुरुपञ्चालजातीयैरेव राजसूयः कर्त्तव्य इति, सर्वस्य विहितत्वात् । कुरुपञ्चालग्रहणमत्र देशोपलक्षणार्थम् । अङ्गावङ्गास्सुह्मा इति चैवमादीनाम् ॥ १७ ॥

पशुपुरोडाशतन्त्रं प्राधान्यात् ॥ १८ ॥

देवसूहविषां पशुपौरोडाशिकं तन्त्रं भवति । कुत एतत् ? प्राधान्यात् मुख्यत्वादित्यर्थः । न हि पशुपुरोडाशः प्रधानभूत इति स्थानित्वात्प्राधान्यमुक्तम् ॥ १८ ॥

इतरेषां वा भूयस्त्वात् ॥ १९ ॥

इतरेषां वा तन्त्रं भवति, न पशुपुरोडाशिकम् । कुत एतत् ? भूयस्त्वात् । बहूनि ह्येतानि देवसूहवींषि । एवं च विकल्प एवायम् । मुख्यत्वाद्वा पौरोडाशिकम् । भूयस्त्वेन चेतरेषामिति ॥ १९ ॥

किं च—

स्विष्टकृच्छ्रुतेश्च ॥ २० ॥

उभयरूपा हि स्विष्टकृच्छ्रुतिः काण्वानां यजप्रैषः स्विष्टकृन्माध्यन्दिनानां प्रेष्यप्रैष इति । तेनात्र विकल्प एवानुरूपतर इति ॥ २० ॥

## इडान्तेऽपो गृह्णाति ॥ २१ ॥

इडान्तग्रहणेन देवसूहविषां शेषकार्योपलक्षणम् । ततश्च तद्भागपरिहरणान्ते ग्रहणम् । श्रुतौ तु तत्स्विष्टकृत्समनन्तरमपां ग्रहणं पठ्यते । तत्रापि स्विष्टकृता शेषकार्योपलक्षणम् ॥ २१ ॥

## यूपमुत्तरेण नैमित्तिकीरसम्भवात् ॥ २२ ॥

या आपो निमित्तेन प्राप्यन्ते यथा गोरूल्बया आतपवर्ष्यास्तासामस्मिन्काले ग्रहणासम्भवादतः पूर्वं गृहीत्वा यूपमुत्तरेण पुनर्ग्रहणं, तच्च वचनात् ॥ २२ ॥

## गत्वेतराः पृथक्पात्रेष्वौदुम्बरेषु सरस्वतीः ॥ २३ ॥

अपो गृह्णाति ॥ २३ ॥

## अवगाह्यावगाढात्पशोः पुरुषाद्वा पूर्वापरा ऊर्मीः ॥ २४ ॥

अवतीर्यावतीर्णात्पशोः पुरुषाद्वा पूर्वापरा ऊर्मीर्गृह्णाति ॥ २४ ॥

## स्यन्दमानाः ॥ २५ ॥

गृह्णाति ॥ २५ ॥

## प्रतिलोमाः ॥ २६ ॥

गृह्णाति ॥ २६ ॥

## अपयतीः ॥ २७ ॥

याः स्यन्दन्त्य एवापयन्ति ता अपयतीः ॥ २७ ॥

## नदीपतिं सूद्याः ॥ २८ ॥

नदीपतिः समुद्रः । तत्रापि याः सुषूद्यन्ति ताः सूद्याः वीचिस्था इत्यर्थः । ता गृह्णाति ॥ २८ ॥

## काष्ठं वोच्छ्रितोढम् ॥ २९ ॥

अथवा समुद्राभिरेवाद्भिः काष्ठमुच्छ्रितमूढं याभिस्ता गृह्णाति ॥ २९ ॥

## निवेष्येन ॥ ३० ॥

गृह्णाति । निवेष्य आवर्त्तः ॥ ३० ॥

स्यन्दमानाः स्थावराः प्रत्यातपे ॥ ३१ ॥

यत्रोपरिष्टात्स्थित आदित्यस्तपति ता गृह्णाति ॥ ३१ ॥

अन्तरिक्षात्प्रतिगृह्या आतपवर्ष्याः ॥ ३२ ॥

अन्तरिक्षात्प्रतिग्रहीतव्या आतपवर्षणाः ॥ ३२ ॥

सरस्याः कूप्याः प्रुष्वा मधुगौरुल्ब्याः पयो घृतम् ॥ ३३ ॥

उक्ता आपस्तासां ग्रहणमाह—

सरस्वतीर्गृह्णात्यपो देवा इति ॥ ३४ ॥

जुहोत्युत्तरासु चतुर्गृहीतानि वृष्ण ऊर्म्यादिभिः स्वाहाकारान्तैः पूर्वैः पूर्वैः प्रतिमन्त्रमुत्तरैरुत्तरैर्गृह्णाति ॥ ३५ ॥

काण्डानां च यथाश्रुति विनियोगक्रमेण च आपो ग्रहीतव्याः ॥ ३५ ॥

आपः स्वराज इति मरीचीर्गृहीत्वा गृहीत्वाऽञ्जलिना सर्वासु सꣳसृजति ॥ ३६ ॥

सारस्वतीषु च मरीचिषु च न होमः प्रतिषेधात् ॥ ३६ ॥

औदुम्बरे पात्रे समासिञ्चत्येना मधुमतीरिति ॥ ३७ ॥

अनेन मन्त्रेण ॥ ३७ ॥

मैत्रावरुणधिष्ण्यस्य पुरस्तान्निदधाति अनाधृष्टाः सीदतेति पात्राणि च तूष्णीं पालाशौदुम्बरनैयग्रोधपादाश्वत्थान्यभिषेकाय ॥ ३८ ॥

चशब्दात्पुरस्तान्निदधाति ॥ ३८ ॥

उक्थ्यः श्वः ॥ ३९ ॥

भवति ॥ ३९ ॥

पयस्या मैत्रावरुणी माध्यन्दिनीयैः सह ॥ ४० ॥

भवति ॥ ४० ॥

शतं सहस्राणि दक्षिणा ॥ ४१ ॥

इति पञ्चदशाध्याये चतुर्थी कण्डिका ॥

५

मरुत्वतीयान्ते पात्राणि पूर्वेण व्याघ्रचर्मास्तृणाति सोमस्य त्विषिरिति ॥ १ ॥

अनेन मन्त्रेण । अगृहीते माहेन्द्र इति वचनात् सर्वमरुत्वतीयानामन्ते ॥ १ ॥

अपरेऽन्ते सीसं निदधाति ॥ २ ॥

व्याघ्रचर्मणः ॥ २ ॥

पार्थानामग्नये स्वाहेति षड्जुहोति प्रतिमन्त्रम् ॥ ३ ॥

पार्थानि हि प्रकृत्याह—"षट् पुरस्तादभिषेकस्य जुहोति" ( श० ब्रा० ५। ३। ५। २० ) इति ॥ ३ ॥

पवित्रे कृत्वा हिरण्मयमेनयोः अवयति ताभ्यामुत्पुनात्यपः सवितुर्व इति ॥ ४ ॥

ताभ्यां पवित्राभ्यामभिषेचनीया अप उत्पुनाति सवितुर्व इत्यनेन मन्त्रेण । पौर्णमासिकेन विधिना पवित्रकरणम् । तुल्यं हि शास्त्रमत्र ॥ ४ ॥

अभिषेचनीयेष्वेना व्यानयति सधमाद इति ॥ ५ ॥

अभिषेचनीयानि च पालाशौदुम्बरादीनि ॥ ५ ॥

तार्प्यं परिधापयति ॥ ६ ॥

तच्च—

क्षौमम् ॥ ७ ॥

तार्प्यमुच्यते ॥ ७ ॥

त्रिपाणं वा ॥ ८ ॥

त्रिःकृत्वः पायितम् । वा सकृदिति विकल्पः ॥ ८ ॥

घृतोन्नमेके ॥ ९ ॥

एके आचार्याः घृतोन्नन्तार्प्यमभिवदन्ति । घृतोन्नं घृतशौचितम् ॥ ९ ॥

यज्ञरूपस्यूतम् ॥ १० ॥

"तस्मिन्सर्वाणि यज्ञरूपाणि निष्यूतानि भवन्ति" ( श० ब्रा० ५।३।५।२० ) इति वचनात् । यज्ञरूपाणि च स्रुक्चमसादीनि ॥ १० ॥

पाण्ड्वं च निवस्ते ॥ ११ ॥

पाण्ड्वः कम्बलः । तं च निवस्ते उपरि तार्प्यस्य ॥ ११ ॥

अधीवासं प्रतिमुच्योष्णीषं संवेष्ट्य निवीतेऽवगूहते नाभिदेशे परिहरते वा ॥ १२ ॥

अधीवासः कञ्चुकः प्रतिमोकवचनाद्गम्यते । उष्णीषः शिरोवेष्टनं तत्सम्वेष्ट्य निवीते निवीतं च कण्ठेऽवसञ्जनं, ततोऽवगूहते नाभिदेशे परिहरते वा ॥ १२ ॥

तार्प्यप्रभृतीनि क्षत्रस्येति प्रतिमन्त्रम् ॥ १३ ॥

परिधत्ते ॥ १३ ॥

दीक्षितवसननिवृत्तिर्विरोधान्माहेन्द्रादौ वा पुनः परिधानं निधायैतानि ॥ १४ ॥

तार्प्यादीनि ॥ १४ ॥

इन्द्रस्य वार्त्रघ्नमिति धनुरातनोति ॥ १५ ॥

आरोपयति ॥ १५ ॥

मित्रस्य वरुणस्येत्यस्य बाहू विमार्ष्टि ॥ १६ ॥

बाहू धनुःकोट्यावुच्येते । मन्त्रद्वयोपदेशात् प्रतिमन्त्रमिति गम्यते ॥ १६ ॥

धनुः प्रयच्छति त्वयायमिति ॥ १७ ॥

अनेन मन्त्रेण यजमानाय ॥ १७ ॥

दृबासीति प्रतिमन्त्रमादाय तिस्र इषूः प्रयच्छति पातैनमिति प्रतिमन्त्रम् ॥ १८ ॥

यजमानायैव ॥ १८ ॥

आविर्मया इति वाचयति ॥ १९ ॥

केषांचित्प्रतिमन्त्रं नेति सम्प्रदायः ॥ १९ ॥

अवेष्टा इति लोहायसमाविध्यति केशवास्ये सदोन्त उपविष्टाय ॥ २० ॥

लोहायसं लिङ्गात्। "अथ यल्लोहायसम्भवति लोहिता इव हि दन्दशूकाः" ( श० ब्रा० ५।४।१।२ ) इति ॥ २० ॥

सुन्वन्तमाक्रमयन् दिशः प्राचीमारोहेति वाचयति प्रतिमन्त्रं प्रतिदिशं यथालिङ्गम् ॥ २१ ॥

सुन्वन्तं यजमानं बाहुगृंहीतमाक्रमयन्। दिशां चाक्रमणमाभिमुख्यगमनमात्रेणैव। न ह्यन्यथा सम्भवः। आक्रमयंश्च वाचयति ॥ २१ ॥

आक्रम्य पादेन सीसं निरस्यति प्रत्यस्तमिति ॥ २२ ॥

यच्छादूलचर्मणो जघनार्धे सीसं निहितं तत्पदा प्रतिक्षिपति प्रत्यस्तमिति मन्त्रेण ॥ २२ ॥

व्याघ्रचर्मारोहयति सोमस्य त्विषिरिति ॥ २३ ॥

यजमानमारोहयति बाहुगृहीतम्। मन्त्रस्तु यजमानस्यैव ॥ २३ ॥

रुक्ममधः पदं कुरुते मृत्योरिति ॥ २४ ॥

रुक्म आभरणविशेषः, तं पदस्याधस्तात्कुरुत मृत्योरिति मन्त्रेण ॥ २४ ॥

शिरसि च नवतदूर्मं शततदूर्मं वौजोसीति ॥ २५ ॥

चशब्दाद्रुक्ममेव ॥ २५ ॥

बाहू उद्गृह्णाति हिरण्यरूपाविति ॥ २६ ॥

यजमानः ॥ २६ ॥

मित्रोसि वरुणोसीति वा ॥ २७ ॥

बाह्वोरुद्ग्रहणम् ॥ २७ ॥

स्थितं प्राञ्चमभिषिञ्चति पुरोहितोऽध्वर्युर्वा पुरस्तात्पालाशेन प्रथमं पश्चादितरे द्वितीयेन स्वस्तृतीयेन मित्र्यो राजन्यो वैश्यश्चतुर्थेन सोमस्य त्वा द्युम्नेनेति प्रतिमन्त्रम् ॥ २८ ॥

स्थितं प्राञ्चमभिषिञ्चति पुरस्ताद्व्यवस्थितः पुरोहितोऽध्वर्युर्वा पालाशेन पात्रेण पश्चादितरे व्यवस्थिताः। द्वितीयेनौदुम्बरेण भ्राताऽभिषिञ्चति। तृतीयेन नैयग्रोधपादेन राजन्यो यो मित्रत्वेनोपागतः। वैश्यश्चतुर्थपात्रेण(१)। सोमस्य त्वा द्युम्नेनेति प्रतिमन्त्रम् ॥ २८ ॥

अभिषिञ्चामीति सर्वत्र साकाङ्क्षत्वात् ॥ २९ ॥

क्षत्राणां क्षत्रपतिरेधीरिति च ॥ ३० ॥

सर्वत्रैव शेषः ॥ ३० ॥

इमममुष्येति च प्रथमो देवसूवत् ॥ ३१ ॥

अभिषिञ्चति ॥ ३१ ॥

पार्थानामिन्द्राय स्वाहेति षड् जुहोति प्रति मन्त्रम् ॥३२॥

इति पञ्चदशाध्याये पञ्चमी कण्डिका ॥

६

शौनःशेपञ्च प्रेष्यति ॥ १ ॥

शौनःशेपं शंसत्येवम्। चशब्दादनन्तरपदार्थसमनन्तरमेव ॥ १ ॥

घृतान्ते वा ॥ २ ॥

प्रेष्यति। तदा तत्रैव शस्यते ॥ २ ॥

---

१. आश्वत्थेनेत्यर्थः। "तस्मादाश्वत्थेन वैश्योऽभिषिञ्चति" (श० ब्रा० ५।३।५।१४) इति श्रुतेः।

ओ ३ मित्यृचां प्रतिगरस्तथेति गाथानाम् ॥ ३ ॥

ऋचो ज्ञायन्त एव गाथाः छन्दोविशेषेण ॥ ३ ॥

होताध्वर्यू हिरण्मय्योः कशिपुनोरुपविष्टौ ॥ ४ ॥

कशिपुनावास्तरकौ ॥ ४ ॥

शौनःशेपान्ते पृथक् शते ददाति ॥ ५ ॥

पृथग्वचनाच्छतं शतं गवामेकैकस्य ददाति ॥ ५ ॥

सहस्रे वा ॥ ६ ॥

विकल्पः ॥ ६ ॥

आसने च ॥ ७ ॥

ददाति यो यत्रोपविष्टः ॥ ७ ॥

कण्डूयन्याभिषेकेण प्रलिम्पते प्रपर्वतस्येति ॥ ८ ॥

कण्डूयनी कृष्णविषाणा तया शरीरसंलग्नोदकाभिषेकेण प्रलिम्पते प्रपर्वतस्येति ॥ ८ ॥

चर्मणि त्रिर्विक्रमयति विष्णोरिति प्रतिमन्त्रम् ॥ ९ ॥

विक्रमणं कारयत्यध्वर्युर्मन्त्रस्तु यजमानस्यैव क्रमणशेषत्वात् ॥ ९ ॥

पालाशे शेषानासिच्य पुत्राय प्रयच्छति प्रियतमायेदं मे कर्मेदं वीर्यं पुत्रोऽनुसन्तनोत्विति ॥ १० ॥

शेषा अभिषेकशेषाः ॥ १० ॥

शालाद्वार्ये जुहोति पुत्रेऽन्वारब्धे प्रजापत इति पुत्रयजमानयोर्नाम गृह्णाति पितृशब्दं पुत्रे कृत्वा यथायथं पश्चात् ॥ ११ ॥

अयमभिमन्युरर्जुनस्य पितेत्येवं पितृशब्दः पुत्रे कृतो भवति। यथायथं पश्चादिति अर्जुनोऽभिमन्योः पितेत्येवम् । अयममुष्य पिताऽसावस्य पितेति मन्त्रे पाठः । ब्राह्मणेऽपि च—"यः पुत्रस्तं पितरं करोति यः पिता तं पुत्रम्" (श०ब्रा०५।४।२।९) इति ॥११॥

आग्नीध्रीये पालाशेन शेषान् जुहोति रुद्र यत्त इत्युत्तरार्धे॥

अभिषेकशेषान् ॥ १२ ॥

गवाᳬ शतमधिकं वा स्वस्याहवनीयस्योत्तरतः स्थापयति ॥

स्वशब्देनात्र भ्रातोच्यते ॥ १३ ॥

पूर्वाग्निवहनं च साग्निम् ॥ १४ ॥

शान्तिकपौष्टिकार्थोऽग्निर्येनानसोह्यते तच्च साग्नि स्थापयति ॥ १४ ॥

वाजपेयवद्रथमवहृत्य दक्षिणस्यां वेदिश्रोणौ युनक्ति पूर्ववन्मित्रावरुणयोरिति चतुर्भिः ॥ १५ ॥

वाजपेयवदिति रथाद्रथावहरणम् धूर्गृहीतस्य चावर्त्तनं कृत्वा दक्षिणस्यां वेदिश्रोणौ व्यवस्थितं युनक्ति पूर्ववन्मित्रावरुणयोरित्यनेन मन्त्रेण। चतुर्भिरश्वरथेरुत्तरापृष्टिश्चतुर्थः ॥ १५ ॥

दक्षिणापथेन यात्वा परेण चात्वालᳬ स्थापयति ॥ १६ ॥

रथम् ॥ १६ ॥

अन्यथायै त्वेति सुन्वन्नारोहति ॥ १७ ॥

तमेव रथम् ॥ १७ ॥

मरुतामिति दक्षिणधुर्यं प्राजति ॥ १८ ॥

यन्ता ॥ १८ ॥

गवां मध्ये स्थापयत्यापामेति ॥ १९ ॥

अनेन मन्त्रेण रथं यन्तेव ॥ १९ ॥

धनुरात्न्योपस्पृशति गां यजमानः समिन्द्रियेणेति ॥२०॥

अनेन मन्त्रेण ॥ २० ॥

जिनामीमाः कुर्व इमा इति चाह ॥ २१ ॥

चशब्दाद्यजमानः ॥ २१ ॥

तावद् भूयो वा गोस्वामिने दत्त्वा पूर्वेण यूपं परीत्यान्तः-पात्यदेशे स्थापयति मा न इति ॥ २२ ॥

अनेन मन्त्रेण ॥ २२ ॥

अग्नये गृहपतय इति चत्वारि रथविमोचनीयानि जुहोति प्रतिमन्त्रं पशूनाᳬ रक्षोसीति वराहोपानहा उपमुञ्चते ॥२३॥

यजमानः ॥ २३ ॥

भूमिमवेक्षते पृथिवि मातरिति ॥ २४ ॥

अनेन मन्त्रेण यजमान एव ॥ २४ ॥

अवरोहति हᳬसः शुचिषदिति ॥ २५ ॥

रथाद्यजमानः ॥ २५ ॥

विमुच्य सयन्तृकᳬ रथवाहणे करोत्यनस्तत्कर्म शालाया दक्षिणतः ॥ २६ ॥

विमुच्य रथं सह यन्तारं रथवाहने करोति। तस्य चानसस्तदेव कर्म रथ-वाहणम् ॥ २६ ॥

अपप्लवते यन्ता ॥ २७ ॥

रथादवतरति ॥ २७ ॥

रथवाहणस्य दक्षिणेऽन्ते शतमानावासजति वृत्तौ ॥२८॥

वृत्ताकारौ रक्तिकाशतमानौ ॥ २८ ॥

अनुवर्ममौदुम्बरीᳬ शाखामुपगूहत्युपस्पृशति शतमाना-वियदसीति ॥ २९ ॥

इयदसीत्येकं युङ्ङसीति चापरम् ॥ २९ ॥

तौ ब्रह्मणे दत्त्वोर्गसीति शाखामुपस्पृशति ॥ ३० ॥

ताविति शतमानौ ॥ ३० ॥

इन्द्रस्य वामित्यवहरते बाहू पयस्यायां व्याघ्रचर्मदेशे स्थितायाम् ॥ ३१ ॥

इन्द्रस्य वाम् इत्यनेन मन्त्रेण पयस्यायामवहरति बाहू यजमानो व्याघ्रचर्मदेशे स्थितायाम् ॥ ३१ ॥

सेषुकं धनुः प्रयच्छति ॥ ३२ ॥

धनुर्धराय ॥ ३२ ॥

उत्तरवेदिं हृत्वा पयस्यया प्रचरति प्राक् स्विष्टकृतः॥३३॥

इति पञ्चदशाध्याये षष्ठी कण्डिका ॥



७

खादिरीमासन्दीं रज्जूं तां व्याघ्रचर्मदेशे निदधाति स्योनासीति ॥ १ ॥

अनेन मन्त्रेण ॥ १ ॥

अधीवासमस्यामास्तृणाति क्षत्रस्य योनिरिति ॥ २ ॥

अस्यामित्यासन्द्याम् वास आस्तृणाति क्षत्रस्य योनिरिति ॥ २ ॥

सुन्वन्तमस्यामुपवेशयति स्योनामासीदेति ॥ ३ ॥

बाहुगृहीतं यजमानमासन्द्यामुपवेशयति । मन्त्रश्चाध्वर्योरेव ॥ ३ ॥

निषसादेत्युरोऽस्यालभते ॥ ४ ॥

यजमानस्य हृदयम् ॥ ४ ॥

अभिभूरित्यस्मै पञ्चाक्षान्पाणावाधाय पश्चादेनं यज्ञियवृक्षदण्डैः शनैस्तूष्णीं घ्नन्ति ॥ ५ ॥

अभिभूरित्यनेन मन्त्रेण पञ्चाक्षान्यजमानस्य पाणावाधाय पश्चादेनं यजमानस्य यज्ञियवृक्षदण्डैः शनैस्तूष्णीं घ्नन्त्यध्वर्यवो बहुवचनोपदेशात् ॥ ५ ॥

तावद् भूयो वा गोस्वामिने दत्त्वा पूर्वेण यूपं परीत्यान्तःपात्यदेशे स्थापयति मा न इति ॥ २२ ॥

अनेन मन्त्रेण ॥ २२ ॥

अग्नये गृहपतय इति चत्वारि रथविमोचनीयानि जुहोति प्रतिमन्त्रं पशूनाᳪं रसोसीति वराहोपानहा उपमुञ्चते ॥२३॥

यजमानः ॥ २३ ॥

भूमिमन्त्रेन्नते पृथिवि मातरिति ॥ २४ ॥

अनेन मन्त्रेण यजमान एव ॥ २४ ॥

अवरोहति हᳪंसः शुचिषदिति ॥ २५ ॥

रथाद्यजमानः ॥ २५ ॥

विमुच्य सयन्तृकᳪं रथवाहणे करोत्यनस्तत्कर्म शालाया दक्षिणतः ॥ २६ ॥

विमुच्य रथं सह यन्तारं रथवाहने करोति । तस्य चानसस्तदेव कर्म रथवाहणम् ॥ २६ ॥

अपप्रवते यन्ता ॥ २७ ॥

रथादवतरति ॥ २७ ॥

रथवाहणस्य दक्षिणेऽन्ते शतमानावासजति वृत्तौ ॥२८॥

वृत्ताकारौ रक्तिकाशतमानौ ॥ २८ ॥

अनुवत्मर्मौदुम्बरीᳪं शाखामुपगूहत्युपस्पृशति शतमानावियदसीति ॥ २९ ॥

इयदसीत्येकं युङ्ङसीति चापरम् ॥ २९ ॥

तौ ब्रह्मणे दत्त्वोर्गसीति शाखामुपस्पृशति ॥ ३० ॥

ताविति शतमानौ ॥ ३० ॥

इन्द्रस्य वामित्यवहरते बाहू पयस्यायां व्याघ्रचर्मदेशे स्थितायाम् ॥ ३१ ॥

इन्द्रस्य वाम् इत्यनेन मन्त्रेण पयस्यायामवहरति बाहू यजमानो व्याघ्रचर्मदेशे स्थितायाम् ॥ ३१ ॥

सेषुकं धनुः प्रयच्छति ॥ ३२ ॥

धनुर्धराय ॥ ३२ ॥

उत्तरवेदिᳪ हुत्वा पयस्यया प्रचरति प्राक् स्विष्टकृतः॥३३॥

इति पञ्चदशाध्याये षष्ठी कण्डिका ॥



७

खादिरीमासन्दीᳪ रज्जूं तां व्याघ्रचर्मदेशे निदधाति स्योनासीति ॥ १ ॥

अनेन मन्त्रेण ॥ १ ॥

अधीवासमस्यामास्तृणाति क्षत्रस्य योनिरिति ॥ २ ॥

अस्यामित्यासन्द्याम् वास आस्तृणाति क्षत्रस्य योनिरिति ॥ २ ॥

सुन्वन्तमस्यामुपवेशयति स्योनामासीदेति ॥ ३ ॥

बाहुगृहीतं यजमानमासन्द्यामुपवेशयति । मन्त्रश्चाध्वर्योरेव ॥ ३ ॥

निषसादेत्युरोऽस्यालभते ॥ ४ ॥

यजमानस्य हृदयम् ॥ ४ ॥

अभिभूरित्यस्मै पञ्चाक्षान्पाणावाधाय पश्चादेनं यज्ञिय-वृक्षदण्डैः शनैस्तूष्णीं घ्नन्ति ॥ ५ ॥

अभिभूरित्यनेन मन्त्रेण पञ्चाक्षान्यजमानस्य पाणावाधाय पश्चादेनं यजमानस्य यज्ञियवृक्षदण्डैः शनैस्तूष्णीं घ्नन्त्यध्वर्यवो बहुवचनोपदेशात् ॥ ५ ॥

पाप्मानं तेऽपहन्मीति त्वा वधं नयामीति वा ॥ ६ ॥

अनेन मन्त्रेण घ्नन्ति तूष्णीं वेति विकल्पः ॥ ६ ॥

वरं वृत्वा ब्रह्मन्नित्यामन्त्रयते पञ्चकृत्वः ॥ ७ ॥

यजमानः ॥ ७ ॥

प्रत्याह व्यत्यास ँ सविता वरुण इन्द्रो रुद्र इति त्वं ब्रह्मासीत्यादिभिः ॥ ८ ॥

त्वं ब्रह्मासीत्यादि सविता वरुण इत्येवमादिव्यत्यासेन ब्रह्मा प्रतिवचनं ददाति यजमानाय ॥ ८ ॥

आदिनैवान्त्यम् ॥ ९ ॥

त्वं ब्रह्मासीत्यनेनैवान्त्यं पञ्चमं प्रतिवचनम् ॥ ९ ॥

बहुकारेति च ह्वयत्येवं नामानम् ॥ १० ॥

चशब्दाद्यजमानः । स हि पूर्वमन्त्रणाभिहितः । बहुकारेत्येवं नामानं शब्दयति । एवमपि हि श्रूयते-"य एवं नामा भवति कल्याणमेवैतन्मानुष्यै वाचो वदति" ( श० ब्रा० ५।४।४।१४ ) इति ॥ १० ॥

स्फ्यमस्मै प्रयच्छति पुरोहितोऽध्वर्युर्वेन्द्रस्य वज्र इति ॥

अनेन मन्त्रेण यजमानाय ॥ ११ ॥

राजा राजभ्राता सूतस्थपत्योरन्यतरो ग्रामणीः सजातश्चैवं पूर्वः पूर्व उत्तरस्मै ॥ १२ ॥

स्फ्यम्प्रयच्छति सजातश्च ग्रामणीः सजातः ॥ १२ ॥

प्रत्तेन सजातः प्रतिप्रस्थाता च पूर्वाग्निसहिता ँ शुक्रपुरोरुचा द्यूतभूमिं कुरुतः ॥ १३ ॥

प्रत्तेन वज्रेण सजातः प्रतिप्रस्थातारौ पूर्वाग्निवहनसंलग्नां शुक्रपुरोरुचा द्यूतभूमिं कुरुतः ॥ १३ ॥

मन्थिनो विमितम् ॥ १४ ॥

पुरोरुचा विमितम् । कुरुत इति वर्त्तते ॥ १४ ॥

**घूतभूमौ हिरण्यं निधायाभिजुहोति चतुर्गृहीतेनाग्निः पृथुरिति ॥ १५ ॥**

अनेन मन्त्रेण हिरण्यमभिजुहोति ॥ १५ ॥

**अक्षान्निवपति स्वाहाकृता इति ॥ १६ ॥**

द्यूतभूमावक्षान्निवपति स्वाहाकृता इत्यनेन मन्त्रेण ॥ १६ ॥

**गां दीव्यध्वमित्याह ॥ १७ ॥**

द्यूतप्रकरणे प्रैषोऽयम् ॥ १७ ॥

**कृतादि वा विदध्याद्राजप्रभृतिभ्यः ॥ १८ ॥**

कृतादिभिर्वा द्यूतं भवति राजप्रभृतिभिर्वा द्यूतान्तरम् ॥ १८ ॥

**सजाताय कलिङ्गाम् ॥ १९ ॥**

अस्य सजातस्य सम्बन्धिनी या तां घ्नन्ति। हन्तिश्च आहननमात्रे न मारणार्थः ॥ १९ ॥

**पूर्वाग्निवाहौ दक्षिणा ॥ २० ॥**

सा च द्यूतस्य यागाङ्गमभिधानात् ॥ २० ॥

**पयस्यास्विष्टकृदिडं करोति माहेन्द्रादि च ॥ २१ ॥**

करोतीत्यनुवर्त्तते। मरुत्वतीयान्ते वैकृतं कर्म विहितमतः प्राकृतानुवृत्त्यर्थं माहेन्द्रादीत्युक्तम् ॥ २१ ॥

**अवरुह्य गच्छति स्तोत्राय प्रहितः ॥ २२ ॥**

आसन्द्या अवरुह्य प्रहितः सन् स्तोत्राय गच्छति। यजमानस्य "सोऽन्ते स्तोत्रस्य भवत्यन्ते शस्त्रस्य" ( श० ब्रा० ५।४।४।२५ ) इति वचनात् ॥ २२ ॥

**अवभृथमेकेन ताप्यादीनि चेत् ॥ २३ ॥**

यदि माहेन्द्रादौ दीक्षितवसने न परिहिते तदा ताप्यादीनामेकेनावभृथमभ्यवयन्ति ॥ २३ ॥

**उदैत्येकेन ॥ २४ ॥**

उत्तरत्येकेनोदेति अन्येनोदेतीति पाठः। अथ माहेन्द्रादौ दीक्षितवसनं परिहितं ततस्तेनैवावतरणमुत्तरणं च ॥ २४ ॥

**दीक्षितवसनं च प्रास्यति ॥ २५ ॥**

तार्प्यावतरणपक्षे ॥ २५ ॥

**अनूबन्ध्यवपाहोमान्ते दद्यादेनानि ॥ २६ ॥**

तार्प्यादीनि ॥ २६ ॥

**उदवसानीयायां वा ॥ २७ ॥**

दद्यात्। आगन्तुत्वात्तदन्ते निवेशः ॥ २७ ॥

**त्रैधातव्युदवसानीया ऐन्द्रावैष्णवो द्वादशकपालो व्रीहियवाणाम् ॥ २८ ॥**

"तमुभयेषां व्रीहियवाणां गृह्णाति" ( श० ब्रा० ५।५।५।९ ) इति वचनात् ॥२८॥

**तृतीयं यवानां मध्ये ॥ २९ ॥**

तृतीयभागो यवानां मध्ये ॥ २९ ॥

**अधिश्रयणं च ॥ ३० ॥**

एवमेव। "व्रीहिमयमेवाग्रे पिण्डमधिश्रयति" "अथ यवमयम्" "अथ व्रीहिमयम्" ( श० ब्रा० ५।५।५।९ ) इति वचनात्। अवदानं तु धातुत्रयादपि ग्राह्यम् ॥३०॥

**तिस्रस्तिस्रो दक्षिणा ददाति शतमानानि ब्रह्मणे धेनूर्होत्रे वासांस्यध्वर्यवे गामग्नीधे ॥ ३१ ॥**

तिस्रस्तिस्र इत्यवाच्यं, बहुवचनोपदेशात्। आदिसामर्थ्याच्च तत्प्राप्तेः। वाच्यं वा, अग्नीधोऽपि गावस्तिस्र एव यथा स्युरिति। "ता वाऽएता द्वादश वा त्रयोदश वा दक्षिणा भवन्ति" ( श० ब्रा० ५।५।५।१९ ) इति श्रुतेः। ननु चैवं द्वादशैव भवन्ति न त्रयोदश। उच्यते। काण्वपाठाङ्गीकरणेन त्रयोदश भविष्यन्ति। तत्राध्वर्योः, पठ्यते त्रीणि वासांसि त्रयश्चातद्वाहो गां वाजं वाग्नीध इति च त्रयोदश भवन्ति। वचनात्त्रैधातवी उदवसानीयाकार्येऽभिषेचनीयस्य भवति। प्रकृतौ चोदवसानीया समारूढनिर्मथिते दृष्टा, इह च तथा न सम्भवति येनाभिषेचनीयदशपेययोश्च प्राक्क्रयादेकतन्त्रतां वक्ष्यति। तेनात्र भवति सन्देहः—किमतिप्रणीते क्रियतामुतापराग्न्याहवनीय इति। तत्र केचिदाहुरभिषेचनीयस्यैवेष्टिरिति तदाहवनीय एवातिप्रणीते प्राप्नोति।

अपराग्नयो दाशपेयिका इति। अतोऽतिप्रणीते इति। नेच्छन्त्येतदपरे। न ह्ययं प्रकृतावतिप्रणीते दृष्टेति। ननु चापराग्न्याहवनीयेऽपि नैव प्रकृतौ दृष्टा समारूढमन्थन-विधानात्। सत्यमेवं समारोपमन्थने दशपेये नावभृथे। अतो न क्रियते। अपराग्नि-सम्बन्धश्चाभिषेचनीयस्यानपनीत एव। केवलं मन्थनं न क्रियते। तस्मादिहैव युक्त-रूपमनुष्ठानम्। अपि च निवृत्तप्राकृतकार्योऽतिप्रणीतो नोदवसानीययापेक्ष्यते। ननु चापराग्नयो दाशपेयिका इत्युक्तम्। सत्यमेवं तथाप्याहवनीयापेक्षायां स प्रसज्यते नातिप्रणीतो निवृत्तकार्यत्वादिति ॥ ३१ ॥

## भैषज्याभिचारयोरप्येषा ॥ ३२ ॥

त्रिधा दक्षिणा भवति त्रेधातवी ॥ ३२ ॥

इति पञ्चदशाध्याये सप्तमी कण्डिका ॥

## ८

## दशोत्तराणि संसृपाहवींषि निर्वपति ॥ १ ॥

नामधेयं "तस्मात्संसृपो नाम" ( श० ब्रा० ५।५।५।३ ) इति। दशानामपि षष्ठ्यामनुष्ठानं यथा स्यादित्येवमर्थं दशग्रहणमिति सम्प्रदायः। काण्वास्तु षण्णां प्रवृत्तिः श्वो भूत इति मन्यन्ते। न त्वाचार्येण सूत्रितम् अन्यत्र चोक्तं प्रतिग्रहमेकैकं एव इति। तेनाचार्याभिप्रायादेकस्मिन्नेवाहनीति गम्यते। काण्वपाठाद्वा प्रत्यहमिति ॥ १ ॥

## देवयजनान्तरमेकैकेनोत्सर्पति ॥ २ ॥

हविषा ॥ २ ॥

## शालायामन्त्यम् ॥ ३ ॥

अन्त्यं हविर्दशपेयशालायां भवति। शालाग्रहणं चोपलक्षणार्थम् ॥ ३ ॥

## सावित्रसारस्वतत्वाष्ट्रपौष्णैन्द्रबार्हस्पत्यवारुणाग्नेयसौम्य-वैष्णवानि यथोक्तम् ॥ ४ ॥

यथा प्रदेशान्तर आचार्येणोक्तानीति यथोक्तग्रहणम् ॥ ४ ॥

## प्रतीष्टि पुण्डरीकाणि प्रयच्छति ॥ ५ ॥

प्रयच्छतिग्रहणाद्दक्षिणार्थे। तथा च काण्वपाठः "सा दक्षिणा" ॥ ५ ॥

## हिरण्मयानि वा ॥ ६ ॥

पुण्डरीकाणि । स चायं विकल्पः ॥ ६ ॥

## उत्तमासु तिसृषु पञ्च ॥ ७ ॥

द्वे द्वे द्वयोरन्त्यायामेकम् ॥ ७ ॥

## तेषाꣳ स्रजं प्रतिमुञ्चते ॥ ८ ॥

तेषां पुण्डरीकाणाꣳ स्रजं मालां कृत्वा प्रतिमुञ्चते यजमानः ॥ ८ ॥

## तद्दीक्षो भवति ॥ ९ ॥

(१)"साऽस्य दीक्षा" ( श० ब्रा० ५।४।५।१३ ) इति वचनात् ॥ ९ ॥

## एकतन्त्रौ क्रयैकत्वात् ॥ १० ॥

इदं विचार्यते—किमेतानि हवीꣳषि दशपेयाङ्गभूतानि उत पृथगर्थत्वमिति । पृथगर्थत्वमिति ब्रूमः । एवं ह्यत्र श्रूयते—एभिर्मे पीष्टमसदेभिरपि सूया" इति । तेन त्रिषंयुक्तादिवत् पृथगर्थत्वमिति केचित् । नैवमित्यपरे । एतर्हि दशपेयार्थानामग्नीनां तद्देवयजनप्रतिनयनं क्रियते । अतस्तदर्थमिति गम्यते । तथा च मन्त्रलिङ्गं "सवित्रा प्रसवित्रेत्युपक्रम्य विष्णुना दशम्या देवतया प्रसूतः प्रसर्पामि" ( वा० सं० १०।३० ) इति सर्पणार्थतां दर्शयति । "एभिर्मेपीष्टमसदेभिरपि सूयाः" इत्यर्थवादप्रायम् । प्रयोजनं दशपेयाङ्गत्वेऽग्न्यन्वाधानाभावः । वाजपेये च सर्पणाभावादप्रवृत्तिः ॥ १० ॥

इदं विचार्यते—किमभिषेचनीयदशपेयौ एकतन्त्रावुत पृथक्तन्त्राविति । एकतन्त्राविति ब्रूमः । कुत एतत् ? क्रयप्रतिकर्षात् । एवं ह्यत्र श्रूयते—"सह सोमौ क्रीणाति" । तत्प्रतिकर्षाच्चाधस्तनस्यापि प्रतिकर्ष इति । एवं प्राप्त आह—

## नाना वावभृथदीक्षाश्रुतिभ्याम् ॥ ११ ॥

नाना तन्त्रौ वा भवतः । कुत एतत् ? अवभृथदीक्षाश्रुतिभ्याम् । अभिषेचनीयस्य ह्यवभृथः श्रूयते—"स यत्रावभृथमभ्यवेति तदेतदभ्यवहरन्ति" इति दीक्षितवसनप्रासनविधिपरे वाक्ये अवभृथं दर्शयति । तथा च दीक्षा श्रूयते—"पुण्डरीकस्रजं प्रतिमुञ्चते सोऽस्य दीक्षा" इति । यदि ह्येकतन्त्रौ स्यातां नावभृथः श्रूयेत । तथा दीक्षा इति ॥ ११ ॥

एवं प्राप्त आह—

## एकं त्वानुपूर्व्ययोगात् ॥ १२ ॥

---

१. "सा दीक्षा" इति जर्मनमुद्रितशतपथपुस्तके पाठः ।

तुशब्दः पक्षव्यावृत्तौ। एकमेव तन्त्रम्, न भिन्नतन्त्रता। कुत एतत्? एवं हि पदार्था आनुपूर्व्येण युज्यन्ते। क्रयमात्रे पुनः प्रतिकृष्यमाणे दीक्षणीयादीनां पश्चादनुष्ठानानुपूर्व्यं स्यात् तत्र चोदकबाधः। दीक्षावभृथग्रहणं तद्वचनेनेत्यदोषः॥ १२॥

तदुक्तम्—

**अवभृथदीक्षाभ्यासो वचनादिति॥ १३॥**

यथाऽश्वमेधेऽवभृथदीक्षाभ्यासः॥ १३॥

**सप्तम्यां ब्रह्मागारात्सोममाहृत्यासन्द्यभिमर्शनादि करोत्युपसद्देवताहर्वीᳪषि निर्वपत्युपसदन्त इच्छन्यथोक्तम्॥ १४॥**

एवमेव हि श्रवणमिति॥ १४॥

**पितामहदशगणᳪ सोमपानाᳪ संख्यासर्पणम्॥ १५॥**

यजमानस्य पितामहदशगणं सोमपानामुच्चार्य(१) सर्पणं कर्त्तव्यम्॥ १५॥

**सवित्रेति वानुवाकमुक्त्वा॥ १६॥**

सर्पणं भवतीति विकल्पः॥ १६॥

**दश दशैकैकं चमसमनु भक्षयन्ति॥ १७॥**

"दश दशैकैकं चमसमनु प्रसृप्ता भवन्ति" (श० ब्रा० ५।४।५।२) इति वचनात्॥ १७॥

**यजमानस्य राजन्यः॥ १८॥**

तत्र च राजन्यचमसे राजन्या भक्षयन्ति। संख्या हि समानजातीयेषु भवति।

ननु च "शतं ब्राह्मणास्सोमं भक्षयन्ति" इत्यत्र श्रूयते। तत्र कथं राजन्या भवेयुः? उच्यते, भूयस्त्वात्। ब्राह्मणेषु चाब्राह्मणेषु शतसंख्येत्यदोषः। एवं च सहपानविरोधो न भवति॥ १८॥

एवं प्राप्त आह—

**ब्राह्मणा वा श्रुतेः॥ १९॥**

वाशब्दः पक्षव्यावृत्तौ। ब्राह्मणा एव भवन्ति न क्षत्रियाः। "शतं ब्राह्मणा" इति हि श्रूयते। ननु च ब्राह्मणेषु च भूयस्त्वाच्छतशब्द इत्युक्तम्। नैतदेवम्, "शतं

१. अमुकः प्रथमः, सोमपः, असौ द्वितीयः, असौ तृतीयः, एवं दशमपर्यन्तं सोमपान् गणयित्वेत्यर्थः।

ब्राह्मणाः सोमं भक्षयन्ति'' इति विधिरयम् , विधौ च न परः शब्दार्थो भवति । एवं कृत्वा "दश दशैकैकं चमसमनु भक्षयन्ति'' इति विभागविधानम् ।। १९ ।।

## तुल्याः संख्यायोगात् ।। २० ।।

शतसंख्या च तुल्येषूपपद्यते नातुल्येषु । अतो यजमानचमसेऽपि ब्राह्मणा एवेति । सहपानाविरोधस्तु वचनात् ।। २० ।।

## ब्रह्मणे ददात्यंशुवद्दक्षिणा ।। २१ ।।

अंशुवदिति तुल्यशास्त्रत्वात् ।। २१ ।।

## हिरण्मयीः स्रजमुद्गात्रे रुक्मः होत्रे हिरण्मयौ प्राकाशा(१) वध्वर्युभ्यामश्वं प्रस्तोत्रे वशां मैत्रावरुणायर्षभं ब्राह्मणाच्छंसिने वाससी नेष्टापोतृभ्यामन्यतरतो(२) युक्तं यवाचितमच्छावाकाय गामग्नीधे ।। २२ ।।

ददातीति सर्वत्रानुषङ्गः । गौश्चानड्डुद्भवति, काण्वपाठात् ।। २२ ।।

## अभिषेचनीयान्ते केशवपनार्थे निवर्त्तनः संवत्सरम् ।।२३।।

अभिषेचनीयान्तग्रहणेन दशपेयान्तो लक्ष्यते । ''अभिषेचनीयेनेष्ट्वा केशान्न वपते'' ( श० ब्रा० ५।५।३।१ । इति श्रुतेः । तच्च "संवत्सरं न वपते'' ( श० ब्रा० ५।५।३।२ ) इति श्रुतेः । वपनं मुण्डनं केशानामवखण्डनम् । येनैवमाह—"स वैन्येव वर्त्तयते केशान्नवपते'' ( श० ब्रा० ५।५।३।६ ) इति ।। २३ ।।

## भूम्यनभिष्ठानं च ।। २४ ।।

चशब्दात्संवत्सरमेव ।। २४ ।।

## अनुपानत्कस्य यावज्जीवम् ।। २५ ।।

पुनर्यावज्जीवमेव भूम्यनभिष्ठानम् । संवत्सरं तु सोपानत्कस्यापि भूम्यनभिष्ठानमिति ।। २५ ।।

इति पञ्चदशाध्याये अष्टमी कण्डिका ।।

---

१. प्राकाशौ दर्पणौ । कर्णवेष्टकावित्यपरे ।

२. एकस्मिन्पार्श्वे बलीवर्देन युक्तं यवैराचितं पूर्णं शकटमित्यर्थः।

९

उत्तरे शुक्ले पञ्चबिलः ॥ १ ॥

पञ्चबिल इति नामधेयम्—"तस्माच्चरुः पञ्चबिलो नाम" ( श० ब्रा० ५।५।१।११ ) इति । उत्तरग्रहणमनन्तरव्युदासार्थं उत्तरानन्तरार्थं च । वैशाखशुक्ल इत्यर्थः ॥ १ ॥

आग्नेय ऐन्द्रः सौम्यो वा वैश्वदेवश्चरुः पयस्या मैत्रावरुणी बार्हस्पत्यश्चरुः ॥ २ ॥

तेषां च—

प्रतिदिशमासादनमाग्नेयं पुरस्तात्दक्षिणमितराणि मध्येऽन्त्यम् ॥ ३ ॥

हविर्भवति ॥ ३ ॥

पूर्वैश्चरित्वा चरित्वा मध्यमे संस्रवासेचनम् ॥ ४ ॥

स च तत्संस्कारः । अतश्च संस्रवाभावेऽप्यन्येन कार्यः ॥ ४ ॥

आग्नेयो हिरण्यदक्षिणोऽग्नीधे ददात्यैन्द्रस्य ऋषभः सौम्यस्य बभ्रुर्ब्रह्मणे वैश्वदेवस्य पृषन्होत्रे पयस्याया वशाऽभावेऽप्रवीताऽध्वर्युभ्यां बार्हस्पत्यस्य शितिपृष्ठो ब्रह्मणे ॥ ५ ॥

ददातीत्यनुवर्त्तते । वशा रिक्ता । अप्रवीता अकामिका । अध्वर्युभ्यामिति । द्वितीयोऽग्नीत् ॥ ५ ॥

अन्नाद्यकामस्याप्येषा ॥ ६ ॥

राजसूयाद् बहिरिष्टिर्भवति ॥ ६ ॥

द्वादशोत्तराणि प्रयुग्घवींषि ॥ ७ ॥

निर्वपति ॥ ७ ॥

मासान्तराणि ॥ ८ ॥

प्रयुग्घवींषीति नामधेयम्, "स वै प्रयुजां हविर्भिर्यजत" (श०ब्रा०५।५।२।१) इति श्रुतेः । द्वादशग्रहणं वा मासान्तरपक्ष एकस्मिन्नेवाहनि क्रियेतेत्येवमर्थः । तथा च

काण्वानां "षट् षट् श्वो भूते" इति पठ्यते। यद्वा द्वादशानामेव प्रयुग्घविष्ट्वमुत्तरेषां नेति द्वादशग्रहणम् ॥ ८ ॥

आहवनीयाद्वा पुरस्ताच्छम्याप्रासे शम्याप्रास आग्नेयसौम्य-सावित्रबार्हस्पत्यत्वाष्ट्रवैश्वानरा यथोक्तम् ॥ ९ ॥

यथा प्रदेशान्तर उक्तम् ॥ ९ ॥

एवमावृत्तस्य चरवः सारस्वतमैत्रचैत्रपत्यवारुणादित्याः ॥

एवमेव प्रत्यावृत्तस्य शम्याप्रासे भवति ॥ १० ॥

षट् षड् वैकतन्त्रे ॥ ११ ॥

भवन्तीति सूत्रशेषः ॥ ११ ॥

पूर्वाग्निवाहौ द्वौ द्वौ षण्णां षण्णां दक्षिणा ॥ १२ ॥

इतरत्र तु चोदकेनान्वाहार्यः ॥ १२ ॥

अष्टापदीवत्पशुबन्धौ गर्भिणीभ्यां स्वगुणदक्षिणौ ॥ १३ ॥

अष्टापदीशब्देनानूबन्ध्योच्यते लक्षणया, तद्वत्पशुबन्धौ। तावेतौ गर्भिणीभ्यां भवतः स्वगुणदक्षिणौ, तद्गुणदक्षिणावित्यर्थः ॥ १३ ॥

श्येन्यादित्येभ्योऽदित्यै वा ॥ १४ ॥

भवति ॥ १४ ॥

वैश्वदेवी पृषती मारुती वा ॥ १५ ॥

भवति ॥ १५ ॥

तदन्ते केशवपनीयोऽतिरात्रः पौर्णमासीसुत्यः ॥ १६ ॥

तदन्तग्रहणाच्चानन्तरपौर्णमास्यां केशवपनीयो भवति ॥ १६ ॥

उत्तरे च मासान्तराः ॥ १७ ॥

उत्तरे च क्रतवो मासान्तराः। चशब्दात्पौर्णमासीसुत्याश्च भवन्ति ॥ १७ ॥

व्युष्टिर्द्विरात्रः ॥ १८ ॥

अग्निष्टोमातिरात्रौ ॥ १९ ॥

अग्निष्टोमग्रहणमपार्ष्ठिकत्वज्ञापनार्थम् ॥ १९ ॥

क्षत्रधृतिः ॥ २० ॥

अपरः क्रतुर्भवति ॥ २० ॥

तमुभयत एके त्रिष्टोमज्योतिष्टोमौ ॥ २१ ॥

कुर्वन्त्येके उपरिष्टात्। अत्र च वैशाखामावास्यायां पशुबन्धौ। ज्येष्ठपौर्णमास्यां केशवपनीयः। आषाढ्यां व्युष्टिद्विरात्रः। श्रावण्यां क्षत्रधृतिः। भाद्रपदाश्वयुजयोस्त्रिष्टोमज्योतिष्टोमौ। कार्त्तिक्यां सौत्रामणीति ॥ २१ ॥

अभिषेचनीयाद्वा संवत्सरात्केशवपनीयोऽतिरात्रः सोमापवर्गः ॥ २२ ॥

सोमापवर्ग इति सोमानामपवर्गो भवति वा, तदपवर्गे सोमाः ॥ २२ ॥

उत्तरे शुक्ले सौत्रामणी ॥ २३ ॥

सोमानन्तरे शुक्ले सौत्रामणी भवति ॥ २३ ॥

व्रीहीन्विरूढान्सोम उपनह्य क्रीणाति क्लीबात्सीसेन ॥२४॥

ऋजुः ॥ २४ ॥

पक्त्वौदनं विरूढांश्चूर्णीकृत्याश्विभ्यां पच्यस्वेति संसृजति ॥ २५ ॥

ओदनपाको विरूढैः सचतुर्मुष्टिकग्रहणपूर्वकश्चोदकानुग्रहाय। तस्य च विरूढचूर्णैरश्विभ्यां पच्यस्वेति संसर्गः ॥ २५ ॥

सिंहवृकव्याघ्रलोमानि चावपति ॥ २६ ॥

चशब्दात्तत्रैव ॥ २६ ॥

पशुषु वा ॥ २७ ॥

आवपति तुल्यशास्त्रत्वात् ॥ २७ ॥

पुरोडाशधर्मा द्रव्यसामान्यात् ॥ २८ ॥

अत्र च सुरायां पुरोडाशधर्माः प्रवर्त्तन्ते। द्रव्यं हि तेषां पर्युपस्थापकमिति।

ननु च ग्रहग्रहणपुरोरुगुपयामादीनां दर्शनात्सौमिका भवन्तीति गम्यते ? नेत्याह ॥ २८ ॥

## यावदुक्तं सौमिका गुणत्वात् ॥ २९ ॥

यावदुक्तं ते भवन्ति। न हि सौमिकधर्मप्रवृत्तिरत्र, व्यक्तत्वात्। न च गुणप्रवृत्त्या गुणान्तरप्रवृत्तिर्युक्ता, गुणत्वादेव ॥ २९ ॥

इति पञ्चदशाध्याये नवमी कण्डिका ॥



१०

## त्रिपशुः पशुबन्धः श्वश्चतुर्थ्याम् ॥ १ ॥

चतुर्थे वाऽहनि ॥ १ ॥

## पक्वायाम् ॥ २ ॥

सुरायाम् ॥ २ ॥

## आश्विनोऽजः श्येतः ॥ ३ ॥

श्येत आरक्तगौरः(१) ॥ ३ ॥

## मल्हाऽविः सारस्वती ॥ ४ ॥

रजो मलं हन्तीति मल्हाऽविः सा सारस्वती ॥ ४ ॥

## ऋषभमिन्द्राय सुत्राम्णे तद्गुणाभावेऽजाः ॥ ५ ॥

तद्गुणानामभावे अजा भवन्ति ॥ ५ ॥

## प्रथमो लोहितः ॥ ६ ॥

तदा च लोहितः प्रथमो भवति ॥ ६ ॥

## त्रियूपो वैकादशिनिलिङ्गात् ॥ ७ ॥

त्रियूपो वा भवति, एकयूपो वा, एकादशिनिलिङ्गात्। एकादशिन्यां ह्युभयं दृष्टम् - एकयूपतानेकयूपत्वं च। एकादशिनिलिङ्गं चात्र गणत्वमिति।

---

१. आलोहितोऽज इति हरिस्वामी। शुक्लवर्णं इति माधवाचार्याः।

अत्रोच्यते । सौत्रामणीसंशब्दनादेकयूपतैव नियन्तुं युज्यते । तत्र हि श्रूयते—"तद्यदेतौ सौत्रामणिकं यूपमेतौ यूपावभितो भवतः इति । अपि च सूत्रारम्भसामर्थ्यादयमर्थोऽवगम्यते— सूत्रारम्भमन्तरेणापि विकल्पः सिध्यत्येव । तस्मादेकयूपतानियम इति ॥ ७ ॥

अग्नी वरुणप्रघासवत् ॥ ८ ॥

अवेदिर्दक्षिणः ॥ ९ ॥

भवति ॥ ९ ॥

वपामार्जनान्ते कुशैः परिस्रुतं पुनाति वायुः पूत इति ॥१०॥

अनेन मन्त्रेण ॥ १० ॥

कुवलकर्कन्धुबदरचूर्णानि चावपति ॥ ११ ॥

(१)कुवलादयो बदरजातिविशेषाः । वयोवस्थाविशेषा इत्यपरे ॥ ११ ॥

ग्रहं गृह्णाति कुविदङ्गेति त्रीन्वा प्रतिदेवतमेतेनैव ॥१२॥

पुरोरुचा । स चायं विकल्पः, "एकं वा त्रीन्वा" ( श० ब्रा० ५।५।४।२३ ) इति श्रुतत्वात् ॥ १२ ॥

समस्यानुवाचनं यजेति च ॥ १३ ॥

समासश्चतुर्थ्यन्तानामेव पदानां, न विभक्तिलोपेन ॥ १३ ॥

प्रथमस्यानुहोममितरौ ॥ १४ ॥

ग्रहौ ॥ १४ ॥

परिस्रुद्धोमो दक्षिणेऽग्नौ ॥ १५ ॥

तत्र चाहवनीयसंस्काराः कर्त्तव्याः चोदकपरिप्राप्तत्वात् ॥ १५ ॥

भक्षमाहृत्य परिस्रुच्छेषमासिच्य रुक्मवच्छिद्रं कुम्भं शिक्ये कृत्वोपरि दक्षिणस्य धारयन्तस्रवन्तमुपतिष्ठते तृचैः सोमवतां बर्हिषदामग्निष्वात्तानामिति ॥ १६ ॥

---

१. बदराणि निरुपपदबदराणि चणकबदराणि च कुवलादिवाच्यानीति याज्ञिकाः । सूक्ष्मतरस्थूलमध्यमपरिमाणानि बदरजातिफलानीति माधवाचार्याः ।

भक्षाहरणमात्रोपदेशाद्विशेषानुपदेशाच्च यथाऽन्यत्र भक्षणं तथेहापीति ॥१६॥

हवीꣳषि निर्वपति सावित्रवारुणैन्द्राणि यथोक्तं पशुपुरोडाशार्थे ॥ १७ ॥

देवतान्यत्वात् पशुपुरोडाशार्थ इत्युक्तम् ॥ १७ ॥

नपुंसको दक्षिणा रथवाही वा वडवा ॥ १८ ॥

विकल्पः ॥ १८ ॥

सोमातिपूतस्याप्येषा ॥ १९ ॥

सौत्रामणी भवतीति शेषः ॥ १९ ॥

अनुयाजान्ते पशुपुरोडाशार्थैश्चरत्याश्विनेन प्रागवदानेभ्यः॥

आश्विनस्य चानेनोत्पत्तिः, पूर्वमनभिधानात् ॥ २० ॥

हविर्भिर्वा ॥ २१ ॥

प्रागवदानेभ्यश्चरति अस्मिंश्च पक्षे ॥ २१ ॥

आश्विननाभावस्तु ॥ २२ ॥

सौत्रामणीं त्रैधातवीं च प्रकृत्य श्रूयते—"सैषा राजसूययाजिन उदवसानीयेष्टिर्भवति", ( श० ब्रा० ५।५।५।९ ) इति । अतः किमर्थमिदमाह—

राजसूययाजिनः कर्मापवर्गे वा सौत्रामणी ॥ २३ ॥

त्रैधातवी वेति विकल्पमाशङ्क्याह—

त्रैधातव्यानुपूर्व्ययोगात् ॥ २४ ॥

त्रैधातव्येवान्ते भवति, आनुपूर्व्ययोगात् । त्रैधातव्येवान्ते पठ्यत इति । न चानयोर्विकल्पः, आम्नानसामर्थ्यात् । तेन सौत्रामण्या उदवसानीयत्वमुच्यते, उदवसानीयासन्निधौ पाठात् । उदवसानीयेवोदवसानीयेति उपचारवृत्त्या । तथा च पाठः—"अनया मेऽपीष्टमसदनयापि सूया" ( श० ब्रा० ५।५।५।११ ) इति ॥ २४ ॥

इति पञ्चदशाध्याये दशमी कण्डिका ॥

इति कर्कभाष्यसहिते कात्यायनश्रौतसूत्रे
पञ्चदशोऽध्यायः समाप्तः ॥ १५ ॥

# षोडशोऽध्यायः

## चयनम्

### १

राजसूयोऽनुविहितः। इदानीं श्रुतिमन्त्रपाठावसरप्राप्तोऽग्निरनुविधेयः। सोऽनुविधीयते।

## अग्निः सोमाङ्गं तद्गुणव्यतिषङ्गात् ॥ १ ॥

अग्निशब्दो ज्वलनवचनः। अतस्तदधिकरणभूतस्थलाभिधायको द्रष्टव्यः "इष्टकाभिरग्निं चिनोति" इति हि श्रूयते। तथा "अग्निमारोहन्ति" (श० ब्रा० ९।२।३।२४) "अग्निं प्रोक्षति" (श्रौ० सू० १७-१२-२८) इति चारोहणप्रोक्षणे स्थलस्योच्येते। तस्य चानारभ्य विधानात्प्रकृतिसव्यपेक्षत्वे सोमस्याङ्गमित्युच्यते। सोमशब्देन च लक्षणया तत्साध्यक्रत्वभिधानम्। 'सोमाङ्गम्' इति कुत एतत्? तद्गुणव्यतिषङ्गात्। तद्गुणानां हि (१)व्यतिषङ्गोऽत्र दृश्यते। "अन्तरोपसदौ चिनोति" (श० ब्रा० १०।२।५।१)। "प्रायणीयेन प्रचर्य सीरं युनक्ति" (श० ब्रा० ७।२।२।२) "चितो गार्हपत्यो भवत्यचित आहवनीयः। अथ राजानं क्रीणाति" (श० ब्रा० ७।३।१।१) इत्येवमादि। फलवतश्च गुणव्यतिषङ्गे सति अफलस्य (२)तदङ्गता ॥ १ ॥

## इच्छतः स महाव्रते नियमः ॥ २ ॥

अङ्गमपि सदिच्छया भवति। कथमवगम्यते? येन स (३)महाव्रते नियमो दृश्यते—"तस्मादेतानि सर्वाणि सहोपेयादग्निं महाव्रतम्" (श०ब्रा०१०।१।२।२) इति।

ननु चाग्नौ महाव्रतनियमः कस्मान्न भवति? उच्यते—अग्निप्रकरणेऽपाठात्। यस्यैव प्रकरणं तद्धर्मनियमो युक्तः। तस्मात्साध्वभिहितं "स महाव्रते नियमः" इति। अत एवोक्तम् "इच्छतः" इति। अत्र नियमविधानादन्यत्रेच्छैव भवति ॥ २ ॥

## न प्रथमाहारे ॥ ३ ॥

प्रथममह्रियत इति प्रथमाहारः, प्रथमप्रयोग इत्यर्थः ॥ ३ ॥

---

१. सम्बन्ध इत्यर्थः।

२. फलवत्सन्निधावफलं तदङ्गमिति न्यायादिति भावः।

३. यद्यपि महाव्रतशब्दः क्रतुवाचकः स्तोत्रवाचकश्च, तथाप्यत्र स्तोत्रवाचक एव, सन्दर्भसामर्थ्यात्।

कुत एतत् प्रथमे प्रयोगे न भवतीति ?

## उत्तरवेद्यग्निनिधानात् ॥ ४ ॥

(१)उत्तरवेदौ ह्यग्नेर्निधानं विहितम्—"स यद्धार्यमाणेऽग्नौ उत्तरवेदिं व्याघारयति" ( श० ब्रा० ३।५।२।९ ) इति। अग्निधारणं च निधानार्थम्। अग्नौ च स्थलेऽग्निनिधानं विहितम्। यदि च प्रथमाहारेऽप्यग्निः स्यादुत्तरवेदावग्निनिधानमनर्थकं स्यात्। अथ पुनः प्रथमाहारेऽर्थवत्त्वे संवृत्ते द्वितीयादिष्वग्नावग्निनिधानमविरुद्धमिति सम्प्रदायः।

ननु चानारभ्यवादप्रकृतिविधानयोर्विकल्पः कस्मान्न भवति ? नेत्युच्यते, प्राकृतं विधानमुत्पत्तिशिष्टत्वादनारभ्यवादाद् बलीयः, अतो न विकल्प(२) इति। अत्र वदामः—यदि प्राकृते प्रत्यर्थिन्यनारभ्यवादस्यानवकाशः द्वितीयादिष्वपि प्रयोगेष्वनारभ्यवादविहितोऽग्निर्न प्राप्नोति, तत्रापि हि प्रकृतौ विहितमुत्तरवेदावग्निनिधानमस्त्येव, तस्मादपव्याख्यैषा 'प्रथमाहारशब्देन प्रथमः प्रयोग उच्यते' इति। कथं ह्येतत् ? उच्यते—प्रथमाहारशब्देन ज्योतिष्टोमोऽग्निष्टोमसंस्था उच्यते। तस्य हि प्रथममाहरणमनुष्ठानम्। एवं हि श्रूयते, "एष वा व प्रथमो यज्ञानां यज्ज्योतिष्टोमः" इति। आचार्येणाप्युक्तम्—"एष प्रथमसोमः" इति। तेन प्रथमाहारे ज्योतिष्टोमेऽग्निष्टोमसंस्थे नाग्निर्भवति। न हि प्राकृतं विधानमनारभ्यविधिना पक्षेऽपि बाधितुं शक्यते। अतोऽनारभ्यविहितस्याग्नेरन्यत्रावकाशः। यथा साप्तदश्यं प्रकृत्याम्नातेन पाञ्चदश्येन बाधितम्। यद्येवं साप्तदश्यवत् पुनर्यत्रैव श्रवणं तत्रैवाग्निः प्राप्नोति, यथा साग्निचित्यावग्नेः स्तोमाविति, यथाऽश्वमेधे एकविंशोऽग्निर्भवतीति सर्वमेधे चाग्निरुत्तम इति। नैष दोषः, अस्ति ह्यत्रान्यदपि विधानम्। "अथातोग्निः" इति प्रकृत्य "तमग्निष्टोमेनानुयजति, तमुक्थ्येन, तमतिरात्रेण, तमेकरात्रेण, तं द्विरात्रेण" इत्येवमादि समानविधानार्थानि वचनानि, तैः सर्वत्र प्राप्तिः। तथा च तस्मादु सप्तविधमेव प्रथमं

---

१. अथातोग्निरितिश्रुत्या सर्वत्र प्रापिते पुनः।
सहोपेयादिति श्रुत्या नियमः स महाव्रते॥
उपलक्षणमेवैतद्विशेषः श्रूयते यतः।
सर्वमेधेऽश्वमेधेऽग्नेः स्तोमे चातश्चतुर्ष्वपि॥
नियमोऽन्यत्र पक्षे स्याज्ज्योतिष्टोमे भवेन्न तु।
प्राकृते संप्रदायान्नो षोडशिन्यविधानतः॥
वाजपेये पुनः सोमसूत्रेऽग्निः श्रूयतेऽपि वा।
अतः षोडशिनि स्याद्वा नेति भाष्ये उपेक्षितम्॥

इत्यन्यत्रोक्तम्।

२. उत्पत्त्युत्पन्नशिष्टयोस्तुल्यबलत्वाभावान्न विकल्प इत्यर्थः।

विदधीतार्थकोत्तरमैकशतविधादिति । अतः सर्वत्र प्राप्तिः । साप्तदश्ये तु विशेषमेव श्रवणमिति ॥ ४ ॥

## चिकीर्षमाण उत्तरस्यां फाल्गुन्यां पौर्णमासेनेष्ट्वा पञ्चपशूनालभते दक्षिणान् ॥ ५ ॥

"चिकीर्षमाणः" इत्यवाच्यम्, उपक्रमादेव तत्सिद्धेः । वाच्यं वा । स्वयमातृण्णाद्युपधानेऽपि मा भूदालम्भ इति । पञ्चग्रहणं चाभिजिद्विश्वजितोरपि पञ्चैव यथा स्युरिति ॥ ५ ॥

## ब्रह्मणे वा दद्यात् ॥ ६ ॥

दक्षिणाम् । विकल्पेन हि श्रवणमत्र ॥ ६ ॥

## अमावास्यायामेके ॥ ७ ॥

पञ्च पशूनालभन्ते, "अमावास्यायामालभेतेत्यु हैक आहुः" ( श० ब्रा० ६।२।२।१६ ) इति । सा च माघामावास्या सन्निधानाद् गृह्यते ॥ ७ ॥

## अग्निभ्यः कामाय पुरुषाश्वगोऽव्यजान् ॥ ८ ॥

आलभते । यत्तु "वैश्वकर्मणं पुरुषं वारुणमश्वमैन्द्रमृषभं त्वाष्ट्रमविमाग्नेयमजम्" ( श० ब्रा० ६।२।१।५ ) इति, सोऽर्थवादो "हन्तेनानग्निभ्यः कामायालभा" ( श० ब्रा० ६।२।१।६ ) इत्यस्य ॥ ८ ॥

## वर्षिष्ठरशनः पुरुषोऽनुपूर्व्या इतरेषाम् ॥ ९ ॥

रशना भवन्ति, "पुरुषस्य वर्षिष्ठाऽथ ह्रसीयस्यथ ह्रसीयसी" ( श० ब्रा ६।२।१।१९ ) इति श्रुतेः । वर्षिष्ठता च व्यामापेक्षया, न स्थौल्यापेक्षया । प्रकृतौ द्विव्यामा भयते—"द्विव्यामया रशनया" ( श्रौ० सू० ६।३।२४ ) इति ॥ ९ ॥

## सर्वेषां वा तुल्याः ॥ १० ॥

रशना भवन्ति ॥ १० ॥

## समिध्यमानसमिद्धवत्यन्तरे समास्त्वाग्न इति नव दधाति ॥ ११ ॥

"तेषां चतुर्विंशतिः सामिधेन्यः" ( श० ब्रा० ६।२।१।२१ ) इति प्रकृत्याह—"समास्त्वाग्नऽऋतवो वर्द्धयन्तु" ( वा० सं० २७।१ ) इति ॥ ११ ॥

## आप्रियो द्वादशोर्ध्वा अस्येति ॥ १२ ॥

आप्रियः प्रयाजयाज्या द्वादश भवन्ति, "ता एता ऊर्ध्वा अस्य समिधो भवन्ति" ( श० ब्रा० ६।२।१।३१ ) इति श्रुतेः ॥ १२ ॥

## एकादशान्ते शासप्रैषादि करोति ॥ १३ ॥

प्रकृतौ दशान्तेऽभिहितम् । इह वचनादेकादशान्त उच्यते ॥ १३ ॥

## परिवृते पुरुषसंज्ञपनम् ॥ १४ ॥

वचनाद्भवति ॥ १४ ॥

## अजस्य शुन्धति प्रचरणयोगात् ॥ १५ ॥

इतरेषां पशूनामप्सु कायप्रासनमुक्तम्, अजेन चरतीति च । एतेनाजस्य शुन्धतीत्युच्यते । स हि प्रचरणेन युज्यते ॥ १५ ॥

## सर्वेषां वाऽविशेषात् ॥ १६ ॥

सर्वेषां वा शोधनं कर्त्तव्यम् । सर्वेषामेव ह्यविशेषेण देवतासम्बन्ध उपदिष्टः । तेन सर्व एवैते यागाः । यागार्थद्रव्यस्य च यो धर्मः स च सर्वेषां भवति । अप्सु कायप्रासनं तु वचनात् ॥ १६ ॥

## वैश्यः पुरुषो राजन्यो वा ॥ १७ ॥

वचनाद्भवति ॥ १७ ॥

## कण्ठेषु तृणमन्तर्धाय शिरा७स्यादत्ते ॥ १८ ॥

तृणाधिकाराद्वपातृणकाल एव शिरसामादानं जिह्वावर्जम् । सा ह्यवदानैः सह गृह्यते ॥ १८ ॥

## चतुर्णामप्सु कायप्रासनम् ॥ १९ ॥

शिरोग्रहणसमनन्तरमेव । येनाजं प्रकृत्याह–स७स्थिते तस्य शेषप्रासनमिति ॥ १९ ॥

## ततो मृदिष्टकार्थापश्च ॥ २० ॥

तत एवोदकमध्यात् मृद् गृह्यते इष्टकार्था । आपश्च तत एव ॥ २० ॥

## अजेन चरति ॥ २१ ॥

"अजेन यज्ञ७ स७स्थापयन्ति" इति वचनात् ॥ २१ ॥

## सꣳस्थिते तस्य शेषप्रासनम् ॥ २२ ॥

सꣳस्थिते कर्मणि शेषस्याप्सु प्रासनम् ॥ २२ ॥

## सर्वै रेके ॥ २३ ॥

एके आचार्याः सर्वैः पशुभिः प्रचारमिच्छन्ति । "तद्धैक आहुरत्रैवैतैः सर्वैः पशुभिर्यजेत" ( श० ब्रा० ६।२।१।१३ ) इति हि श्रूयते । ननु चैवं सति सम्भरणार्थता विरुध्यते । सम्भरणार्थं हि अप्सु कुसिन्धानां प्रासनम् । कुसिन्धैः कुषितया मृदा अद्भिश्चेष्टकानां दार्ढ्यमुपजायत इति । अतः सर्वप्रचारे सम्भरणानुपपत्तिरिति ॥२३॥

एवमाशङ्कित आह—

## एकस्यापि किं ततः सम्भरेदिति श्रुतेः ॥ २४ ॥

"तद्धैक आहुरत्रैवैतैः सर्वैः पशुभिर्यजेत" ( श० ब्रा० ६।२।१। ३ ) इति प्रकृत्याह—"यद्वा एतैरत्र सर्वैर्यजेत तदेवाग्नेरन्तं परीयाद्" ( श० ब्रा० ६।२।१।१३ ) इति सर्वैर्यागमभिधाय निषेधति "न तथा कुर्याद्देवानां तदितादियादथो पथस्तदियादथो किं ततः सम्भरेत्" ( श० ब्रा० ६।२।१।१३ ) इति सर्वयागपक्षे सम्भरणाभावदोष-प्रसङ्गः । तस्मान्न सर्वैर्याग इति । एवमाशङ्किते उत्तरम् एकस्यापि "किं ततः सम्भरेत्" ( श० ब्रा० ६।२।१।१३ ) इति श्रुतेः । एकस्यापि पशोरालम्भे किं ततः सम्भरेदित्येत-त्तुल्यमेव । तस्माद्विकल्पः सर्वैर्वा यागोऽजेन वेति । यः सम्भरणाभावः सोऽसर्व-यागपक्षार्थवादः ॥ २४ ॥

## वैश्वानरः पशुपुरोडाश उपाꣳशु ॥ २५ ॥

भवति ॥ २५ ॥

## पशुदेवता च ॥ २६ ॥

उपांश्वेव ॥ २६ ॥

## आग्नेय्यो याज्यानुवाक्याः कामवत्यः ॥ २७ ॥

भवन्ति ॥ २७ ॥

## मैथुनं वर्जयेदापयस्यायाः ॥ २८ ॥

पयस्या अन्ते विहिता आ तत इति ॥ २८ ॥

## माꣳसोपर्यासने चेच्छन् ॥ २९ ॥

माꣳसोपर्यासने चेच्छया वर्जयेत् ॥ २९ ॥

## त्वङ्मस्तिष्कोद्धृतानि घृताक्तानि शिरा॑ꣳसि निदधाति ॥ ३० ॥

त्वक्त्वगेव, मस्तिष्कशब्देन शिरःकपालगता मज्जाऽभिधीयते। ते च उद्धृत्य घृताक्तानि शिरा॑ꣳसि स्थापयति ॥ ३० ॥

## सकलानि वा ॥ ३१ ॥

वेति विकल्पः ॥ ३१ ॥

## अन्यानि वा ॥ ३२ ॥

## हिरण्मयानि वा ॥ ३३ ॥

## मृन्मयानि वा ॥ ३४ ॥

## अनालभ्यैतान् ॥ ३५ ॥

पशून्। अन्यानि वा सङ्ग्रामहतानि गृह्णाति हिरण्मयानि वा मृन्मयानि वेति विकल्पः ॥ ३५ ॥

## श्यामतूपरो वा प्राजापत्यः ॥ ३६ ॥

पशुरालभ्यते। पञ्च पशवो वेति विकल्पः। प्राजापत्यस्य चाहर्गणेषु नियमः॥३६॥

## षड्दध्यात् ॥ ३७ ॥

धाय्याः। प्राजापत्यं हि प्रकृत्योच्यते "तस्यैकविꣳशतिः सामिधेन्यः" (श० ब्रा० ६।२।२।३) इति ॥ ३७ ॥

## हिरण्यगर्भ इत्यृचा स्रुवाघारः ॥ ३८ ॥

"हिरण्यगर्भवत्याऽऽघारमाघारयति" (श० ब्रा० ६।२।२।५) इति वचनात्। स च पूर्व एव भवति नापूर्वः, प्रकृतिलिङ्गसंयोगात्। प्रकृतिलिङ्गसंयोगो ह्यत्र भवति आघारमाघारयतीति ॥ ३८ ॥

पूर्वत्वेऽपि सन्देहः—किं पूर्वाघारे मन्त्रविधानमुतोत्तराघार इति। किं तावत्प्राप्तम् ?

## पूर्वो देवतासामान्यात् ॥ ३९ ॥

स्रुवाघारो हिरण्यगर्भवत्या कर्त्तव्यः। कुत एतत् ? देवतासामान्यात्। स्रुवाघारे हि प्रजापतिर्देवता, हिरण्यगर्भवत्यामपि प्रजापतेरेव देवतात्वं "कस्मै देवाय

हविषा विधेम" ( श० ब्रा० ७।४।१।१९ ) इति । कश्च प्रजापतिः । मन्त्रश्च सुवाघार एव देवताभिधानसमर्थः । तस्मात्तत्रैव विनियुज्यत इति ॥ ३९ ॥

एवं प्राप्ते आह—

## उत्तरे तु सामान्योपदेशाभ्याम् ॥ ४० ॥

तुशब्दः पक्षव्यावृत्तौ । न पूर्वस्मिन्नाघारे मन्त्रप्रयोगः, किं तर्ह्युत्तराघारे । कुत एतत् ? मन्त्रवत्त्वसामान्यात् । यस्यैव च प्रकृतौ मन्त्रो दृष्टस्तस्यैव मन्त्रान्तरविधानमनुरूपतरम् । इतरत्र तु मन्त्रवत्ता च विधेया तद्विशेषश्चेति गौरवं स्यात् । तेनोत्तराघारे मन्त्रो विधीयमानः शब्दत्वसामान्यात् मन्त्रान्तरस्य निर्वर्त्तको भवति । यथा स्नेहसामान्यात् तैलं घृतस्य । यत्पुनरुक्तं कशब्देन प्रजापतिरभिधीयत इति । इन्द्रस्यापि तच्छब्दाभिधानमविरुद्धम् । तस्मान्मन्त्रोपदेशादुत्तराघारे एव तद्विनियोग इति ॥४०॥

## वायवे वा नियुत्वते श्वेतलप्सुदी द्वे दध्यात् ॥ ४१ ॥

अथवा नियुत्वद्गुणविशिष्टाय वायवे शुक्लपशुरालभ्यते न प्राजापत्यः पञ्च पशवो वा । एवमपि श्रूयत एव । श्वेतो वर्णतः, लप्सुदी कूर्चलः । तूपरशब्दश्चात्रानुवर्त्तते, "अथैतं वायवे नियुत्वते शुक्लं तूपरमालभते" ( श० ब्रा० ६।२।२।६ ) इति श्रुतेः । तत्र च द्वे धाय्ये दध्यात्, "तस्य सप्तदश सामिधेन्यो भवन्ति" ( श० ब्रा० ३।१।३।६ ) इति वचनात् ॥ ४१ ॥

## प्राजापत्यः पशुपुरोडाशो द्वादशकपाल उभयोः ॥ ४२ ॥

उभयोरपि प्राजापत्यवायव्ययोः प्राजापत्य एव द्वादशकपालः पशुपुरोडाशो भवति ॥ ४२ ॥

## कद्वत्यो याज्यानुवाक्याः प्राजापत्यस्य ॥ ४३ ॥

भवन्ति ॥ ४३ ॥

## शुक्लवत्यो वायव्यस्य ॥ ४४ ॥

## वपाया वा ॥ ४५ ॥

वा अवधारणे । शुक्लवत्यौ भवतः । "वपाया एव शुक्लवत्यौ स्याताम्" ( श० ब्रा० ६।२।२।१४ ) इति वचनात् ॥ ४५ ॥

## तुल्यमन्यत्सर्वेषु ॥ ४६ ॥

इति षोडशाध्याये प्रथमा कण्डिका ॥



२

# उखासम्भरणमष्टम्याम् ॥ १ ॥

उखायाः सम्भरणमुखासम्भरणम्, तदष्टम्यां भवति, "अष्टकायामुखाᳪसम्भरति" ( श० ब्रा० ६।२।२।२३ ) इति वचनात्। उखाग्रहणं चोपलक्षणम्। अषाढाद्यप्यत्र सम्भ्रियत एव। ततश्चान्तराये तस्यापि प्रयोक्तृत्वम् ॥ १ ॥

# आहवनीयस्य पुरस्तान्मत्या चतुरस्रे श्वभ्रे मृत्पिण्ड- मवदधाति भूमिसमम् ॥ २ ॥

भूमिसममन्यूनमनतिरिक्तम् ॥ २ ॥

# पिण्डमपरेण व्यध्वे वल्मीकवपां छिद्रां निदधाति ॥ ३ ॥

पिण्डाहवनीययोर्व्यध्वे अर्धपथे ॥ ३ ॥

# आहवनीयं दक्षिणेन त्रिवृन्मुञ्जपञ्चाङ्गीबद्धास्तिष्ठन्ति प्राञ्चो- ऽश्वगर्दभाजाः पूर्वापरा रासभो मध्येऽश्वपूर्वाः ॥ ४ ॥

आहवनीयस्य दक्षिणतस्त्रिवृद्भिर्मुञ्जमयीभिः पञ्चाङ्गीभिः। पञ्चाङ्गयो मुखरिकाः, ताभिर्वद्धास्तिष्ठन्ति प्राङ्मुखाः अश्वगर्दभाजाः पूर्वापररीत्या रासभो मध्येऽश्वपूर्वाः॥४॥

# उत्तरत आहवनीयस्यारत्निमात्र उभयतस्तीक्ष्णा वैणवी सुषि- राभ्रिः कल्माष्यभावेऽकल्माषी प्रादेशमात्र्यरत्निमात्री वा ॥

आनन्तर्यात्पशूनामुत्तरतो मा भूदित्याहवनीयग्रहणम् ॥ ५ ॥

# हिरण्मयीमेके ॥ ६ ॥

आचार्या इच्छन्ति। अतश्च विकल्पः ॥ ६ ॥

# अष्टगृहीतं जुहोति सन्ततमुद्गृह्णन्युञ्जान इति ॥ ७ ॥

अष्टगृहीतमाज्यद्रव्यं सन्ततं जुहोत्युद्गृह्णन् "युञ्जान" ( वा० सं० ११-१ ) इति। अत्रैतच्चिन्त्यते-किमिदमेकं कर्म? उताष्टावेतानीति? एकमिति ब्रूमः। तां वा एतामेकाᳪ सतीमष्टागृहीतामष्टाभिर्यजुर्भिर्जुहोति" ( श० ब्रा० ६-३-१-३ ) इति। अष्टौ वा कर्माणि, नैकमिति। "तान्येतान्यष्टौ सावित्राणि" ( श० ब्रा० ६-३-१-२१ ) इति। किं च वैश्वकर्मणश्च सहैकवाक्यत्वात्। अष्टौ सावित्राण्यष्टौ वैश्वकर्मणानीति

च । निःसन्दिग्धं वैश्वकर्मणान्यष्टौ । अतः सहत्वाविशेषात्सावित्राण्यष्टाविति गम्यते । ननु "तां वा एतामेका॑ सतीम्" इत्येतस्मिन्वाक्ये सति अष्टौ सावित्राण्येव, तस्मिंश्च सति कथमेकान्ततोऽवधार्यते अष्टावेतानि कर्माणीति ? उच्यते—उत्पत्तौ बहुत्व-विशिष्टानां श्रवणम् । एवं हि श्रूयते-"तेषां चेतयमानाना॑ सवितैतानि सावित्राण्य-पश्यद्यत्सविताऽपश्यत्तस्मात्सावित्राणि" ( श० ब्रा० ६-३-१-१ ) इति । यत्पुनरे-कत्वश्रवणं तत्प्रक्षेपापेक्षया । प्रयोजनं यत्तदन्तरितं तत्प्रयुज्यते ॥ ७ ॥

## देवस्य त्वेत्यभ्रिमादाय हस्त आधायेत्येनामभिमन्त्रयते॥८॥

हिरण्मयीपक्षे मन्त्रः स्यात्, "बिभ्रदभ्रि॑ हिरण्मयीम्" ( वा० सं० ११-११ ) इति मन्त्रलिङ्गात् । न वा संस्तवार्थत्वात् । हिरण्यमयीशब्देन संस्तवः क्रियते । तथा चाह-"यद्वा एषा छन्दा॑सि तेनैषां हिरण्यम्" ( श० ब्रा० ६-३-१-४२ ) इति । तस्माद्वैणवीपक्षेऽपि मन्त्रप्रयोगः ॥ ८ ॥

## अश्वप्रभृतींश्च प्रत्यृचं प्रतूर्तं युञ्जाथां योगे योग इति॥९॥

अभिमन्त्रयत इत्यनुवर्त्तते ॥ ९ ॥

## अनुपस्पृशन्नुत्क्रमयत्येनान्प्राचः प्रतिमन्त्रं प्रतूर्वन्नुर्वन्त-रिक्षं पृथिव्याः सधस्थादिति ॥ १० ॥

एभिर्मन्त्रैः ॥ १० ॥

## अग्निषु ज्वलत्सु पिण्डं गच्छन्त्यग्निं पुरीष्यमिति ॥ ११ ॥

ज्वलत्स्वग्निषु पिण्डं प्रतिगच्छन्ति(१) "अग्निं पुरीष्यम्" ( वा० सं० ११-१६ ) इत्यनेन मन्त्रेण, "प्रदीप्ता एतेऽग्नयो भवन्त्यथ मृदमच्छयन्ति" (श० ब्रा० ६-३-३-१) इति वचनात् ॥ ११ ॥

## दक्षिणतश्च पशवो युगपत् ॥ १२ ॥

गच्छतां च दक्षिणतः पशवः उत्तरतश्च पुरुषाः युगपद्गमनम् ॥ १२ ॥

## अनद्धा पुरुषमीक्षते देवपितृमनुष्यानर्थकमग्निं पुरीष्यमिति ॥ १३ ॥

यो देवादीन्नावति स देवपितृमनुष्यानर्थकः ॥ १३ ॥

---

१. यजमानाध्वर्युवोऽत्र बहुत्वेन परिगृह्यन्ते ।

वल्मीकवपामादाय छिद्रेण पिण्डमीक्षतेऽन्वग्निनरिति ॥ १४ ॥

अनेन मन्त्रेण ॥ १४ ॥

दृष्ट्वा निदधात्येनाम् ॥ १५ ॥

वल्मीकवपाम् ॥ १५ ॥

आगत्येत्यभिमन्त्रयतेऽश्वम् ॥ १६ ॥

आक्रम्येत्येनेन पिण्डमधिष्ठापयति ॥ १७ ॥

'एनेन' इत्यश्वोऽभिधीयते ॥ १७ ॥

द्यौस्त इति पृष्ठस्योपरि पाणिं धारयन्ननुपस्पृशन् ॥ १८ ॥

उत्क्रामेत्युत्क्रमयति ॥ १९ ॥

अश्वम् ॥ १९ ॥

उदक्रमीदित्यभिमन्त्रयते ॥ २० ॥

अश्वमेव ॥ २० ॥

आहवनीयवत् स्थापयति पिण्डस्य ॥ २१ ॥

पशून् ॥ २१ ॥

उपविश्य मृदमभिजुहोत्या त्वा जिघर्मीति व्यतिषक्ताभ्या-
मृग्भ्यामाहुती स्रुवेणाश्वपदे ॥ २२ ॥

मृत्संस्कारत्वात् 'उपविश्य' इत्युच्यते । व्यतिषङ्गश्च एकस्याः पूर्वार्धं इतरस्या उत्तरार्धः । इतरयोरप्येवमेव ॥ २२ ॥

अभ्र्या पिण्डं त्रिः परिलिखति परिवाजपतिरिति
बहिर्बहिरुत्तरयोत्तरया ॥ २३ ॥

अभ्र्या पिण्डं खनति देवस्य त्वेति ॥ २४ ॥

अभ्रिग्रहणमभ्यन्तरनिवृत्त्यर्थम् । तथा चाह—"अत्र सा वेणव्यभ्रिरुत्सीदति" ( श० ब्रा० ६-५-४-३ ) इति ॥ २४ ॥

कृष्णाजिनमास्तीर्योत्तरतः ॥ २५ ॥

तस्मिन्पुष्करपर्णमपां पृष्ठमिति ॥ २६ ॥

तस्मिन्निति कृष्णाजिने ॥ २६ ॥

विमाष्ट्येनद्दिव इति ॥ २७ ॥

पुष्करपर्णम् ॥ २७ ॥

आलभत उभे शर्म च स्थ इति ॥ २८ ॥

उभे कृष्णाजिनपुष्करपर्णे । शक्यत्वाच्च युगपदालम्भनम् ॥ २८ ॥

पिण्डं पुरीष्योऽसीति ॥ २९ ॥

आलभते ॥ २९ ॥

इति षोडशाध्याये द्वितीया कण्डिका ।



३

पुष्करपर्णे निदधाति ॥ १ ॥

ग्रहणे मन्त्रः, "अथैनं परिगृह्णाति" (श० ब्रा० ६-४-२-२) इति वचनात् ॥१॥

अपः श्वभ्रेऽवनयत्यपो देवीरिति ॥ २ ॥

अनेन मन्त्रेण । श्वभ्रः पिण्डावटः ॥ २ ॥

सन्त इति वातमपानिपति ॥ ३ ॥

श्वभ्र एव ॥ ३ ॥

अनामिकया संवपति पुरस्तात्पश्चाद्दक्षिणत उत्तरतश्च ॥

संवापश्चावटे पुरीषस्य ॥ ४ ॥

आस्तीर्णयोरन्तानुद्गृह्णाति सुजात इति ॥ ५ ॥

आस्तीर्णयोः कृष्णाजिनपुष्करपर्णयोरन्तानुद्गृह्णाति "सुजात" ( वा० सं० ११।४० ) इत्यनेन मन्त्रेण ॥ ५ ॥

त्रिवृता मुञ्जयोक्त्रेणोपनह्यति वासो अग्न इति॥ ६ ॥

उद्गृहीतानन्तान्मुञ्जयोक्त्रेणोपनह्यति "वासो अग्न" ( वा० सं० ११।४० ) इत्यनेन मन्त्रेण बध्नाति ॥ ६ ॥

उत्तिष्ठति पिण्डमादायोदु तिष्ठेति ॥ ७ ॥

ऊर्ध्वबाहुः प्राञ्चं प्रगृह्णात्यूर्ध्व ऊ षु ण इति ॥ ८ ॥

प्रसारितबाहुः प्राञ्चं पिण्डं गृह्णाति "ऊर्ध्व ऊ षु णः" ( वा० सं० ११।४२ ) इत्यनेन मन्त्रेण ॥ ८ ॥

अवहृत्योपरिनाभि धारयन्नश्वप्रभृतीनभिमन्त्रयते स जातः स्थिरो भव शिवो भवेति॥ ६ ॥

अवहृत्य पिण्डं नाभेरुपरि धारयन् अश्वप्रभृतीनभिमन्त्रयते "स जातः" ( वा० सं० ११।४३ ) इति प्रतिमन्त्रम् ॥ ९ ॥

धारयत्येषामुपरि पिण्डमनुपस्पृशन्प्रैतु वाजी वृषाग्निमित्यश्वखरयोः ॥ १० ॥

एषां पशूनामुपरि पिण्डमनुपस्पृशन् धारयति "प्रैतु वाजी" ( वा० सं० ११। ४६ ) इत्यश्वस्य "वृषाग्निम्" ( वा० सं० ११।४६ ) इति खरस्य ॥ १० ॥

अग्न आयाहीत्याहृत्य खराच्छागस्यर्तꣳसत्यमित्या निधानात् ॥ ११ ॥

धारयत्यनुपस्पृशन्नेव ॥ ११ ॥

आयन्त्यावर्त्य पशूनजः पुरस्ताद्रासभो मध्ये ॥ १२ ॥

स्वस्थानस्थितानामेवावृत्तिः ॥ १२ ॥

अनड्वापुरुषमीक्षते पूर्ववदग्निं पुरीष्यमिति ॥ १३ ॥

अनन्यार्थत्वात्पूर्वत्रच्छब्देनाग्निषु प्रज्वलत्स्वित्युच्यते ॥ १३ ॥

उत्तरत आहवनीयस्योद्धतावोक्षिते सिकतोपकीर्णे परिवृते प्राग्द्वारे पिण्डं निदधात्योषधय इति ॥ १४ ॥

अनेन मन्त्रेण ॥ १४ ॥

विपाजसेति प्रमुच्यैनमजलोमान्यादाय प्रागुदीचः पशूनुत्सृजति ॥ १५ ॥

"विपाजसा" ( वा० सं० ११।४९ ) इत्यनेन मन्त्रेण प्रतिमुच्य पिण्डमजलोमानि गृहीत्वा प्रागुदीचीं दिशम्प्रति पशूनुत्सृजति ॥ १५ ॥

आपोहिष्ठेति पर्णकषायपक्वमुदकमासिञ्चति पिण्डे ॥ १६ ॥

पर्णकषायः पलाशकषायः । तत्पक्वमुदकम् ॥ १६ ॥

फेनं च तूष्णीं ततः कृत्वा ॥ १७ ॥

तत एवोदकात्पूर्वतरं फेनं कृत्वोदकमासिञ्चति चशब्दात् पश्चात्फेनम् ॥ १७ ॥

अजलोमभिः सꣳसृजति मित्रः सꣳ सृज्येति ॥ १८ ॥

अजलोमभिः सꣳसृजति पिण्डं "मित्रः सꣳसृज्य" ( वा० सं० ११।५३ ) इत्यनेन मन्त्रेण ॥ १८ ॥

शर्करायोरसाश्मचूर्णैश्च रुद्राः सꣳसृज्येति ॥ १९ ॥

शर्करा प्रसिद्धा । अयोरसा लोहसिङ्घाणः कीर इति यः प्रसिद्धः । अश्मचूर्णः पाषाणचूर्णः । चशब्दादेतैः पिण्डं संसृजति ॥ १९ ॥

सꣳसृष्टामिति संयौति ॥ २० ॥

पिण्डं मिश्रयत्याड्वालयतीत्यर्थः ॥ २० ॥

अषाढां करोति महिषी प्रथमवित्ता तदाख्या ॥ २१ ॥

अषाढाख्यामिष्टकां महिषी करोति । महिषीशब्दस्यान्यत्राप्रसिद्धत्वादाह—प्रथमवित्ता तदाख्या । तद्येव प्रथमवित्ता सा महिषीति ॥ २१ ॥

यजमानपादमात्रीं त्र्यालिखिताम् ॥ २२ ॥

महिषीपादमात्री मा भूदिति यजमानग्रहणम् ॥ २२ ॥

यजमान उखां करोति मृदमादाय मखस्य शिर इति ॥ २३ ॥

मृदादाने हि मन्त्रः । एवं हि श्रूयते — "अथ मृत्पिण्डमपादत्ते यावन्तं निधयेऽलं मन्यते मखस्य शिरोऽसि" ( श० ब्रा० ६।५।२।१ ) इति ॥ २३ ॥

प्रादेशमात्रीं तिर्यगूर्ध्वां च ।। २४ ।।

चशब्दात्प्रादेशमात्रीमेव ।। २४ ।।

पञ्चप्रादेशामिषुमात्रीं वा तिर्यक्पञ्चपशौ ।। २५ ।।

ऊर्ध्वं तु प्रादेशमात्र्येव पञ्चपशावपि ।। २५ ।।

वसवस्त्वेति प्रथयति ।। २६ ।।

आत्तं पिण्डम् ।। २६ ।।

अन्तानुन्नीय सर्वतः प्रथमं धातुमादधाति रुद्रास्त्वेति ।।२७।।

अनेन मन्त्रेण । धातुशब्दात्प्रक्षेप एव ।। २७ ।।

संलिप्य श्लक्ष्णां कृत्वोत्तरमादित्यास्त्वेति ।। २८ ।।

"ताᳬं संलिप्य सᳬश्लक्ष्णाथोत्तरमुद्धिमादधाति" ( श० ब्रा० ६।५।२।४,५ ) इति वचनात् ।। २८ ।।

विश्वेत्त्वेति समीकरोति ।। २९ ।।

"सा यदि वर्षीयसी प्रादेशात्स्यादेतेन यजुषा ह्रसीयसीं कुर्याद्यदि ह्रसीयस्येतेन वर्षीयसीम्" ( श० ब्रा० ६।५।२।९ ) इति वचनात् ।। २९ ।।

वितृतीय उत्तरे वर्तिᳬं सर्वतः करोत्यदित्यै रास्नेति ।।३०।।

अनेन मन्त्रेण ।। ३० ।।

ऊर्ध्वास्तूष्णीं प्रतिदिशं चतस्रोऽपरावर्तिप्राप्ताः ।। ३१ ।।

वर्तीः करोति । उखाशब्दस्याकृतिवचनत्वाद् वृत्तैवोखा भवति ।। ३१ ।।

इति षोडशाध्याये तृतीया कण्डिका ।।

४

स्तनानिवाऽग्रेषून्नयति ।। १ ।।

ऊर्ध्ववर्तीनामेकैकस्याः ।। १ ।।

द्विस्तनामष्टस्तनामेके ।। २ ।।

"ताᳬं हैके द्विस्तनां कुर्वन्ति । अथो अष्टस्तनाम्" ( श० ब्रा० ६।५।२।१९ ) इति श्रुतेः । द्विस्तनपक्षे एकस्मिन्नेव वर्त्यग्रे क्रियते । अष्टस्तनपक्षे द्वौ द्वाविति ॥ २ ॥

बिलं गृह्णात्यदितिष्ट इति ॥ ३ ॥

मुखे गृह्णावीत्यर्थः ॥ ३ ॥

कृत्वायेति निदधाति ॥ ४ ॥

उखाम् ॥ ४ ॥

तिस्र एके ॥ ५ ॥

उखाः कुर्वन्ति, "ता हैके तिस्रः कुर्वन्ति" ( श० ब्रा० ६।५।२।२२ ) इति श्रुतेः । तदा च मृत्पिण्डग्रहणाद्येकैका निधानान्ता क्रियते ॥ ५ ॥

इष्टकास्तु तिस्रो विश्वज्योतिषः पृथग्लक्षणा-स्त्र्यालिखिताः ॥ ६ ॥

तुशब्दश्चशब्दस्यार्थे । चशब्दाद्यजमान एव तिस्र इष्टका विश्वज्योतिः सञ्ज्ञकाः त्र्यालिखिताः पृथग्लक्षणाः करोति । लक्षणकरणं च प्रथमाद्द्वितीयात्तृतीयाप्रज्ञप्त्यर्थम् । एवमेवोपधानं यथा स्यादिति ॥ ६ ॥

मृदमुपशयां निदधाति ॥ ७ ॥

उखां क्रियमाणामुपशेत इत्युपशया ताम्, मृदमतिरिच्यमानां निदधाति कार्यार्थम् ॥ ७ ॥

सप्तभिरश्वशकृद्भिरुखां धूपयति दक्षिणाग्न्यादीप्तैरेकैकेन वसवस्त्वेति प्रतिमन्त्रम् ॥ ८ ॥

अभ्रया श्वभ्रं चतुरश्रं खनत्यदितिष्ट्वेति ॥ ९ ॥

अभ्रिश्च पूर्वोक्तैव, प्रकृतत्वात् । "अत्र सा वैणव्यभ्रिरुत्सीदति" ( श० ब्रा० ६।५।४।३ ) इति वचनात् ॥ ९ ॥

श्रपणमास्तीर्य यथाकृतमवदधाति ॥ १० ॥

श्वभ्रो येनेव क्रमेण कृता अषाढाद्याः ॥ १० ॥

उखायां तु विशेषः—

देवानां त्वेत्युखां न्युब्जाम् ॥ ११ ॥

अवदधाति ॥ ११ ॥

श्रपणेनावच्छाद्य दक्षिणाग्न्यग्निना दीपयति धिषणास्त्वेति॥

अनेन मन्त्रेण ॥ १२ ॥

निर्मन्थ्येन वा धूपनश्रपणे ॥ १३ ॥

कर्त्तव्ये ॥ १३ ॥

वरूत्रीष्ट्वेतीक्षमाणो जपति ॥ १४ ॥

उखामीक्षमाणः ॥ १४ ॥

आचरति मित्रस्येति ॥ १५ ॥

आचरणं च श्रपणप्रक्षेपः ॥ १५ ॥

यावदाचरेत् ॥ १६ ॥

तावदपि मन्त्रः ॥ १६ ॥

दिवैव प्रदहनोद्धरणे ॥ १७ ॥

कर्त्तव्ये, "तां दिवैवोपवपेद्दिवोद्वपेत्" (श० ब्रा० ६।५।४।१०) इति वचनात् ॥ १७ ॥

उद्वपति श्रपणम् ॥ १८ ॥

पदार्थतंत्रा ॥ १८ ॥

देवस्त्वेत्युखाम् ॥ १९ ॥

उद्वपति ॥ १९ ॥

उत्तानां करोत्यव्यथमानेति ॥ २० ॥

उखाम् ॥ २० ॥

उद्यच्छत्युत्त्थायेति ॥ २१ ॥

ऊर्ध्वं यच्छत्युद्यच्छति । "उत्थाय" (१)इत्यनेन मन्त्रेण ॥ २१ ॥

परिगृह्य पात्रे करोति मित्रैत्तां त इति ॥ २२ ॥

अनेन मन्त्रेण ॥ २२ ॥

अजापयसावसिञ्चति वसवस्त्वेति प्रतिमन्त्रम् ॥२३॥

उखाम् । त्रित्वपक्षे च उत्तानकरणाद्येकैका अजापयसावसेकान्ता कर्त्तव्या ॥२३॥

इष्टकाक्रियाऽतस्त्र्यालिखितानाम् ॥ २४ ॥

अत उर्ध्वमिष्टकास्त्र्यालिखिताः क्रियन्ते ॥ २४ ॥

अपरिमितालिखिता वोत्तरयोः ॥ २५ ॥

द्वितीयाचतुर्थ्योः । कुत एतत् ? तेहि प्रकृत्याम्नायते—"रसो हैते चिती अपरिमित उ वै रस" ( श० ब्रा० ८।७।२।१७ ) इति । अतश्च विकल्पोऽयम् ॥ २५ ॥

पूर्ववदग्निः पाके ॥ २६ ॥

इष्टकानां पाके पूर्ववदग्निर्भवति निर्मन्थ्यो दक्षिणाग्निर्वा ॥ २६ ॥

दीक्षामावास्यायाममावास्येनेष्ट्वा ॥ २७ ॥

फाल्गुन्यमा (२)वास्यायां दीक्षा भवति, सा चामावास्येनेष्ट्वा पौर्णमासोपक्रमात् ॥ २७ ॥

आग्नावैष्णववैश्वानरौ ॥ २८ ॥

दीक्षणीयायां कर्त्तव्यौ ॥ २८ ॥

घृते चरुरादित्येभ्यः ॥ २९ ॥

घृतस्य प्रणयनं कार्यम् , कार्यापत्त्या ॥ २९ ॥

---

१. 'स्योनं ते सदनम्' इति मन्त्रः सदने सादने च यथा विभज्य विनियुज्यते तथा 'उत्थाय बृहती' इति मन्त्रोऽभ्युद्यच्छने पात्रकरणे च विभज्य विनियुज्यते ।

२. सा च मुख्यामावास्यायां पिण्डपितृयज्ञकालाभावादपिण्डपितृयज्ञेनामावास्येन सद्य इष्ट्वा ।

अकृतायां तु दीक्षायामपराह्णो भवेद्यदि ।
पितृयज्ञो न तत्र स्यात्पूर्वाङ्गत्वादितीरितम् ॥
अनङ्गत्वे तु तत्र स्यात्तत्कालाप्रतिबन्धतः । इति ।

प्राकृतान्यौद्ग्रभणानि हुत्वा सप्ताग्निकान्याकूतिमिति प्रतिमन्त्रम् ॥ ३० ॥

प्राकृतान्याध्वरिकाणि हुत्वा सप्ताग्निकानि "आकूतिम्" ( वा० सं० ११।६६ ) इति प्रतिमन्त्रं जुहोति। अत्र च "विश्वो देवस्य" (वा० सं० ११।६७) इत्यत्र तद्द्विधा विभज्यते। स्वकालेपूर्णामित्येतदाग्निकेऽत्र ध्रौवं द्वेधा विभज्यते, द्विश्च स्थाल्याः स्रुवेणेत्येतदप्याग्निके भवति ॥ ३० ॥

दण्डोच्छ्रयणान्तं कृत्वाऽध्वर्युयजमानयोरन्यतर उखामाहवनीयेऽधिश्रयति मुञ्जकुलायशणकुलायावस्तीर्णामन्तरे शणा मा सु भित्था इति तिष्ठन्नुदङ् प्राङ् ॥ ३१ ॥

दण्डोच्छ्रयणान्तमाध्वरिकं कर्म कृत्वाऽध्वर्युयजमानयोरन्यतर उखामाहवनीयाऽऽधिश्रयति "मा सु भित्था" ( वा० सं० ११।६८ ) इत्यनेन मन्त्रेण। सा च मुञ्जकुलायशणकुलायावस्तीर्णा भवति। अन्तरे च शणाः। प्रागुदीचीं दिशमभिमुखः ॥३१॥

अधिकारमुपजीवन्नाह—

रुक्मप्रतिमोचनविष्णुक्रमवात्सप्रेषु च ॥ ३२ ॥

प्रागुदीचीं दिशमभिमुखो भवति ॥ ३२ ॥

अग्नावारूढे त्रयोदशास्यां प्रादेशमात्रीः समिध आदधाति॥

उखायामग्नावारूढे त्रयोदशसमिध आदधाति। प्रादेशमात्रीग्रहणं शिष्टानुस्मरणप्रज्ञप्त्यर्थम् ॥ ३३ ॥

अनारोहत्यङ्गारानोप्यैके ॥ ३४ ॥

अनारोहत्यग्नावुखायामङ्गारानोप्यैके समिदाधानं कुर्वन्ति ॥ ३४ ॥

ता इदानीमाह—

धृतोन्नां कार्मुकीं दृव्रन्न इति ॥ ३५ ॥

अनेन मन्त्रेणादधाति। क्रमुको धमन इत्युच्यते, तदीया कार्मुकी ॥ ३५ ॥

वैकङ्कतीं परस्या इति ॥ ३६ ॥

अनेन मन्त्रेणादधाति ॥ ३६ ॥

## औदुम्बरीं परमस्या इति ॥ ३७ ॥

आदधाति ॥ ३७ ॥

## अपरशुवृक्णां यदग्न इति ॥ ३८ ॥

आदधाति । या परशुना न छिन्ना सा अपरशुवृक्णा ॥ ३८ ॥

## अधःशयां यदत्तीति ॥ ३६ ॥

अनेन मन्त्रेण । अधःशया च भूमौ संलग्ना प्रसृता ॥ ३९ ॥

## पालाशीः प्रत्यृचमहरहरिति ॥ ४० ॥

आदधाति, "अथैता उत्तराः पालाश्यो भवन्ति" ( श० ब्रा० ६।६ ३।७ ) इति वचनात् । एवं चापरशुवृक्णा अधःशया औदुम्बर्यावेव भवतः, जात्यन्तराविधानात् ॥ ४० ॥

## उपोत्तमां क्षत्रियस्येच्छन् ॥ ४१ ॥

उत्तमायाः समीपे उपोत्तमा द्वादशी, तां क्षत्रियस्य यजमानस्येच्छयाऽऽदधाति ॥ ४१ ॥

## उत्तमां पुरोहितस्य ॥ ४२ ॥

इच्छयाऽऽदधाति ॥ ४२ ॥

## अन्यस्योभे ॥ ४३ ॥

अन्यस्य क्षत्रियपुरोहितव्यतिरिक्तस्य उभे अपि उपोत्तमोत्तमे इच्छयाऽऽधीयेते । एवं हि श्रूयते—"ता एता एकादशादधाति, अक्षत्रियस्य वाऽपुरोहितस्य वा" ( श० ब्रा० ६।६।३।१२ ) इति । "तथा द्वादश क्षत्रियस्य वा पुरोहितस्य वा" ( श० ब्रा० ६।६।३।१३ ) इति ।

एवं च सति अक्षत्रियस्यापुरोहितस्य च एकादश भवन्ति, त्रयोदश वा । क्षत्रियपुरोहितयोस्तु द्वादश त्रयोदश वा ॥ ४३ ॥

## स्वाहाकारः सर्वासूखायाम् ॥ ४४ ॥

उखायामाधीयमानासु समित्सु । अतोऽन्यत्रापि स्वाहाकारो भवति 'सर्वासु' इत्यभिधानात् ॥ ४४ ॥

## औदूग्रभणादि दण्डान्तमत्रैके ॥ ४५ ॥

एवं सति प्रागौदृग्रभणहोमादुखाधिश्रयणापि, "तान्यु हैक उखाया मेवैतान्यौदृग्रभणानि जुह्वति" ( श० ब्रा० ६।६।१।२२ ) इति वचनात् ॥ ४५ ॥

इति षोडशाध्याये चतुर्थी कण्डिका ॥

५

यजमानः कण्ठे रुक्मं प्रतिमुञ्चते परिमण्डलमेकविंशतिपिण्डं कृष्णाजिननिष्यूतं लोमसु शुक्लकृष्णेषु शणसूत्रे त्रिवृत्योतमुपरिनाभि बहिष्पिण्डं दृशानो रुक्म इति ॥१॥

रुक्मं हि प्रकृत्य सर्वमेवैतच्छ्रूयते ( श० ब्रा० ६।७।१।१ ) यजमानग्रहणाच्च स्वयमेव यजमानः प्रतिमुञ्चते । द्वादशाहे च सर्वे यजमानाः प्रतिमुञ्चेयुः । अत ऊर्ध्वं इण्ड्वाद्यन्वारम्भः । एवं हि सर्वैः कृतं भवति ॥ १ ॥

इण्ड्वशिक्यासन्दीषु मुञ्जरज्जवस्त्रिवृतो मृद्दिग्धाः ॥२॥

उखा याभ्यां गृह्यते तौ इण्ड्वौ । शिक्यं प्रसिद्धमासन्दी च । अनुरक्ता रज्जवो मृद्दिग्धा भवन्ति ॥ २ ॥

परिमण्डलाभ्यामिण्ड्वाभ्यामुखां परिगृह्णाति नक्तोषासेति॥

अनेन मन्त्रेण ॥ ३ ॥

हरति द्यावाद्यामेति ॥ ४ ॥

तामेवोखाम् । ४ ॥

आहवनीयस्य पुरस्तादुद्गात्रासन्दीवदासन्द्यां चतुरश्राङ्ग्यां शिक्यवत्यां निदधाति देवाअग्निमिति ॥ ५ ॥

उद्गात्रासन्दीवदिति प्रादेशपादी तु गम्यते । सा च चतुरश्राङ्गी सह पादैः तस्यां शिक्यवत्यामासन्द्यां निदधाति उखां "देवा अग्निम्" ( वा० सं० १२।२ ) इत्यनेन मन्त्रेण ॥ ५ ॥

शिक्यपाशं प्रतिमुञ्चते षड्ढ्यामं विश्वारूपाणीति ॥ ६ ॥

ग्रीवायाम् ॥ ६ ॥

सशिक्यं प्राञ्चं प्रगृह्णाति सुपर्णोसीति पिण्डवत् ॥ ७ ॥

सह शिक्येन प्राञ्चमग्निं प्रगृह्णाति "सुपर्णोसि" ( वा० सं० १२।४ ) इत्यनेन मन्त्रेण । 'पिण्डवत्' इत्यूदूर्ध्ववाहुः ॥ ७ ॥

धारणं च ॥ ८ ॥

पिण्डवदेव । अवहृत्योपरिनाभीति ॥ ८ ॥

एतया विकृत्याऽभिमन्त्र्यैकेऽन्यचितिं चिन्वन्ति द्रोणचिद्रथचक्रचित्कंकचित्प्रउगचिदुभयतः प्रउगः स मुह्यपुरीष इति ॥ ९ ॥

एते ह्यग्निविशेषाः । तदाकारांश्चिन्वन्त्येके । एके सुपर्णचितम् । चिलिङ्गत्वादस्या विकृतेरन्यन्तरेष्वप्राप्तिर्मा भूदित्युच्यते । एवं हि श्रूयते-"तं हैक एतया विकृत्याऽभिमन्त्र्यान्यां चितिं चिन्वन्ति" ( श०ब्रा०६।७।२।८ ) इति ॥ ९ ॥

समुह्यपुरीषे प्रतिदिशं पुरीषाहरणम् ॥ १० ॥

प्रतिदिशं पुरीषमाहृत्याहृत्य तेनैव चयनम् ॥ १० ॥

विष्णुक्रमान्क्रमते विष्णोरिति प्रतिमन्त्रम् ॥ ११ ॥

अग्न्युद्ग्रभणं च तस्मिंस्तस्मिन् ॥ १२ ॥

क्रमेण ॥ १२ ॥

अक्रमश्चतुर्थे ॥ १३ ॥

उद्ग्रभणं तु च भवत्येव ॥ १३ ॥

दिशो वीक्षते दिशोऽनुविक्रमस्वेति ॥ १४ ॥

प्रतिदिशं मन्त्रः ॥ १४ ॥

पिण्डवत्प्रागुदञ्चं प्रगृह्णात्यक्रन्ददग्निरिति ॥ १५ ॥

"पिण्डवत्" इत्यूदूर्ध्ववाहुः ॥ १५ ॥

अवहरत्यग्नेऽभ्यावर्त्तिन्निति ॥ १६ ॥

प्रत्यवरोहत्यग्निम् "अग्नेऽभ्यावर्त्तिन्" (वा० सं० १२।७)। "यावत्कृत्व ऊर्द्ध्वो रोहति तावत्कृत्वः प्रत्यवरोहति" ( श० ब्रा० ६।७।३।६ ) इति श्रुतेः तद्वत्प्रत्यवरोहणम् ॥ १६ ॥

उपरिनाभि धारयन्नात्वाहार्षमित्यभिमन्त्रयते ॥ १७ ॥

उपरिनाभि धारयन्नग्निम् "आ त्वाहार्षम्" ( वा० सं० १२।११ ) इत्यभिमन्त्रयते ॥ १७ ॥

पाशा उन्मुच्योदुत्तममिति ॥ १८ ॥

पिण्डवत्प्राग्दक्षिणा प्रगृह्यात्यग्रे बृहन्निति ॥ १९ ॥

मन्त्रेण ॥ १९ ॥

अवहरति हंसः शुचिषदिति ॥ २० ॥

अनेन मन्त्रेण ॥ २० ॥

आसन्द्यां करोति बृहदिति ॥ २१ ॥

उपतिष्ठते सीद त्वमिति ॥ २२ ॥

वात्सप्रेण च दिवस्परीत्येकादशभिः ॥ २३ ॥

उपतिष्ठते ॥ २३ ॥

अनुवाकेनैके ॥ २४ ॥

उपतिष्ठन्ते ॥ २४ ॥

अत्र दीक्षितोऽयमिति ॥ २५ ॥

अस्मिन्नवसरे 'दीक्षितोऽयम्' इत्याह । दण्डान्ते ह्युखाधिश्रयणाद्युक्तम् । अतः प्राक्तानुवृत्त्यर्थमिदमुच्यते ॥ २५ ॥

आवृत्तिरतः संवत्सरम् ॥ २६ ॥

अत ऊर्ध्वं यदुच्यते तत्संवत्सरं यावदावर्त्तते ॥ २६ ॥

इति षोडशाध्याये पञ्चमी कण्डिका ।



६

## उखाया भस्मोद्वपनमस्तमिते पात्रे ॥ १ ॥

तत्र प्राग्वाग्विसर्गात्, "भस्मोदुप्य वाचं विसृजते" (श० ब्रा० ६।७।४।१४) इति श्रुतेः ॥ १ ॥

## वाचं विसृज्य समिदाधानं रात्रीं रात्रीमायावमिति ॥२॥

तच्च यजमानस्य स्यात्, ल्यब्आदेशसामर्थ्यात्—'वाचं विसृज्य' इति। लिङ्गाच्च—"अथ ये दीक्षितः समिधावादधाति ते अग्निहोत्राहुती" इति।

अथ वा नैतदेवम्, समाख्यानुग्रहादध्वर्योः पदार्थः प्राप्नोति। न च समाख्या बाधितव्या।

किं च याजमानाः पदार्थाः परिभाषिताः ! "प्रधानं स्वामी फलयोगात्पुरुषयोगिमन्त्रसंस्कारयोस्त्यागे सामर्थ्याद्वचनादन्यत्" (का० श्रौ० १।७।१९,२०,२१) इति।

नन्वत्रापि वचनम् 'वाचं विसृज्य समिदाधानम्' इति। नैतदेवम्, अन्यार्थं ह्येतत्। कोऽन्योर्थः ? अनिर्ज्ञातकालस्य समिदाधानस्य कालं लक्षयितुं 'वाचं विसृज्य' इत्युच्यते। यत्र पुनर्ल्यब्आदेशस्यान्यार्थता न भवति, तत्र समानकर्तृकता भवति 'समाख्यामपि बाधित्वा' इति। अतः कालार्थोऽत्र ल्यब्आदेशः। यथाऽन्यत्र "निरुप्याज्यं प्रातर्दोहनमन्यस्मिन्" (का० श्रौ० ४।२।३७) इति।

यत्पुनर्लिङ्गमुक्तम् "अथ ये दीक्षितः समिधावादधाति" इति, तदध्वर्युकर्तृकत्वेऽपि न विरुध्यते। यजमान एव हि समिदाधानं कारयन्नादधाति इत्युच्यते ॥ २ ॥

## एवमुदिते भस्मोद्वपनादि ॥ ३ ॥

कर्त्तव्यम् ॥ ३ ॥

अयं तु विशेषः—

## अहरहरित्याधानम् ॥ ४ ॥

"अहरहः" (वा० सं० ११।७५) इति समिदाधानम् ॥ ४ ॥

## विष्णुक्रमवात्सप्रे चाहर्व्यत्यासमुदिते समिधमाधाय ॥ ५ ॥

विष्णुक्रमवात्सप्रे प्रत्यहं व्यत्यासेन कर्त्तव्ये ॥ ५ ॥

तयोर्विभागमाह —

## रुक्मप्रतिमोचनादि प्राग्वात्सप्राद्विष्णुक्रमाः ॥ ६ ॥

साग्निके क्रतौ सम्वत्सरं दीक्षा आम्नाताः—"सम्वत्सरभृतमेव चिन्वीत" ( श० ब्रा० १०।२।६।९ ) इति । पवित्रे च चतस्रो दीक्षा आम्नाता–"पवित्रश्चतुर्दीक्षः" ( का० श्रौ० १५।१।४ ) इति । तत्राग्नौ सति चिन्त्यते—किमग्निनिमित्ता दीक्षा भवन्तु, उत सौमिक्य इति । उभयं चैतच्चरितार्थम् पवित्राद् वहिराग्निक्यश्चरितार्थाः । अनग्निके च पवित्रे सौमिक्य इति । तेन साग्निमति पवित्रे कथं भवन्त्विति ।। ६ ।।

नियमकारणाभावादनियमे प्राप्त आह—

## सोमाविरोधेन वा तत्प्राधान्यात् ।। ७ ।।

सोमाविरोधेन वा दी (१) क्षा भवन्ति । कुत एतत् ? तत्प्राधान्यात् । सोमस्य प्रधानभूतत्वात्तदीया एव दीक्षा भवन्तीति ।

ननु चेतरा अपि सोमस्यैव दीक्षाः, अग्नेर्निमित्तभावमात्रमिति । सत्यमेवम् । एका सोमनिमित्ता अपरा अग्निनिमित्ताः । तत्र राजाश्रितद्वारपालाश्रितन्यायेन राजाश्रित-बलीयस्त्वात्सौमिक्य एव दीक्षा भवन्ति । यत्पुनः राजसूयेऽग्निप्रतिषेधः शाखान्तरे, तदेतद्रूपोदाहरणं समानन्यायार्थम् ।

---

१. द्वादशाहे तथाऽहीने जामदग्न्ये विशेषतः ।
सोमार्था श्रूयते दीक्षा संख्याग्नेर्बाध्यतेऽङ्गतः ।।
पर्वसुत्यानुरोधेनामायां दीक्षा च बोध्यते ।

सोमे "शुक्लपक्षे दीक्षेत" इति श्रूयते । अग्नौ तु "अमावास्यायां दीक्षेत" इति । तत्रैत-त्संदिह्यते–किं शुक्लपक्षे दीक्षेत उत अमावास्यायाम् इति । किं तावत्प्राप्तं सूत्रेणैव पक्षः, "सोमाविरोधेन वा तत्प्राधान्यात्" इति । न वा आनर्थक्यात् । आनर्थक्यप्रतिहतानां विपरीतं बलाबलमिति हि न्यासः । किं च—

प्रथमे वर्णकेऽत्रैव चारितार्थ्यं द्वयोरपि ।
तेन सोमाविरोधेनेत्येवं भाष्ये समीरितम् ।
अतोऽग्न्यङ्गेन सोमस्याप्यङ्गं न्यायेन बोध्यते ।

किञ्च—

उख्यं सम्वत्सरं भृत्वाऽमायामाद्योपसद्यदा ।
एकाहत्वाच्च तास्तिस्रस्तृतीयायां सवस्तदा ।।
पर्वसुत्या तु सोमस्य बाध्यतेऽग्न्यनुरोधता ।
आनर्थक्यं श्रुतेर्माभूत्तेन युक्तं पुरोहितम् ।

षण्मासस्य पक्षे स्वकाले एव इष्टकापशवः । उखासम्भरणं च तथेष्टकाकरणम् । आश्वयुजशुक्लद्वादश्यां कार्तिकस्य वा दीक्षेति संप्रदायः ।

अथवा सद्योभूतविषयता सूत्रस्यास्तु । अग्नौ फाल्गुनामावास्यायां दीक्षा । किं सद्योभूतेऽपि तत्रैव भवतु उत यथाप्राप्तमिति ? नियमकारणाभावादनियमे प्राप्ते आह– "सोमाविरोधेन वा तत्प्राधान्यात्" इति ।

अथवा "षण्मास्यमन्तिमं चिन्वीतेत्यु हैक आहुः" इत्यत्र किं वसन्ते आरभ्य शरदि सुत्या उत शरद्यारभ्य वसन्त इति ? तत्रैतदुच्यते–"सोमाविरोधेन वा तत्प्राधान्यात्" इति । एवं सति शरदि तथाऽऽरम्भः कर्त्तव्यो यथा वसन्ते यजनीये सुत्या भवन्तीति ॥ ७ ॥

## न्यज्य समिधं व्रते प्रत्ते प्रत्तेऽन्नपत इत्याधानम् ॥ ८ ॥

स चायं समित्संस्कारो व्रतसंस्कारश्चेति सम्प्रदायः । ततश्च समिधोऽवयवाः सर्वव्रतेषु त्यज्यन्ते । नेत्यपरे । न ह्यत्र व्रतसंस्कारत्वे प्रमाणमस्ति । समिधस्त्वाधीयमानत्वात्संस्कार एवेति गम्यते । एवं च कृत्वैकस्मिन्नेव व्रते न्यञ्जनं व्रतबहुत्वेऽपि, न सर्वेष्विति ॥ ८ ॥

## संवत्सरभृतिनोऽसंवत्सरभृतेऽपि ॥ ९ ॥

अग्नौ चयनं भवति, "कामंन्वाऽएनꣳ सचिन्वीत येन पुरा सम्वत्सरं भृतः स्यात्" ( श० ब्रा० ९।५।१।६५ ) इति वचनात् ॥ ९ ॥

## संवत्सरꣳ सोष्यतः ॥ १० ॥

सम्वत्सरमभिषवं करिष्यतः असंवत्सरभृतेऽपि चयनं भवति, "कामम्वेवैनꣳ सचिन्वीत यः सम्वत्सरमभिषविष्यन्त्स्यात्" ( श० ब्रा० ९।५।१।६६ ) इति वचनात् ॥

## सम्वत्सराहिताग्नेः ॥ ११ ॥

असम्वत्सरभृतेऽपि चयनमिष्यते । एतच्च सौमाधानिकस्य भवति नान्यस्य । एवं ह्यत्र श्रूयते–"यः सम्वत्सरमग्निहोत्रं जुहुयात्" ( श० ब्रा० ९।५।१।६७ ) इति । तच्च सौमाधानिकस्यैव घटते नान्यस्य । कथमेकस्मिन्वसन्ते कृत आधाने द्वितीयेऽग्नेस्सम्भवो भवति ? नचाऽनिष्टप्रथमसोमस्याग्नेः सम्भवः । तस्मात्सम्वत्सराहिताग्निः सौमाधानिकः, तस्यापि च नोर्ध्वं सम्वत्सरात्सद्योभृतः स्यात् । एवं हि श्रूयते "यः सम्वत्सरमग्निहोत्रं जुहुयात्" ( श० ब्रा० ९।५।१।६७ ) इति ॥ ११ ॥

## जातस्य च ॥ १२ ॥

सम्वत्सरे जातस्य च असम्वत्सरभृतेपि चयनं भवति । एवं हि वचनम् "कामम्वेवैनꣳ सचिन्वीत यः संवत्सरं जातः स्यात्" ( श० ब्रा० ९।५।१।६८ ) इति ॥ १२ ॥

## षण्मास्यमन्त्यम् ॥ १३ ॥

अन्त्यं जघन्यमिदं पक्षान्तरं षण्मासानुख्यभरणं कृत्वाऽग्निश्चीयत इति। "षण्मास्यमन्तमं चिन्वीतेत्याहुः" ( श० ब्रा० ९।५।१।६३ ) इति ॥ १३ ॥

## अचयनं वा परस्मै ॥ १४ ॥

चयनं वेति विकल्पः। एवं हि श्रूयते "त्रयो ह वै समुद्राः अग्निर्यजुषां महाव्रतꣳ साम्नां महदुक्थमृचाम्" ( श० ब्रा० ९।५।२।१२ ) इति प्रकृत्याह—"एतान्ह स समुद्रान्च्छोषयते य एतानि परस्मै करोति" ( श० ब्रा० ९।५।२।१२ ) इति। निन्दार्थवादः प्रतिषेधार्थः। तथा चाह—"तस्मादप्येवं वित्कामं परस्माऽअग्निं चिनुयात्" ( श० ब्रा० ९।५।२।३ ) इति प्रतिप्रसवः। प्रतिषेधप्रतिप्रसवाभ्यां विकल्पः।

अन्ये त्वाहुः—अर्थसिद्धत्वाद्विकल्पो न वाच्यः। तेन चयनप्रतिषेधप्रतिप्रसवौ अन्यार्थौ। कोऽन्योऽर्थ इति चेत्? दक्षिणासंवादप्रतिषेधः। "त्रयो ह वै समुद्राः" ( श० ब्रा० ९।५।२।१२ ) इत्यत आरभ्य एतदेकं वाक्यं यावद् "दक्षिणासु त्वेव न संवदितव्यम्" इति ॥ १४ ॥

## प्रागनः कृत्वोख्यस्योत्तरतः समिदाधानꣳ समिधाग्निमिति॥

उख्यस्योत्तरतः प्राङ्मुखमनः कृत्वोख्य एव समिदाधानꣳ "समिधाग्निम्" ( वा० सं० ३।१ ) इति ॥ १५ ॥

## सासन्दीकमुद्यम्योदु त्वेति दक्षिणतोऽनसि करोति ॥१६॥

सासन्दीकमुख्यम् "उदु त्वा" ( वा० सं० १२।३१ ) इत्युत्क्षिप्यानसो दक्षिणतोऽभ्यवसितोऽनसि करोति ॥ १६ ॥

## स्थाल्यां गार्हपत्यं पश्चात् ॥ १७ ॥

अनसि करोति दक्षिणाग्निं च वितृतीये करोति ( वा० सं० १२।३२ ) ॥ १७ ॥

## अनड्वाहौ युक्त्वा प्रेदग्न इति प्राङ्यात्वा यथार्थम्॥१८॥

गच्छेत् ॥ १८ ॥

## आरोहेत्पार्श्वतो वा गच्छेत् ॥ १९ ॥

यजमानः संस्कारात् ॥ १९ ॥

## अन्ते खजत्यक्रन्ददग्निरिति जपति ॥ २० ॥

खर्जनं च शब्दकरणम् ॥ २० ॥

**वासेऽवहरत्युद्धतावोक्षित उत्तरतः समिदाधानं प्रप्रेति ॥**

यत्र वासस्तत्रैवावहरणं न प्राग्वसतेः। एवं ह्याह—"स यदि पुरा वसत्यै विमुञ्चेतानस्यैवाग्निः स्यात्" (श० ब्रा० ६।८।१।१२) इति। वसत्यां तु उत्तरतोऽग्नीनवतार्य समिदाधानं "प्रप्र" (वा० सं० १२।३४) इति। उद्धतावोक्षितग्रहणञ्च परिसमूहनादीनामुपसंग्रहार्थमपि। स्मार्तं ह्येतदनूद्यते "उद्धते वा अवोक्षितेऽग्निमादधाति" (श०ब्रा०६।४।४।१८) इति। एवञ्च सति तदपचारे स्मार्त्तं प्रायश्चित्तम् ॥२१॥

**वनीवाहनमेतद्दीक्षासु यदेच्छेत् ॥ २२ ॥**

वनीवाहनसंज्ञाऽस्य कर्मणः। सा च संव्यवहारार्था—ऊर्ध्वं वनीवाहनादिति। तच्च दीक्षासु कर्त्तव्यं यदेच्छोपजायते। महावीरकरणयूपच्छेदनवनीवाहनानि दीक्षासु क्रियन्ते। क्रमस्तु नैषाम्, पाठाभावात् ॥ २२ ॥

**अप्सूख्यभस्मावपनं क्रयणीयादौ ॥ २३ ॥**

उख्यभस्मावपनमप्सु कर्त्तव्यम्। आदौ क्रयणीयस्याह्नः ॥ २३ ॥

**अन्यत्र चेच्छन् ॥ २४ ॥**

करोति ॥ २४ ॥

**ऊर्ध्वं वनीवाहनात्क्रमयोगात् ॥ २५ ॥**

अन्यत्रेच्छया कुर्वन्वनीवाहनादूर्ध्वं करोति, मन्त्राणां पाठक्रमयोगात् ॥ २५ ॥

**पलाशपुटेनापो देवीरित्येकया ॥ २६ ॥**

पलाशपुटेन भस्म गृहीत्वा अप्स्वावपति "आपो देवीः" (वा० सं० १२।३५) इत्येकयर्चा ॥ २६ ॥

**ततो द्वाभ्याम् ॥ २७ ॥**

पुनश्चावपति द्वाभ्यामृग्भ्याम् ॥ २७ ॥

**आद्याभ्यां वा पूर्वम् ॥ २८ ॥**

पूर्वमावपनं द्वाभ्यामृग्भ्याम्, तत एकयर्चा। वाशब्दो विकल्पार्थः, तुल्यश्रुतित्वात् ॥ २८ ॥

**अनामिकया प्रास्तादादत्ते प्रसद्येति ॥ २९ ॥**

प्रास्ताद्भस्मनः किंयदप्यनामिकयाऽऽदत्ते "प्रसद्य" (वा० सं० १२।४१) इत्येभिर्मन्त्रैः। "चतुर्भिरपादत्ते" इति वचनात् ॥ २९ ॥

## प्रास्योखायामुपतिष्ठते बोधा म इति ॥ ३० ॥

यत्तदात्तं भस्म तत्प्रास्योखायामुपतिष्ठते "बोधा मे" ( वा०सं०१२।४२ ) ॥३०॥

इति षोडशाध्याये षष्ठी कण्डिका ॥

७

## आज्यं विश्वकर्मण इति जुहोति ॥ १ ॥

प्रायश्चित्तिरित्यस्य होमस्य संज्ञा । आज्यग्रहणं न कर्त्तव्यम्, उक्तत्वात्—'तस्य होमो नादेशः' इति । कर्त्तव्यं वा गुणार्थम्—'समिधोपहत्य' इति । उपपूर्वश्च हन्तिर्ग्रहणार्थे । दृष्टोऽन्यत्रापि–"अथ स्रुवेणोपहत्याज्यम् (श०ब्रा०३।४।१।२५) इति ॥१॥

## उत्थायादधाति समिधं पुनस्त्वेति ॥ २ ॥

अनेन मन्त्रेण ( वा० सं० १२।४४ ) । उत्थानग्रहणं च प्रतिपत्तित्वात् गुणार्थं चेति ॥ २ ॥

नैमित्तिकान्यत्रैव प्रकरणे पठ्यन्ते तदर्थमाह—

## गार्हपत्येऽनुगते निर्मथ्य ॥ ३ ॥

आदधाति । मन्थनं प्राप्तत्वादवाच्यम् ? उच्यते प्रायश्चित्तार्थम् ॥ ३ ॥

## सुत्यास्वाहवनीये साङ्काशिनेन हृत्वा ॥ ४ ॥

सुत्यासु वर्त्तमानास्वाहवनीयेऽनुगते साङ्काशिनेन हृत्वा तमादधाति । साङ्काशिनशब्दः प्रगुणवाची । प्रगुणमेव हृत्वेत्यर्थः । एतच्चोच्यते पूर्ववत् प्रणयनं मा भूत् इति ॥ ४ ॥

## आग्नीध्रीयमुत्तरेण सदः ॥ ५ ॥

आग्नीध्रीयमनुगतमुत्तरेण सदो हृत्वा निदधाति । 'उत्तरेण सदो हृत्वा' इतीध्मन्युदासार्थम् ॥ ५ ॥

## प्रवृञ्ज्यादावृतोख्ये ॥ ६ ॥

उख्ये चानुगते पूर्ववत्प्रवृञ्ज्यात् । अयं तु विशेषः—आवृता । आवृद्ग्रहणं च मन्त्रनिवृत्त्यर्थम्, "एतयेवावृता अनुपहरन्यजुः" (श० ब्रा० ६।६।४।९) इति श्रुतेः ॥६॥

**अध्वरप्रायश्चित्तिं च सर्वेषु यथाकालं पूर्वां पूर्वाम् ॥ ७ ॥**

अध्वरप्रायश्चित्तिं च करोति। सर्वेषु निमित्तेषु तां च पूर्वां पूर्वाम्। चशब्दादाग्निकीं च। सर्वग्रहणं भस्मापोऽभ्यवहरणार्थम्। तत्रापि हि विधीयेते—"उभे प्रायश्चित्ती करोति ये एवाग्नावनुगते" (श० ब्रा० ६।८।२।११) इति। 'यथाकालम्' इति चाध्वरप्रायश्चित्त्यर्थमुच्यते। आग्निकी तु विश्वकर्मण इत्येव ॥ ७ ॥

**उखाभेदने नवस्थाल्यां महामुख्यामुखाकपालमवधायावपति ॥ ८ ॥**

"यद्येषोखा भिद्येत" ( श० ब्रा० ६।६।४।८ ) इति प्रकृत्य सर्वमिदमाम्नातम्। एतच्चैकोखापक्षे भवति। त्रित्वपक्षे तु द्वयोरेवैकस्यामावपनम्। "ता हैके तिस्रः कुर्वन्ति" (श० ब्रा० ६।५।२।२२) इति हि प्रकृत्य "यदीतरा भेत्स्यतेऽथेतरस्यां भरिष्यामो यदीतराऽथेतरस्याम्" इति ॥ ८ ॥

**उखोपशये पिष्ट्वा मृदा सहोखां करोत्यावृता ॥ ९ ॥**

उखाखण्डमेकमुखायां प्रक्षिप्तम्। द्वितीयमुपशयया सह पिष्ट्वा मृदा सहोखां करोत्यावृता मन्त्रवर्जम्। आवृच्छब्देन क्रियामात्रमुच्यते। तथा चोक्तम् "एतयैवावृता अनुपहरन्यजुः ( श० ब्रा० ६।६।४।९ ) इति ॥ ९ ॥

**पक्वायामावपति कपालं च ॥ १० ॥**

पक्वायामुखायामावपत्यग्निं कपालं च ॥ १० ॥

**उखोपशये पिष्ट्वा सꣳसृज्य निदधाति ॥ ११ ॥**

उखाकपालं च उपशयां च पिष्ट्वा सꣳसृज्य स्थापयति ॥ ११ ॥

इदानीं चयनप्रकारमाह—

**अभ्यात्मं चयनमुपविश्य ॥ १२ ॥**

आत्मानमाभिमुख्येन चयनं कर्त्तव्यं न परागिति। तथा च नैर्ऋतीषु वचनात् पराक् चयनमुक्तम्। "पराञ्चमेव निर्ऋतिं पाप्मानमपहन्ते" ॥ १२ ॥

अपरो विशेषः—

**सव्यबाहुमन्तरं कृत्वोत्तरलक्षणाभिरिष्टकाभिः ॥ १३ ॥**

चेतव्यः ॥ १३ ॥

## नित्ये सादनसूददोहसा उपधानादुत्तरे तया देवतया ता अस्येति ॥ १४ ॥

सर्वास्विष्टकास्वेते नित्ये भवतः। "तया देवतया" ( वा० सं० १२।५३ ) इति सादनम्। "ता अस्य" ( वा० सं० १२।५५ ) इति सूददोहसाऽधिवदनम् ॥ १४ ॥

कुत एतत् 'सर्वास्विष्टकास्वेते भवतः' इति ?

## अविशेषोपदेशात् ॥ १५ ॥

अविशेषेण ह्यनारभ्य कञ्चिदिष्टकाविशेषमेते श्रूयेते—"तया देवतया" इति सादनम्, "ता अस्य" इति सूददोहसाऽधिवदनम् ॥ १५ ॥

किं च—

## अनाम्नातप्रतिषेधाच्च ॥ १६ ॥

यत्रापि नाम्नायेते सादनसूददोहसौ तत्रापि प्रतिषेधति। "यथा नैर्ऋतीषु न सादयति प्रतिष्ठा वै सादनं नेत्पाप्मानं प्रतिष्ठापयानीति, न सूददोहसाधिवदति प्राणो वै सूददोहसा नेत्पाप्मानं प्राणेन सन्तनवानि सन्दधानि" इति। तस्मात्सर्वत्रैते भवतः ॥ १६ ॥

## एकचोदनास्वेकदेशासु तन्त्रेण ॥ १७ ॥

एकचोदना अपस्या वयस्या इत्येवमादि। एकचोदना अपि यद्येकदेशा भवन्ति। यथा तासामेव देशभेदः—अपस्याः पञ्चपञ्चानूकान्तेष्विति। अतश्च प्रत्यनूकं नित्ये। देशभेदे त्वसति तन्त्रेणेति ॥ १७ ॥

## आत्मनि यजुष्मतीः ॥ १८ ॥

इष्टका उपदधाति न पक्षपुच्छेषु, "स वा आत्मन्नेव यजुष्मयीरुपदधाति न पक्षपुच्छेषु" ( श० ब्रा० ८।७।२।९ ) इति ॥ १८ ॥

## लोकंपृणासु दशसु दशसु मन्त्रो लोकं पृणेति ॥ १९ ॥

"तस्माद्दशदशेष्टका उपधाय लोकंपृणयाऽभिमन्त्रयते" ( श० ब्रा० ९।१।२।१९ ) इति श्रुतेः ॥ १९ ॥

## असादनं च ॥ २० ॥

लोकंपृणानाम्। सूददोहसाऽधिवदनं तु भवति, अप्रतिषिद्धत्वात् ॥ २० ॥

प्रतिचिति द्वे द्वे उपधाय ॥ २१ ॥

लोकंपृणामन्त्रवचनम् । पुनर्दशसु दशसु ॥ २१ ॥

अयुग्मगणमध्यमाऽनूके ॥ २२ ॥

अयुग्मो य इष्टकागणः, यथा वालखिल्याः सप्त, तासां मध्यमाऽनूक उपधेया ॥२२॥

एका च ॥ २३ ॥

या चैकेष्टका साप्यनूक एव । यथा विश्वज्योतिर्द्वियजुश्चेत्येवमादि ॥ २३ ॥

अभितो युग्माः ॥ २४ ॥

अनूकमभितोऽर्धाधिकया युग्मा उपधीयन्ते । यथा प्राणभृतो दश, छन्दस्या द्वादश ॥ २४ ॥

उदञ्चो वर्गाः पूर्वापरे ॥ २५ ॥

यत्र पूर्वापर इति देशव्यपदेशः तत्रोदग्लक्षणा इष्टकावर्गा उपधीयन्ते ॥ २५ ॥

प्राञ्चो दक्षिणोत्तरे ॥ २६ ॥

यत्र तु दक्षिणोत्तरव्यपदेशः तत्र प्राग्लक्षणा इति ॥ २६ ॥

भिन्नकृष्णयोरचयनम् ॥ २७ ॥

"न भिन्नां न कृष्णामुपदध्यात्" ( श० ब्रा० ८।७।२।१६ ) इति ॥ २७ ॥

दीक्षाणामुत्तमेऽहनि वेद्यग्निमानम् ॥ २८ ॥

कर्तव्यम् ॥ २८ ॥

उख्यस्थानेऽर्धव्यामेन गार्हपत्यस्य परिलिखति ॥ २९ ॥

मण्डलमिति शेषः ॥ २९ ॥

मण्डलाद्वा प्रक्रमणमन्तः पात्यस्य ॥ ३० ॥

"पूर्वार्धाद्व्यामस्य त्रीन्प्राचः प्रक्रमान्प्रक्रामति" ( श० ब्रा० १०।२।३।१ ) इति वचनात् । यद्येव वाशब्दोऽवधारणार्थः । पूर्वार्धादेव व्यामस्य प्रक्रमणं मण्डलादिति न स्तम्भादिति । स्तम्भाद्धि प्रक्रमणमनग्नौ चरितार्थम् ॥ ३० ॥

पश्चाद्यूपावट्यात्पादमात्रे चित्यस्य ॥ ३१ ॥

स्थानं भवतीति शेषः ॥ ३१ ॥

**यजमानेनोदूर्ध्वबाहुप्रपदोच्छ्रितेन समस्थितेन वा ॥ ३२ ॥**

प्रपदोच्छ्रितः पादाग्रे व्यवस्थितः । समस्थितः प्रसिद्ध एव । "तं वा उद्बाहुना पुरुषेण मिमीत" ( श० ब्रा० १० २.२।६ ) इति 'ऊर्ध्वबाहुः' इति सूत्रितम् । 'मिमीते' इति च क्रियायाश्चोदितत्वात्प्रक्रमणवदध्वर्युर्माऽभूदिति यजमानग्रहणम् ॥ ३२ ॥

इति षोडशाध्याये सप्तमी कण्डिका ॥

८

**द्विपुरुषाᳫँ रज्जुं मित्वा ॥ १ ॥**

**उभयतः पाशां मध्ये लक्षणमभितोऽर्धपुरुषयोश्च ॥ २ ॥**

**मध्यमात् पुरुषपञ्चमे ॥ ३ ॥**

**अर्धे च ॥ ४ ॥**

**अनुपृष्ठ्यामायम्य ॥ ५ ॥**

**पाशयोः शङ्कू मध्येऽर्धपुरुषयोश्च ॥ ६ ॥**

**पाशा उन्मुच्यार्धपुरुषीययोः प्रतिमुच्य दक्षिणायम्य मध्यमे(१) नितोदं करोति ॥ ७ ॥**

**उन्मुच्य पाशावेकं मध्यमे प्रतिमुच्य दक्षिणाऽर्धनितोद-मायम्य मध्यमे शङ्कुः ॥ ८ ॥**

**तस्मिन् पाशं प्रतिमुच्य पूर्वार्धे च दक्षिणायम्य मध्यमे शङ्कुः ॥ ९ ॥**

**पश्चादर्धपुरुषे च ॥ १० ॥**

---

१. नितोदशब्दो गर्तवाची ।

उन्मुच्य पूर्वार्धात्पश्चार्धे प्रतिमुच्य दक्षिणायम्य मध्यमे शङ्कुः ॥ ११ ॥

अभितोऽर्धपुरुषयोश्च ॥ १२ ॥

एवमुत्तरोऽन्तः ॥ १३ ॥

दक्षिणे पार्श्वे पूर्ववदायम्य ॥ १४ ॥

पञ्चमभागीये शङ्कुः ॥ १५ ॥

तस्मिन्पाशं प्रतिमुच्य पूर्वे चार्धपुरुषीये ॥१६॥

पञ्चमभागीयार्धपुरुषीययोः संनिपात्य तस्मिञ्छङ्कुः ॥१७॥

एवं पश्चात् ॥ १८ ॥

एवमुत्तरः पक्षः ॥ १९ ॥

तथा पुच्छं वितस्त्या ॥ २० ॥

(१)इच्छन्पक्षपुच्छाऽप्ययेषु चतुरङ्गुलं चतुरङ्गुलं सङ्कर्षति विकर्षत्यन्ते ॥ २१ ॥

पञ्चारत्निः(२) पुरुषो दशपदो द्वादशाङ्गुलं पदं प्रक्रमस्त्रिपदः समविभक्तस्य ॥ २२ ॥

---

१. यत्र पक्ष आत्मानमप्येति स पक्षाप्ययः। एवं पुच्छाप्ययः। अप्ययेषु पक्षयोः पुच्छस्य च आत्मसन्धिसमीपे चतुरङ्गुलं—चत्वारि चत्वार्यङ्गुलान्युभयोः पार्श्वयोः सङ्कर्षति—सङ्कोचयति। तथा अन्ते पक्षपुच्छप्रान्ते उभयोः पार्श्वयोः चतुरङ्गुलं विकर्षति—विस्तारयति।

२. पञ्चारत्नयो यस्य सः। पञ्चभिररत्निभिः पुरुषः, दशभिः पदैः पुरुषो द्वादशभिरङ्गुलैः पदम् इत्येवमर्थो न भवति, इतः प्रागरत्न्यादीनां लक्षणस्यानुक्तत्वेनासिद्धत्वात्। पुरुषस्य पञ्चारत्नि—दशपद इति लक्षणद्वयकथनवैयर्थ्यप्रसङ्गाच्च। अतश्चैवम्—पुरुषस्य समविभक्तस्य यः पञ्चमो भागः सोऽरत्निः, तस्य दशमो भागः पदम्, पदस्य द्वादशभागोऽङ्गुलम्, त्रिभिः पदैरेकः प्रक्रमः इति तु भवति, पदस्य सिद्धत्वात्।

परितत्य(१) रज्ज्वा सहितं बहीरज्ज्वा ॥ २३ ॥

एकषष्टे शते परिश्रितो मिनोति ॥ २४ ॥

चतुर्णवतीनि(२) वा त्रीणि ॥ २५ ॥

ऊर्ध्वाः शर्कराः खाते ॥ २६ ॥

उत्तरेषु(३) पुरुषोच्चयेनैकशतविधात् ॥ २७ ॥

यथाऽग्नि (४)वेदीष्टकाप्रमाणम् ॥ २८ ॥

(५)अन्तःपात्यगार्हपत्ययोरिच्छन् ॥ २९ ॥

(६)उत्तरपक्षस्यापरस्यां स्रक्त्यां परिश्रितो मिनोति जङ्घामात्रीं नाभिमात्रीं मुखमात्रीमिति मुखमात्रीमिति ॥३०॥

निगदव्याख्यातम् ॥ ३० ॥

इति षोडशाध्याये अष्टमी कण्डिका ॥



---

१. वेष्टयित्वेत्यर्थः ।

२. चतुर्णवत्यधिकानि त्रीणि शतानि ।

३. उत्तरेषु अष्टविधादिषु चयनेषु आ एकशतविधात् एकशतविधचयनं यावत् एकाधिकशतपुरुषात्मकपञ्चनवतितमचयनपर्यन्तं पुरुषोच्चयेन एकैकपुरुषवृद्धया अग्निमानं भवति ।

४. वेदिश्च इष्टकाश्च वेदीष्टकाः तासां प्रमाणं वेदीष्टकाप्रमाणं तद्यथाऽग्नि भवति । अग्निमनतिक्रम्य यथाऽग्नि । यथाऽग्निक्षेत्रस्य प्रमाणं वर्धते तथा वेदिप्रमाणं वर्धते इष्टकाप्रमाणं च वर्धते । न हि वेदिवृद्धि विना तन्मध्ये वर्धितस्याग्नेर्मानं सम्भवति । नापि इष्टका अवर्धिता वर्धितमग्निक्षेत्रं पूरयितुं शक्नुवन्ति । अतो युक्तमुभयोर्वृद्धिः ।

५. अन्तःपात्यस्य गार्हपत्यस्य गार्हपत्यचितेश्च इच्छन् इच्छया वृद्धिं कुर्यात् इच्छया न कुर्यात् ।

६. अग्नेरुत्तरपक्षस्यापरस्रक्त्यां पश्चिमकोणे एवम्प्रमाणास्तिस्रः परिश्रितो मिनोति ।

# सप्तदशोऽध्यायः

## १

## श्वोऽभ्यवहरणादि प्रायश्चित्त्यन्तं कृत्वा विष्णुक्रमवात्सप्रसमासः ॥ १ ॥

दीक्षाणामुत्तमेऽहनि वेद्यग्निमानमुक्तम्। अतः श्वःशब्देन क्रयणीयमहरभिधीयते। तत्र भस्माभ्यवहरणादि प्रायश्चित्त्यन्तं कृत्वा विष्णुक्रमवात्सप्रसमासः कर्त्तव्यः। अप्सूख्यभस्मावपनं क्रयणीयादावुक्तमपि सदवध्यर्थमुच्यते। विष्णुक्रमणं हि कृतावधिकम्—"उदिते समिधमाधाय रुक्मप्रतिमोचनादि प्राग्वात्सप्राद्विष्णुक्रमाः" (का० श्रौ० १६।६।५,६) इति। ततः प्राग्भस्माभ्यवहरणं यथा स्यादिति। तथा च श्रुतिः—"तदहः प्रातरुदित आदित्ये भस्मैव प्रथममुद्वपति भस्मोदुप्य वाचं विसृजते वाचं विसृज्य समिधमादधाति समिधमाधाय भस्मा(१)पोऽभ्यवहरति यथैव तस्याभ्यवहरणं तथाऽपादाय भस्मनः प्रत्येत्योखायामोप्योपतिष्ठतेऽथ प्रायश्चित्तीकरोति" (श० ब्रा० ६।७।४।१४) इति। ततो विष्णुक्रमवात्सप्रसमासः ॥ १ ॥

## वात्सप्रं कृत्वोपस्थेयं चेत् ॥ २ ॥

यदि पुनः परिपाट्या वात्सप्रोपस्थानं तस्मिन्नहन्यापतति तत उपस्थानं कृत्वा विष्णुक्रमवात्सप्रसमासः कार्यः। एवमपि हि श्रूयते—"यदि वात्सप्रीयं वात्सप्रेणोपस्थाय विष्णुक्रमान्क्रान्त्वा वात्सप्रमन्तःकुर्यात्" (श० ब्रा० ६।७।४।१५) इति ॥२॥

## पलाशशाखया गार्हपत्यं व्युदूहत्यपेत वीतेति पच्छः प्रतिदिशं पुरस्तात्प्रथमम् ॥ ३ ॥

पलाशशाखया गार्हपत्यस्थानं व्युदूहति "अपेत वीत" (२)इत्यस्य मन्त्रस्य पादेन पादेन प्रतिदिशम् ॥ ३ ॥

---

१. ततश्च उदिते भस्मोद्वापः। वाग्विसर्गप्रैषः। व्रतकरणप्रैषः। व्रतकरणं त्रिस्तनम्। वाग्विसर्गः समिदाधानम्। भस्मापोऽभ्यवहरणं प्रायश्चित्त्यन्तम्। ततो विष्णुक्रमवात्सप्रसमासः।

२. "अपेत व्वीत व्वि च सर्प्पतातः" इति पुरस्तात्। "येऽत्र स्थ पुराणा ये च नूतनाः" इति दक्षिणतः।

"अदाद्यमोव्वसानम्पृथिव्या" इति पश्चात्। "अक्क्रन्निमम्पितरो लोकमस्मै" (वा० सं० १२।४५) इत्युत्तरतः।

## उदीचीꣳ शाखामुदस्योखां निवपति संज्ञानमिति ॥ ४ ॥

शाखानिरसनं प्रतिपत्तिः । तेन द्वादशाहे न तावन्निरसनम्(१) । उखां निवपति "संज्ञानम्" ( वा० सं० १२।४६ ) इत्यनेन मन्त्रेण ॥ ४ ॥

## मण्डलं छादयति ॥ ५ ॥

ततस्तेनैव मण्डलं छादयति ॥ ५ ॥

## सिकताश्चाग्नेर्भस्मेत्यूषवत् ॥ ६ ॥

ततो मण्डलं छादयति ॥ ६ ॥

## परिश्रिद्भिः परिश्रयति पूर्ववदेकविꣳशत्या चितस्येति ॥७॥

पूर्ववदिति "ऊर्द्ध्वाः शर्कराः खाते" ( का० श्रौ० १६।८।२६ ) ॥ ७ ॥

## मध्येऽर्धबृहतीश्चतस्रो दक्षिणोत्तराः प्राचीरुपदधाति दक्षिणत उदङ्ङ्यꣳसो अग्निरिति प्रत्यृचम् ॥ ८ ॥

परिमण्डलमध्येऽर्धबृहतीरिष्टकाश्चतस्रो दक्षिणोत्तररीत्या प्राग्लक्षणा दक्षिणतो व्यवस्थित उपदधाति "अयꣳसो अग्निः" ( वा० सं० १२।४४ ) इति प्रत्यृचम् ॥ ८ ॥

## सकृन्नित्ये ॥ ९ ॥

ननु चैकदेशानां सकृन्नित्यत्वं परिभाषितमाचार्येण 'सकृन्नित्ये' इति न वक्तव्यम् ? अत्रोच्यते, तच्च अलोकम्पृणाविषयम् । एतास्तु लोकंपृणाः । अतोऽत्राप्राप्तिः । तेन नित्ये एवात्र दुर्लभे कुतः सकृत्त्वमिति । अतोऽन्ये वचनान्नित्ये विधीयेते सकृत्त्वं च । लोकम्पृणा एता इति कुत एतदिति चेत् ? "अथ या लोकम्पृणा मुहूर्तलोकास्ता मुहूर्तानामेव प्राप्तिः क्रियते" इति हि प्रकृत्याह—"तासामेकविꣳशतिं गार्हपत्य उपदधाति द्वाभ्यां नाशीतिं धिष्ण्येष्वाहवनीय इतराः" इति लोकम्पृणासंज्ञानात् ।

ननु च एवमपि सति अत्रैवाष्टानामिष्टकानामुपधाने कृते पुनरुच्यते "अथ लोकम्पृणामुपदधाति" ( श० ब्रा० ७।१।१।३३ ) इति । तेन नैता लोकम्पृणा इति गम्यते ? अत्रोच्यते —अष्टानामिष्टकानां मन्त्रान्तरविधानाल्लोकम्पृणामन्त्रो न भवति । त्रयोदशानान्तु मन्त्रान्तराविधानाल्लोकम्पृणामन्त्रप्रवृत्त्यर्थं पठ्यते "लोकम्पृणा लोकमुपदधाति" इति । तथाऽऽचार्य आह—"गार्हपत्यलोकम्पृणाः प्रथमायां धिष्ण्या उत्तमायाम्" ( का० श्रौ० १७।७।२७,२८ ) इति ॥ ९ ॥

---

१. इतरेषां गार्हपत्यानामुपवसथे विधानात् ।

पश्चात्सहिते पादमात्र्यौ तिरश्च्यौ पुरस्ताच्च ॥ १० ॥

उपदधाति सहितशब्दश्च संलग्नवचनः ॥ १० ॥

अपरेण परिक्रम्य परिक्रम्य चयनमिडामग्न इति पश्चिमे प्रतिमन्त्रमुत्तरतः ॥ ११ ॥

अपरेण परिक्रम्योत्तरतो व्यवस्थित "इडामग्ने" ( वा० सं० १२।५१ ) इति प्रतिमन्त्रं पश्चिमे उपदधाति ॥ ११ ॥

चिदसीति पूर्वे दक्षिणतः प्रतिमन्त्रम् ॥ १२ ॥

तेनैव मार्गेण परीत्य दक्षिणतो व्यवस्थितः "चिदसि" ( वा० सं० १२।५३ ) इति प्रतिमन्त्रं पूर्वे उपदधाति । अपरयोर्दक्षिणा प्रथमा, पूर्वयोरुत्तरा । तिर्यग्लक्षणाश्चैता भवन्ति, "तिरश्च्यौ" इत्युक्तत्वात् ॥ १२ ॥

नित्ये प्रतीष्टकं तिरश्चीषु ॥ १३ ॥

वचनात् ॥ १३ ॥

स्रक्तिषु पादमात्रीः ॥ १४ ॥

उपधीयन्ते ॥ १४ ॥

तत्र च—

पूर्वदक्षिणस्यामर्धपद्ये ॥ १५ ॥

उपधेये ॥ १५ ॥

शेषेऽष्टौ वक्राः ॥ १६ ॥

उपधीयन्ते क्षेत्रपूरणाय ॥ १६ ॥

तिसृषु लोकम्पृणासु मन्त्रो दशसु च ॥ १७ ॥

द्वयोर्वा दशस्वेकस्यां च ॥ १८ ॥

लोकम्पृणानां मन्त्रवचनम् ॥ १८ ॥

चात्वालदेशात्पुरीषं निवपतीन्द्रं विश्वा इति ॥ १९ ॥

अनेन मन्त्रेण ॥ १९ ॥

## उदीचीं शाखामुदस्योखां निवपति संज्ञानमिति ॥ ४ ॥

शाखानिरसनं प्रतिपत्तिः। तेन द्वादशाहे न तावन्निरसनम्(१)। उखां निवपति "संज्ञानम्" ( वा० सं० १२।४६ ) इत्यनेन मन्त्रेण ॥ ४ ॥

## मण्डलं छादयति ॥ ५ ॥

ततस्तेनैव मण्डलं छादयति ॥ ५ ॥

## सिकताश्चाग्नेर्भस्मेत्यूषवत् ॥ ६ ॥

ततो मण्डलं छादयति ॥ ६ ॥

## परिश्रिद्भिः परिश्रयति पूर्ववदेकविंशत्या चितस्थेति ॥७॥

पूर्ववदिति "ऊर्ध्वाः शर्कराः खाते" ( का० श्रौ० १६।८।२६ ) ॥ ७ ॥

## मध्येऽर्धबृहतीश्चतस्रो दक्षिणोत्तराः प्राचीरुपदधाति दक्षिणत उदञ्च्यं सो अग्निरिति प्रत्यृचम् ॥ ८ ॥

परिमण्डलमध्येऽर्धबृहतीरिष्टकाश्चतस्रो दक्षिणोत्तररीत्या प्राग्लक्षणा दक्षिणतो व्यवस्थित उपदधाति "अयंसो अग्निः" ( वा० सं० १२।४४ ) इति प्रत्यृचम् ॥ ८ ॥

## सकृन्नित्ये ॥ ९ ॥

ननु चैकदेशानां सकृन्नित्यत्वं परिभाषितमाचार्येण 'सकृन्नित्ये' इति न वक्तव्यम् ? अत्रोच्यते, तच्च अलोकम्पृणाविषयम्। एतास्तु लोकंपृणाः। अतोऽत्राप्राप्तिः। तेन नित्ये एवात्र दुर्लभे कुतः सकृत्त्वमिति। अतोऽन्ये वचनान्नित्ये विधीयेते। सकृत्त्वं च। लोकम्पृणा एता इति कुत एतदिति चेत् ? "अथ या लोकम्पृणा मुहूर्तलोकास्ता मुहूर्तानामेव प्राप्तिः क्रियते" इति हि प्रकृत्याह—"तासामेकविंशतिं गार्हपत्य उपदधाति द्वाभ्यां नाशीतिं धिष्ण्येष्वाहवनीय इतराः" इति लोकम्पृणासंज्ञानात्।

ननु च एवमपि सति अत्रैवाष्टानामिष्टकानामुपधाने कृते पुनरुच्यते "अथ लोकम्पृणामुपदधाति" ( श० ब्रा० ७।१।१।३३ ) इति। तेन नैता लोकम्पृणा इति गम्यते ? अत्रोच्यते—अष्टानामिष्टकानां मन्त्रान्तरविधानाल्लोकम्पृणामन्त्रो न भवति। त्रयोदशानान्तु मन्त्रान्तराविधानाल्लोकम्पृणामन्त्रप्रवृत्त्यर्थं पठ्यते "लोकम्पृणा लोकमुपदधाति" इति। तथाऽऽचार्य आह—"गार्हपत्यलोकम्पृणाः प्रथमायां धिष्णीया उत्तमायाम्" ( का० श्रौ० १७।७।२५,२८ ) इति ॥ ९ ॥

---

१. इतरेषां गार्हपत्यानामुपवसथे विधानात्।

पश्चात्सहिते पादमात्र्यौ तिरश्च्यौ पुरस्ताच्च ॥ १० ॥

उपदधाति सहितशब्दश्च संलग्नवचनः ॥ १० ॥

अपरेण परिक्रम्य परिक्रम्य चयनमिडामग्न इति पश्चिमे प्रतिमन्त्रमुत्तरतः ॥ ११ ॥

अपरेण परिक्रम्योत्तरतो व्यवस्थित "इडामग्ने" ( वा० सं० १२।५१ ) इति प्रतिमन्त्रं पश्चिमे उपदधाति ॥ ११ ॥

चिदसीति पूर्वे दक्षिणतः प्रतिमन्त्रम् ॥ १२ ॥

तेनैव मार्गेण परीत्य दक्षिणतो व्यवस्थितः "चिदसि" ( वा० सं० १२।५३ ) इति प्रतिमन्त्रं पूर्वे उपदधाति । अपरयोर्दक्षिणा प्रथमा, पूर्वयोरुत्तरा । तिर्यग्लक्षणाश्चेता भवन्ति, "तिरश्च्यौ" इत्युक्तत्वात् ॥ १२ ॥

नित्ये प्रतीष्टकं तिरश्चीषु ॥ १३ ॥

वचनात् ॥ १३ ॥

स्रक्तिषु पादमात्रीः ॥ १४ ॥

उपधीयन्ते ॥ १४ ॥

तत्र च—

पूर्वदक्षिणस्यामर्धपद्ये ॥ १५ ॥

उपधेये ॥ १५ ॥

शेषेऽष्टौ वक्राः ॥ १६ ॥

उपधीयन्ते क्षेत्रपूरणाय ॥ १६ ॥

तिसृषु लोकम्पृणासु मन्त्रो दशसु च ॥ १७ ॥

द्वयोर्वा दशस्वेकस्यां च ॥ १८ ॥

लोकम्पृणानां मन्त्रवचनम् ॥ १८ ॥

चात्वालदेशात्पुरीषं निवपतीन्द्रं विश्वा इति ॥ १९ ॥

अनेन मन्त्रेण ॥ १९ ॥

**समम्बिलां कृत्वोख्यं निवपति समितमिति ॥ २० ॥**

गार्हपत्यचितिं पुरीषेण समम्बिलां कृत्वोख्यमग्निं निवपति "समितम्" ( वा० सं० १२।५७ ) इत्यनेन मन्त्रेण ॥ २० ॥

**रिक्तां नावेक्षेतोखाम् ॥ २१ ॥**

तामेव ॥ २१ ॥

**सिकताभिः समं बिलां कृत्वा मातेव पुत्रमिति शिक्याद्विमुच्याभिवन्निधायासिञ्चति पयो मध्ये तूष्णीम् ॥ २२ ॥**

अभिवदित्यरत्निमात्रे गार्हपत्यस्योत्तरतः। तूष्णीमिति लौकिकवागुच्चारणप्रतिषेधः ॥ २२ ॥

**त्रिचितमेके ॥ २३ ॥**

गार्हपत्यं कुर्वन्ति। तत्र च त्रिभागोत्सेधा इष्टका इति सम्प्रदायः। अस्मिंश्च पक्षे प्रथमचितिलोकम्पृणानां पूरणं मृग्यम् ॥ २३ ॥

इति सप्तदशाध्याये प्रथमा कण्डिका ॥

२

नैर्ऋतीः कृष्णास्तुषपक्वास्तिस्रोऽलक्षणाः पादमात्रीर्हविष्यशन्नहोमवद्देशे दक्षिणोत्तराः कृत्वा दक्षिणामुखोऽनुपस्पृशन्—

**असुन्वन्तमिति प्रत्यृचं पराचीः ॥ १ ॥**

उपदधाति, "ताः पराचीर्लोकभाजः कृत्वोपदधाति" ( श० ब्रा० ७।२।१।८ ) इति श्रुतेः ॥ १ ॥

**अभ्यात्ममेके ॥ २ ॥**

उपदधाति ॥ २ ॥

**नित्याभावः ॥ ३ ॥**

नित्यशब्देन सादनसूददोहसौ उच्येते ॥ ३ ॥

**शिक्यरुक्मपाशेण्ड्वासन्दीः परेणास्यति यं त इति ॥४॥**

नैर्ऋतीनां "यं त" ( वा० सं० १२।६५ ) इत्यनेन मन्त्रेण ॥ ४ ॥

**उदपात्रं निषिच्यान्तरात्मेष्टकमुत्तिष्ठन्ति नमो भूत्या इति॥**

आत्मनश्चेष्टकानां चान्तराले उदपात्रं निषिच्य उत्तिष्ठन्ति(१) "नमो भूत्यै" ( वा० सं० १२।६५ ) इत्यनेन मन्त्रेण ॥ ५ ॥

**अनपेक्षमेत्य शालाद्वार्योपस्थानं निवेशन इति॥ ६ ॥**

अनेन मन्त्रेण । अनपेक्षणं च नैर्ऋतीविषयम् ॥ ६ ॥

**प्रायणीयहविष्कृदन्ते महावेदेः स्फ्याद्याः संमर्शनात्करोति॥७॥**

पूर्वेद्युर्महावेदेरुत्करकरणान्ताः पदार्था गताः । इदानीं स्फ्याद्याः संमर्शनान्ताः क्रियन्ते ॥ ७ ॥

**प्रायणीयान्ते सीरं युनक्त्यौदुम्बरम् ॥ ८ ॥**

तत्र च—

**मौञ्जं त्रिवृद्रज्जव्यम् ॥ ९ ॥**

भवति ॥ ९ ॥

**षड्द्वादश चतुर्विंशतिं वा युनक्ति ॥ १० ॥**

बलीवर्दान् ॥ १० ॥

**पूर्वेणोत्तरांसं दक्षिणामग्निश्रोणिमपरेण तिष्ठन्युज्यमानम-भिमन्त्रयते सीरा युञ्जन्तीति ॥ ११ ॥**

अग्न्यंसमुत्तरं पूर्वेण सीरं युज्यमानं दक्षिणाग्निश्रोणिमपरेण तिष्ठन् प्रतिप्रस्थाताऽभिमन्त्रयते 'सीरा युञ्जन्ति" ( वा० सं० १२।६७ ) इत्यनेन मन्त्रेण । याजनं तु प्रधानत्वादध्वर्युः ॥ ११ ॥

**आत्मनि कृषत्यनुपरिश्रित्छुनं सुफाला इति प्रत्यृचम्॥१२॥**

अग्न्यात्मनि कृषति परिश्रित्संलग्नं "शुनं सुफाला" ( वा० सं० १२।६९ ) इति ॥ १२ ॥

---

१. बहुवचनात् ब्रह्मयजमानाध्वर्यवः । "प्रत्येत्याग्निमुपतिष्ठते" (श० ब्रा० ७।२।१।१८) इति श्रुतेरेते एव ।

दक्षिणतः प्राचीम् ॥ १३ ॥

प्रथमां सीताम् ॥ १३ ॥

प्रदक्षिणमितराः ॥ १४ ॥

प्रत्यृचमुत्तराभिर्ऋग्भिः ॥ १४ ॥

तूष्णीं तिस्रस्तिस्रः प्रदक्षिणम् ॥ १५ ॥

मध्येसीताः कृषति ॥ १५ ॥

तत्र च प्रथमम्—

तिर्यगनूके ॥ १६ ॥

ततः—

अक्ष्णया श्रोण्यंसयोः ॥ १७ ॥

अनूके ॥ १८ ॥

पुनः प्रागनूके ॥ १८ ॥

ततः—

श्रोण्यंसयोः ॥ १९ ॥

दीर्घप्रयुक्तेषु वा पुरुषाः कृषन्ति ॥ २० ॥

दीर्घप्रयुक्तेषु वा कर्षणं भवति। तत्र च पुरुषाः कृषन्ति। तिर्यक्प्रयुक्तेष्वध्वर्युरेव ॥ २० ॥

अनड्डहो विमुञ्चथ विमुच्यध्वमिति ॥ २१ ॥

अनेन मन्त्रेण ॥ २१ ॥

पशुवदुत्सृज्य दक्षिणाकालेऽध्वर्यवे ददाति ॥ २२ ॥

पशुवदुत्सृज्य उत्तरपूर्वां दिशं प्रति दक्षिणाकालेऽध्वर्यवे ददातीति। अत्र च ल्यबादेश आचार्येण पदार्थनिर्देशार्थः प्रयुक्तो न समानकर्तृकार्थः। तेनाऽध्वर्योरेव विमोचनोत्सर्गः। दानं तु यजमानस्य। न हि श्रौतो ल्यबादेशः ॥ २२ ॥

इति सप्तदशाध्याये द्वितीया कण्डिका ॥



३

सीरमुत्करे कृत्वा—

**कुशस्तम्बमुपदधाति मध्ये तूष्णीम् ॥ १ ॥**

अग्निक्षेत्रस्य । 'तूष्णीम्' इति वचनान्नित्याभावः ॥ १ ॥

**पञ्चगृहीतेनोद्गृह्णन्नभिजुहोति सजूरब्द इति ॥ २ ॥**

कुशस्तम्बे पञ्चगृहीतेनाज्येनोद्गृह्णन्नभिजुहोति "सजूरब्द" (वा० सं० १२।७४) इत्यनेन मन्त्रेण ॥ २ ॥

**चतसृषु चतसृषु त्रींस्त्रीनुदचमसान्निनयति यथाकृष्ट-मौदुम्बरेण चतुःस्रक्तिना ॥ ३ ॥**

चतसृषु सीतासु यदा त्रयोऽभिनिनीयन्ते तदा स त्रिभागा सीतैकैकस्य भवति । एवं हि श्रूयते—"द्वादशोदचमसान्कृष्टे निनयति" ( श० ब्रा० ७।२।४।४ ) इति । षोडश च कृष्टास्सीताः । येन क्रमेण कृष्टाः सीतास्तेनैवोदचमसनिनयनं, 'यथा कृष्टम्' इति सूत्रितत्वात् ॥ ३ ॥

**त्रीन्कृष्टाकृष्टयोः ॥ ४ ॥**

निनयत्युदचमसान्, "त्रीन्कृष्टे चाकृष्टे च निनयति" ( श० ब्रा० ७।२।४।६ ) इति श्रुतेः । सर्वमेवाग्निक्षेत्रं कृष्टं चाकृष्टं च ॥ ४ ॥

तत्र निनयने प्राप्त आह—

**कृष्टमात्रे वा ॥ ५ ॥**

निनयति । कृष्टपरिच्छिन्नं यदकृष्टं तत्कृष्टमात्रम् । तदेव कृष्टं चाकृष्टं च । यावत्कृष्टपरिच्छिन्नं तावत्कृष्टम्, अकृष्टत्वाच्चाकृष्टमिति । कृष्टे पुनर्गृह्यमाणे कृतत्वा-द्दोषप्रसङ्गः ॥ ५ ॥

**तस्मिन्सर्वौषधमावपत्येकवर्जमभोजनं तस्योच्छ्वासात् ॥६॥**

तस्मिन्नश्मसे सर्वौषधमावपति एकं वर्ज्जयित्वा । तस्य चाभोजनं यावज्जीवम्॥६॥

**या ओषधीरिति तृचैर्वपत्युदपात्रवत् ॥ ७ ॥**

"या ओषधीः" (१)इति तृचैः उदपात्रवदिति तिसृभिस्तिसृभिर्ऋग्भिश्चतसृषु चतसृषु सीतासु वपति । ततश्च अत्रापि प्रत्यृचं सत्रिभागा सत्रिभागा सीतेति । कृष्टमात्राणि तु त्रिभागन्यूनानि त्रीणि त्रीणि । उदकासेकेप्येवमेव चमसानाम् ॥ ७ ॥

---

१. इमे तृचाः वा० सं० द्वादशाध्याये द्रष्टव्याः ।

सोमनिवपनाद्यातिथ्यहविष्कृतः कृत्वाऽऽहवनीयपरि-श्रितोऽभिमन्त्रयते चितस्थेति ॥ ८ ॥

प्रायणीयाया वेदयोक्त्रविमोकान्वे सीरयोजनादि कृतम्। ध्रौवस्य ह्याज्यस्य विनियोगविधानात्तत उत्तरासु प्रतिपत्तिष्वसमाप्तास्वेव सोमनिवपनं कृतम्। इहापि तद्वदेव सोमनिवपनाद्यातिथ्यहविष्कृतः कृत्वा आहवनीयपरिश्रितोऽभिमन्त्रयते "चितस्थ" ( वा० सं० १२।४६ ) इत्यनेन मन्त्रेण ॥ ८ ॥

सप्त सप्त वा ॥ ९ ॥

अविशेषस्य विशेषव्यवस्थापनन्यायात्सप्त सप्तैवेत्युक्तम् ॥ ९ ॥

लोगेष्टकाः स्फ्येनाहृत्य बहिर्वेदेरनूकान्तेषूपदधाति तिष्ठन्मा मा हिꣳसीदिति प्रत्यृचं प्रतिदिशं पुरस्तात्प्रथमम् ॥ १० ॥

आहृत्योपदधाति ॥ १० ॥

उत्तरा परस्याः पश्चात् ॥ ११ ॥

उत्तरा परस्याः दिश आहृत्य पश्चादुपदधाति "स न सम्प्रतिपश्चादाहरेन्नेद्यज्ञपथाद्रसमाहराणि" ( श० ब्रा० ७।३।१।२२ ) इति निषिध्य "इत इवाहरति" ( श० ब्रा० ७।३।१ २२ ) इत्युक्तत्वात् ॥ ११ ॥

उत्तरस्याः सिकताः प्रमार्ष्टि जहामि सेदिमिति ॥ १२ ॥

अनेन मन्त्रेण। तत उपदधाति ॥ १२ ॥

उत्तरवेदिं निवपति चत्वारिꣳशत्पदां युगमात्रीं वा सर्वतः कुशस्तम्बे ॥ १३ ॥

छादनान्तां करोति ॥ १३ ॥

अग्ने तवेति सिकतान्युप्य च्छादयत्यात्मानम् ॥ १४ ॥

"अग्ने तव" ( वा० सं० १२।१०६ ) इत्यनेन मन्त्रेण सिकतान्युप्य छादयत्यात्मानम् ॥ १४ ॥

आप्यायस्वेति सिकतालम्भनमृग्भ्याम् ॥ १५ ॥

न्युप्तानामेव ॥ १५ ॥

आतिथ्यशेषाद्योपसदः कृत्वा रोहिते चर्मण्यानडुहेऽन्तः-
पात्य पुरस्तादिष्टकाः करोति प्रथमचितेः ॥ १६ ॥

वैकृतावसरे प्राकृतानुवृत्त्यर्थम् 'आतिथ्यशेषाद्योपसदः कृत्वा' इत्युक्तम्। पुनराग्निक्रममेवोच्यते—'अन्तःपात्य पुरस्तादिष्टकाः करोति प्रथमचितेः'। प्रथमचिति-सम्बन्धिन्यः ॥ १६ ॥

इतरासां च चितीनां स्वयमातृण्णाः ॥ १७ ॥

इतरासां च स्वयमातृण्णाः ॥ १७ ॥

मत्या च ॥ १८ ॥

करोति ॥ ८ ॥

आज्ये न्यज्य कुशाग्राणि तूष्णीं प्रोक्षति श्वेतेऽश्वे पुरस्ता-
त्तिष्ठति श्वेताभावेऽश्वेतेऽश्वाभावेऽनडुहि ॥ १६ ॥

कुशाग्राण्याज्ये न्यज्येष्टकाः प्रोक्षति ॥ १९ ॥

अग्निभ्यः प्रह्रियमाणेभ्योऽनुवाचयति ॥ २० ॥

अग्निभ्यः प्रह्रियमाणेभ्योऽनुब्रूहीत्येवम् ॥ २० ॥

त्रिरुक्तायामश्वपूर्वां चितिं हृत्वा पुच्छाद्दक्षिणां निदधाति ॥

त्रिरुक्तायां प्रथमायामृचि अश्वपूर्वां चितिं हृत्वा अग्निपुच्छाद् दक्षिणां निदधाति ॥ २१ ॥

तीर्थेनाश्वमारोहयत्युत्तरपक्षमपरेण ॥ २२ ॥

स्वशब्दाभिहितत्वात्प्रदेशस्य तीर्थशब्दोपादानमन्यत्राप्यनेनैवारोहणावरोहणं यथा स्यादिति ॥ २२ ॥

पुरस्तात्पश्चाद्वैके ॥ २३ ॥

अश्वमारोहयन्ति। स चायं विकल्पोऽश्वविषय एव ॥ २३ ॥

अनुयजुःकृष्टं परिणयत्युत्तरतः प्रथमम् ॥ २४ ॥

अश्वम् ॥ २४ ॥

**प्रत्यञ्चमागतं चितिमवघ्राप्य परिणीयोत्सृजति पशुवत् ॥२५॥**

प्रत्यञ्चमागतमश्वं चितिमवघ्राप्य परिणीयोत्सृजति पशुवत् उत्तरपूर्वां दिशम् ॥२५॥

**उत्तरवेदिश्रो णाद्यासम्भारनिवपनात्कृत्वोत्तरवेदिमपरेण तिष्ठन्यजमानो मयि गृह्णामीति जपति ॥ २६ ॥**

"आरुह्याग्निमौत्तरवेदिकं कर्म कृत्वात्मन्नग्निं गृह्णीत" (श० ब्रा० ७।३।२।१७) इति श्रुतेः। एवं च व्याघारणान्तमेव क्रियते न सम्भारनिवपनमिति। तथा वक्ष्यत्याचार्यः "पैतुदारवाद्यत्रैके" इति। अग्न्यर्थत्वात्सम्भाराणां तत्रैव निवपनमिति। 'यजमानो जपति' इति चोत्तरपदार्थार्थम्। इह प्रत्यगाशीर्योगादेव प्राप्तिः ॥ २६ ॥

**सत्यसाम गायति ॥ २७ ॥**

इति सप्तदशाध्याये तृतीया कण्डिका ॥



४

**पुष्करपर्णमुपदधाति स्तम्बे पूर्ववत् ॥ १ ॥**

प्रकृतत्वात्तदेव। "पूर्ववत्" इति च मन्त्रो लभ्यते विमार्जनं च ॥ १ ॥

**तस्मिंरुक्ममधः पिण्डं ब्रह्म जज्ञानमिति ॥ २ ॥**

अनेन मन्त्रेणोपदधाति हिरण्यम्। रुक्मोऽपि च स एव ॥ २ ॥

**उत्तानं प्राञ्चं हिरण्यपुरुषं तस्मिन्हिरण्यगर्भ इति ॥ ३ ॥**

तस्मिन्रुक्मे प्राञ्चमुत्तानं हिरण्यपुरुषमुपदधाति "हिरण्यगर्भः" ( वा० सं० १३।४ ) इत्यनेन मन्त्रेण ॥ ३ ॥

**पुरुषे चित्रे साम गायति ॥ ४ ॥**

सप्तमीनिर्देशादालब्धे पुरुषे चित्रलिङ्गमन्त्रे साम गायति ॥ ४ ॥

**पूर्वेणापरीत्योऽतः ॥ ५ ॥**

"तमुपधाय न पुरस्तात्परीयात्" ( श० ब्रा० ७।४।१।२४ ) इति वचनात् ॥५॥

**उपतिष्ठते यजमानो नमोऽस्त्विति ॥ ६ ॥**

पुरुषम् ॥ ६ ॥

उपविश्य पञ्चगृहीतं जुहोति पुरुषे कृणुष्व पाज इति प्रत्यृचं प्रतिदिशं परिसर्पम् ॥ ७ ॥

उपवेशनग्रहणाच्च यजमानो जुहोति ।। द्वादशाहे चैकः कर्त्ता । पुरुषे जुहोति प्रत्यृचं सृप्त्वा सृप्त्वा ॥ ७ ॥

प्रत्येत्य दक्षिणतः ॥ ८ ॥

अवस्थितो जुहोति ॥ ८ ॥

पश्चात्प्रथमान्त्ये ॥ ९ ॥

पश्चात् प्रथमान्त्ये होमकर्मणी । पश्चात्प्राङ्मुखः ॥ ९ ॥

पुरुषमवच्छाद्योरसाऽस्पृष्टं बाह्वोः प्रापणान्ते लिखति ॥१०॥

अस्पृष्टं पुरुषमवच्छाद्योरसा बाह्वोः प्रापणान्ते लिखति । स चायं याजमानः पदार्थः, प्रमाणत्वात् ॥ १० ॥

तत्र स्रुगुपधानं प्राच्योः ॥ ११ ॥

तत्र परिलेखयोः स्रुचोरुपधानं प्राच्योः प्रागग्रयोः ॥ ११ ॥

कार्ष्मर्यमयीं दक्षिणतः पाणिमात्रपुष्करां बाहुमात्रीं पादमात्रीं वा सामर्थ्यात् घृतपूर्णामग्नेष्ट्वेति ॥ १२ ॥

तत्र परिलेखयोः स्रुचोरुपधानं प्रागग्रयोः कार्ष्मर्यमयीं दक्षिणतः पाणिमात्रपुष्करामिति तन्मात्रं स्रुचः पुष्करमुक्तम् । बाहुमात्रीमिति परिमाणत्वात्स्रुचम् । पादमात्रीं वा । कुत एतत् ? आम्नानसामर्थ्यात् । "पादमात्रीः प्रथमायां चोत्तमायां च चित्योरुपदध्यात्" ( श० ब्रा० ८।७।३।१७ ) इति । यद्येवं पादमात्रीमेव । तां च घृतपूर्णाम् "अग्ने ष्ट्वा" ( वा० सं० १३।१३ ) इत्यनेन मन्त्रेणोपदधाति ॥ १२ ॥

एवमौदुम्बरीमुत्तरतो दधिपूर्णामिन्द्रस्य त्वेति ॥ १३ ॥

अनेन मन्त्रेण ॥ १३ ॥

तिरश्च्यावेके ॥ १४ ॥

प्राच्यौ वेति विकल्पः । अर्धपद्ये चैते भवत इति सम्प्रदायः ॥ १४ ॥

स्वयमातृण्णां पुरुषे शर्करां छिद्रां ध्रुवासीति ॥ १५ ॥

स्वयमातृण्णामिष्टकां पुरुषे उपदधाति, शर्करां छिद्रां "ध्रुवासि" ( वा० सं० १३।१६ ) इत्यनेन मन्त्रेण ॥ १५ ॥

भूरित्येतस्याᳬ साम गायति ॥ १६ ॥

आलभ्य, सप्तम्युपदेशात् ॥ १६ ॥

अन्यत्रापि व्याहृतिषु ॥ १७ ॥

अतोऽन्यत्रापि स्वयमातृण्णासु व्याहृतिषु साम गायति । "अथ स्वयमातृण्णासु सामानि गायति" (श०ब्रा० ८।७।४।१) इति प्रकृत्य "स वै भूर्भुवःस्वरित्येतासु व्याहृतिषु गायति" ( श० ब्रा० ८।७।४।५ ) इति आह । सूत्रे च बहुवचनं पूर्वापेक्षम् ॥ १७ ॥

मूलाग्रवतीं दूर्वां तस्यां पुरस्ताद् भूमि गाक्षां काण्डा-त्काण्डादिति ॥ १८ ॥

तस्यां स्वयमातृण्णायां यथा भवत्यर्धमर्धं च भूमौ तथोपधेया ॥ १८ ॥

पूर्वां पूर्वामुत्तराः ॥ १६ ॥

इष्टका उपदधाति ॥ १९ ॥

यास्त इति द्वियजुषं द्वितीये ॥ २० ॥

"यास्त" ( वा० सं० १३।२३ ) इत्यनेन मन्त्रेण द्वितीये लोके उपदधाति ॥२०॥

'द्वितीये' इति कुत एतत् ?

उलूखलस्य रेतःसिग्वेलायामरत्निमात्रश्रुतेः ॥ २१ ॥

उलूखलमुसले हि प्रकृत्याह—"ते रेतःसिचोर्वेलयोपदधात्यरत्निमात्रेऽरत्नि-मात्राद्ध्यन्नमद्य ते" ( श० ब्रा० ७।५।१।१३ । इति श्रुतेः । रेतःसिचोर्द्वियजुषश्चा-नन्तर्यमुक्तम् "ते अनन्तर्हिते द्वियजुष उपदधाति" ( श० ब्रा० ७।४।२।२४ ) इति । तेन द्वियजुषो द्वितीये लोके उपधानम् ॥ २१ ॥

विराट् स्वराडिति रेतःसिचौ प्रतिमन्त्रम्(१) ॥ २२ ॥

उपदधाति ॥ २२ ॥

प्रजापतिरिति विश्वज्योतिषम् ॥ २३ ॥

उपदधाति ॥ २३ ॥

---

१. तत्तत्सूत्रोद्धृता मन्त्राः संहितायां त्रयोदशाध्याये द्रष्टव्याः ।

ऋतव्ये मधुश्च माधवश्चेति ॥ २४ ॥

उपधीयेते ॥ २४ ॥

अषाढासीत्यषाढाम् ॥ २५ ॥

उपदधाति ॥ २५ ॥

स्वयमातृण्णारेतःसिग्विश्वज्योतिरृतव्याषाढासु लक्षणानि कुरुते रज्ज्वां वेलार्थानि ॥ २६ ॥

उपरिष्टाद्वेलायाः प्रयोजनमस्ति ॥ २६ ॥

कूर्मं दधिमधुघृतैरनक्ति मधुवाता इति ॥ २७ ॥

मन्त्रः ॥ २७ ॥

इति सप्तदशाध्याये चतुर्थी कण्डिका ॥

५

अरत्निमात्रेऽषाढां दक्षिणेनावकासूपरिष्टाच्च पुरुषमभिमुखम्—

अपां गम्भन्निति तिसृभिः ॥ १ ॥

अषाढादक्षिणतोऽरत्निमात्रे देशेऽवकासु कूर्ममुपदधाति पुरुषमभिमुखम्। उपरिष्टाच्चावका भवन्ति। अवकाशब्देन सेवालमुच्यते। "अपां गम्भन्" (वा० सं० १३। ३०) इति। तिसृभिस्तमुपदधाति ॥ १ ॥

घट्टयति मध्यमया ॥ २ ॥

ऋचा चालयति ॥ २ ॥

उलूखलमुसले स्वयमातृण्णामुत्तरेणारत्निमात्रेऽऔदुम्बरे प्रादेशमात्रे चतुरश्रमुलूखलं मध्यसङ्गृहीतमूर्द्ध्वं वृत्तं मुसलं दक्षिणमुलूखलाद्विष्णोः कर्माणीति ॥ ३ ॥

"अथोलूखलमुसलेऽउपदधाति" (श० ब्रा० ७।५।१।१२) इति प्रकृत्यैवमेव हि श्रूयते इति। पद्ये चैते भवतः, यजुष्मतीत्वात्। भेदेन (१) चोपधानं लिङ्गात्। "सकृत्सादयति समानं तत्करोति" (श० ब्रा० ७।५।१।२५)। यदिह युगपदुपधानं स्यान्न सकृत्त्वमुच्येत ॥ ३ ॥

१. भेदे मन्त्रावृत्तिः सन्निपातित्वात्।

**उलूखलऽउखां कृत्वोपशयां पिष्ट्वा न्युप्य पुरस्ताद्भुवासीत्युखाम् ॥ ४ ॥**

"अथोपशयां पिष्ट्वा लोकभाजमुखां कृत्वा पुरस्तादुखाया उपनिवपति" (श० ब्रा० ७।५।१।२८) इति श्रुतिक्रमेणानुष्ठानम्। लोकभाक्करणोत्तरकालं मन्त्रवचनम् ॥ ४ ॥

**अग्ने युद्क्ष्वाहीति प्रत्यृचं स्रुवाहुती जुहोत्युखायाम् ॥५॥**

ऋजुम् ॥ ५ ॥

**उपस्थानं वाऽसम्वत्सरभृतिनः ॥ ६ ॥**

सम्वत्सरभृतिनो होमः। असम्वत्सरभृतिनः उपस्थानं होमो वा। विकल्पेन हि तस्य श्रवणमिति ॥ ६ ॥

**प्रतिशिरः सप्त सप्त हिरण्यशकलान्मुखे करोति सम्यक्स्रवन्तीति ॥ ७ ॥**

प्रतिशिरः सप्त सप्त हिरण्यशकलान्प्रास्यति प्राणायतनेषु मुखे प्रथमं "सम्यक् स्रवन्ति" (वा० सं० १३।३८) इत्यनेन मन्त्रेण ॥ ७ ॥

**उत्तरां द्वौ द्वौ ॥ ८ ॥**

मन्त्रौ प्रतीयात् ॥ ८ ॥

**नासिकयोर्ऋचे त्वेति ॥ ९ ॥**

मन्त्रद्वयाभिधानादेव शकलद्वित्वमधिष्ठानभेदाच्च ॥ ९ ॥

**अक्ष्योर्भासे त्वेति ॥ १० ॥**

प्रास्यति ॥ १० ॥

**श्रोत्रयोरभूदिदमिति ॥ ११ ॥**

प्रास्यति ॥ ११ ॥

**सर्वानप्येकस्मिन्नेके ॥ १२ ॥**

एकस्मिन्नपि पशौ सर्वानेव शकलानेक आचार्याः प्रास्यन्ति, "तद्धैकेऽपि यद्येकः पशुर्भवति पञ्चैव कृत्वः सप्त सप्त प्रत्यस्यन्ति" (श०ब्रा०७।५।२।१०) इति श्रुतेः ॥१२॥

## उखायां प्रत्यञ्चि ॥ १३ ॥

पशुशीर्षाण्युपदधातीति शेषः ॥ १३ ॥

तत्र च—

## सहस्रदा इति पुरुषशिर उद्गृह्य मध्ये ॥ १४ ॥

"सहस्रदा" ( वा० सं० १२।४० ) इत्यनेन मन्त्रेण पुरुषशिर उद्गृह्य मध्ये उपधेयम् ॥ १४ ॥

## अश्वाव्योरुत्तरतः पूर्वापरे ॥ १५ ॥

उपधीयेते शिरसी, पूर्वमश्वस्यापरमवेः ॥ १५ ॥

## गोऽजयोश्च दक्षिणतः ॥ १६ ॥

चशब्दात्पूर्वापरे एव । पूर्वं गोरपरमजस्य ॥ १६ ॥

## आदित्यं गर्भमिति प्रतिमन्त्रं मन्त्रक्रमेण ॥ १७ ॥

शिरांस्युपधीयन्ते ॥ १७ ॥

## चित्रं देवानामित्यर्धर्चशः स्रुवाहुती मध्यमे ॥ १८ ॥

"चित्रन्देवानाम्" ( वा० सं० १३।४६ ) इत्येकैकेनार्धर्चशः स्रुवाहुती जुहोति, पुरुषशिरसि, 'अथ पुरुषशीर्षमभिजुहोति' (श०ब्रा० ७।५।२।२३) इति वचनात् ॥१८॥

## बहिर्वेद्युदङ् तिष्ठन्नुपातिष्ठतऽउत्सर्गैरिमं मा हिंसीरिति प्रतिमन्त्रम् ॥ १९ ॥

बहिर्वेद्युदङ्मुखस्तिष्ठन्नुत्सर्गमन्त्रैरुपतिष्ठते पशुशीर्षाणि "इमं मा हिंसी" ( वा० सं० १३।४७ ) इति प्रतिमन्त्रम् ॥ १९ ॥

## उखां परिक्राममेके ॥ २० ॥

एके आचार्या उखां परिक्रम्य परिक्रम्येह स्थिता एव तस्य तस्य पशोरुपस्थानं कुर्वन्ति । एवमपि हि श्रूयते—"विपरिक्रामम्मु हैक उपतिष्ठन्ते" (श० ब्रा० ७।५।२।३०) इति विकल्पः ॥ २० ॥

## उपधायोपधाय वा तस्य तस्य यथालिङ्गम् ॥ २१ ॥

"तद्धैके यं यमेव पशुमुपदधति तस्य तस्य शुचमुत्सृजन्ति" (श० ब्रा० ७।५।२।२९) इति श्रुतेः । अस्मिंश्च पक्षे प्रागजशिरउपस्थानात्पुरुषाहुती इति ॥ २१ ॥

सर्वमन्त्रानप्येकस्मिन्नेके ॥ २२ ॥

एकस्मिन्नपि पशुशिरसि सर्वमन्त्रानेके आचार्याः प्रयुञ्जते ॥ २२ ॥

तत्र च—

उपधानमन्त्रान्विपरिहरन्नङ्गुलिं प्रथिष्ठे शिरसि ॥ २३ ॥

देशे संलागयति। एतच्च यद्येकस्मिञ्छिरसि पञ्चकृत्वोहिरण्यशकलप्रक्षेपः कृतस्तदैव भवति ॥ २३ ॥

एत्य च—

इति सप्तदशाध्याये पञ्चमी कण्डिका ॥

६

त्वं यविष्ठेति चित्योपस्थानम् ॥ १ ॥

बहिर्वेद्युत्सर्गैरुपस्थानं कृतम्। तेन 'एत्य' इत्युच्यते। चशब्दादनेत्य च। उखापरिक्रमणपक्षेऽपीत्यर्थः ॥ १ ॥

अपरेण स्वयमातृण्णामेत्यापस्याः पञ्च पञ्चानूकान्तेष्वपां त्वेमन्निति प्रतिमन्त्रम् ॥ २ ॥

"आरुह्याग्निं जघनेन स्वयमातृण्णां परीत्यापस्या उपदधाति" ( श० ब्रा० ७।५।२।४० ) इति। अत्र च प्रत्यनूकान्तं नित्ये भवत इत्युक्तमेवैकादशस्वेकचोदनासु तन्त्रेणेति ॥ २ ॥

व्याघारणवत्प्राणभृतः कर्णसहिता दश दश पुरुषमुपाप्यैके रेतःसिग्वेलायां च सर्वतो यथायोगमयम्पुर इति प्रतिमन्त्रम्॥

'प्राणभृत' इतीष्टकानां नाम। ताश्च व्याघारणवद्दक्षिणपूर्वांसादारभ्य कर्णसहिता उपदधाति "अयम्पुरः" ( वा० सं० १३।५४ ) इति प्रतिमन्त्रम्। तत उत्तराश्रोणेरारभ्य एवमेवोपधानम्। पुनर्दक्षिणाश्रोणेरारभ्य एवमेवोपधानम्। तत उत्तरांसादारभ्य। एवं चत्वारो दशका उपहिताः। शिष्टा दश रेतःसिग्वेलायां यथायोगं समत्रिभागेनोपधीयन्ते। पुरुषमुपाप्य वा सर्वासामुपधानम्, "ता हैके पुरुषमुपाप्योपदधति" ( श० ब्रा० ८।१।४।१ ) इति श्रुतेः। ततश्च कर्णसहिता इति विकल्पः ॥ ३ ॥

द्वितीयमयं पश्चादिति ॥ ४ ॥

द्वितीयं दशानामुपधानं "अयम् पश्चात्" (वा० सं० १३।५६) इति। अत्र चैके खण्डशो मन्त्रान्प्रयुञ्जते, "पञ्चाशदिष्टकाः पञ्चाशद्यजूंषि" (श० ब्रा० १०।२।४।८) इति वचनात्। तत्पुनरयुक्तम्, वाक्यानामपरिसमाप्तत्वात्। कथं तर्हि यजुषां पञ्चाशत्त्वम्? अभ्यासेनेत्यदोषः। लिङ्गाच्च। "कथमस्यैताः सर्वाः प्राजापत्या भवन्तीति" (श० ब्रा० ८।१।३।२) इति प्रकृत्याह "यदेव सर्वास्वाह प्रजापतिगृहीतया त्वयेत्येवमु हास्यैताः सर्वाः प्राजापत्या भवन्ति" (श० ब्रा० ८।१।३।२) इति। तस्मात्सकलमन्त्रप्रयोगो न खण्डश इति ॥ ४ ॥

लोकम्पृणादक्षिणांऽसादध्यामध्यात्प्रदक्षिणमानूकान्तात्पूर्वस्मात् ॥ ५ ॥

उपदधाति ॥ ५ ॥

प्रत्येत्य शेषम् ॥ ६ ॥

पूरयति ॥ ६ ॥

पक्षपुच्छानि पराग्भिरप्ययेभ्योऽधि ॥ ७ ॥

(१)अप्ययेभ्य आरभ्य पक्षपुच्छानि पराग्भिरिष्टकाभिश्चिनोति ॥ ७ ॥

एवंऽसर्वत्र ॥ ८ ॥

सर्वचितिष्वेवं पराग्भिरिष्टकाभिः पक्षपुच्छानां चयनम् ॥ ८ ॥

मध्ये पुरीषं निवपति पूर्ववत् ॥ ९ ॥

पूर्ववदिति मन्त्र उपलभ्यते ॥ ९ ॥

पूर्वमर्धानूकं छादयति ॥ १० ॥

पुरीषेण ॥ १० ॥

ततः—

प्रदक्षिणमात्मानम् ॥ ११ ॥

पुरीषेण च्छादयति ॥ ११ ॥

---

१. अप्ययः पक्षपुच्छात्मसन्धिः।

पक्षपुच्छानि च ॥ १२ ॥

चशब्दात्प्रदक्षिणं पुरीषेण च्छादयति । "दक्षिणं पक्षमथ पुच्छमथोत्तरम्" ( श०ब्रा० ८।७।३।५ ) इति ॥ १२ ॥

एवꣳ सर्वत्र ॥ १३ ॥

सर्वचितिषु इत्यर्थः ॥ १३ ॥

इति सप्तदशाध्याये षष्ठी कण्डिका ॥

७

चितिं पुरीषवतीमुपतिष्ठते वार्त्रहत्यायेति सप्तभिः ॥ १ ॥

पुरीषवतीग्रहणात् यदैव पुरीषवती तदैवोपस्थानं न प्रागिति ॥ १ ॥

अष्टाभिरेके ॥ २ ॥

उपतिष्ठन्ते ॥ २ ॥

दशभिर्वा ॥ ३ ॥

वेति विकल्पः ॥ ३ ॥

उपसत्सु पौर्वाह्णिक्यापराह्णिक्यन्तरे चयनपुरीषनिवपने ॥४॥

कर्त्तव्ये, "अन्तरोपसदौ चिनोति" ( श०ब्रा० १०।२.५।१ ) इति श्रुतेः ॥ ४ ॥

त्रिरश्वं परिणीयोपास्तमयं पशुवदुत्सृज्य तावत्प्रतिपर्येति॥

अस्तमयकाले त्रिः कृत्वोऽश्वमग्निं परिणीयोत्तरपूर्वां दिशं प्रत्युत्सृज्य तावत्प्रति-पर्येति ॥ ५ ॥

परिणयनमग्निनिधानात् ॥ ६ ॥

एतच्च परिणयनमग्निनिधानादर्वाक्कर्तव्यम् । एतच्च यद्यपि बहुभिरहोभिश्चितिः क्रियते तथापि प्रत्यस्तमयं क्रियत एव, विशिष्टकाले श्रवणात् ॥ ६ ॥

त्र्युपसत्के द्वे प्रथमायां तिस्रो मध्यमायाम् ॥ ७ ॥

त्र्युपसत्के क्रतौ प्रथमायामुपसदि द्वे चिती उपधीयेते, मध्यमायाञ्च तिस्रः ॥७॥

## पञ्चगृहीताद्युत्तमा ॥ ८ ॥

उत्तमोपसत्पञ्चगृहीतादि भवति । "उपवसथीयेऽहन्प्रातरुदिते आदित्ये वाचं विसृजते वाचं विसृज्य पञ्चगृहीतमाज्यं गृह्णीते" ( श० ब्रा० ९।२।१।१ ) इत्येवमाद्युपक्रम्य "प्रवर्ग्योपसद्भ्यां प्रचरति" ( श० ब्रा० ९।२।१।१८ ) इति हि श्रूयते ॥ ८ ॥

## उत्तरासु च ॥ ९ ॥

उत्तरासु च बहुषूपसत्सु पञ्चगृहीताद्युत्तमोपसद्भवति ॥ ९ ॥

## सपुरीषा षट्स्वेकैका ॥ १० ॥

षट्सूपसत्सु सपुरीषा चितिरेकैका ॥ १० ॥

## द्वादशोपसत्के व्यत्यासं चितिपुरीषे ॥ ११ ॥

द्वादशोपसत्के क्रतौ व्यत्यासेन चितिपुरीषे भवतः ॥ ११ ॥

## विकर्ण्याद्येकादश्याम् ॥ १२ ॥

तत्र चैकादश्यामुपसदि विकर्ण्यादि कर्त्तव्यम् ॥ १२ ॥

## चतुर्मासोपसत्के द्वादशाहशः ॥ १३ ॥

द्वादशभिर्द्वादशभिरहोभिश्चितिपुरीषे देये । अन्त्यम्पुरीषमेकादशभिरहोभिर्विकर्ण्यादि च । पञ्चगृहीताद्युत्तमा तु स्थितैव ॥ १३ ॥

## षट्त्रिंशदहशः षट्त्रिंशदहशः सम्वत्सरे ॥ १४ ॥

एतच्च सामर्थ्यात्त्रिसंवत्सरोपसत्के द्रष्टव्यम् । संवत्सरोपसत्के हि विशेषं वक्ष्यत्येव । तथा च तिसृभिस्तिसृभिः षट्त्रिंशद्भिश्चितिपुरीषाणि भवन्ति ॥ १४ ॥

## तापश्चिते मासशश्चितिपुरीषे चतसृणाम् ॥ १५ ॥

चतसृणां चितीनां मासेन मासेन चितिपुरीषे चीयेते । मासेन चितिः मासेन पुरीषम् । एवमष्टौ मासाः ॥ १५ ॥

## पञ्चम्यामसपत्ना विराजः प्रथमेऽहन् ॥ १६ ॥

पञ्चम्यां चितौ प्रथमेऽहन्यसपत्ना विराजश्चोपधीयन्ते ॥ १६ ॥

## स्तोमभागा अन्वहम् ॥ १७ ॥

चीयन्ते । एवं नवमासा गता भवन्ति ॥ १७ ॥

मासं पुरीषं तूष्णीम् ॥ १८ ॥

एवं दशमासाः ॥ १८ ॥

नाकसत्प्रभृति मासम् ॥ १९ ॥

एवमेकादश मासा भवन्ति ॥ १९ ॥

पुरीषञ्च ॥ २० ॥

चशब्दान्मासमेव ॥ २० ॥

उत्तमयोरह्नोर्विकर्ण्यादि पूर्वे ॥ २१ ॥

अत्रोत्तमयोरह्नोर्विकर्ण्यादि पूर्वेऽहनि । पञ्चगृहीताद्युत्तमा तु स्थितैव ॥ २१ ॥

द्विसाहस्री प्रथमा लोकम्पृणानां पञ्चाशदूना ॥ २२ ॥

भवन्ति ॥ २२ ॥

उत्तराश्च ॥ २३ ॥

तत्संख्या भवन्ति ॥ २३ ॥

त्रिसाहस्र्युत्तमा ॥ २४ ॥

उत्तमा चितिः त्रिसाहस्री लोकम्पृणानां भवति ॥ २४ ॥

वक्रालिखितानां दक्षिणोत्तरे मध्य इतरासाम् ॥ २५ ॥

वक्रालिखितानां दक्षिणोत्तरे देशे उपधानम् । ऋज्वा लिखितानां च मध्ये । "अथ पञ्चमीं चितिमुपधाय त्रेधाग्निं विमिमीत" ( श० ब्रा० १०।२।१।९ ) इति प्रकृत्य एवमेव श्रुतत्वात् ॥ २५ ॥

षट्त्रिंशच्छत्या वा तृतीयाष्टादशशत्या इतराः ॥ २६ ॥

अयमपरो लोकम्पृणानां परिमाणविकल्पः ॥ २६ ॥

गार्हपत्यलोकम्पृणाः प्रथमायाम् ॥ २७ ॥

चितौ विगणयितव्याः ॥ २७ ॥

धिष्णीया उत्तमायाम् ॥ २८ ॥

अपरिमितेष्टको वा ॥ २९ ॥

अग्निर्भवति। अयं चापरिमितशब्दोऽपरिमाणवचन इत्युक्तमिष्टयाम् ॥ २९ ॥

प्रथमोत्तमयोः पादमात्रीरतिरिक्ता ॥ ३० ॥

प्रथमोत्तमयोश्चित्योर्या अतिरिक्ता सा पादमात्री भवति नातोधिकेति ॥ ३० ॥

दशगणाधिका भित्त्वोत्करे कुर्यात् ॥ ३१ ॥

गार्हपत्याहवनीयावष्टौ च धिष्ण्या इति दशगणाः। अतो या अधिकास्ता भित्त्वोत्करे कुर्यात् ॥ ३१ ॥

इति सप्तदशाध्याये सप्तमी कण्डिका ॥

८

द्वितीयायामाश्विनीः प्रतिदिशम् ॥ १ ॥

द्वितीयाग्रहणं प्रथमायाः परिसमाप्तिज्ञापनार्थम्। आश्विनीरिति च इष्टकानां संज्ञा। ताः प्रतिदिशमुपधीयन्ते ॥ १ ॥

रेतःसिग्वेलायामनूकमुत्तरेण पूर्वा द्वितीये ॥ २ ॥

लोक उपधीयते ॥ २ ॥

दक्षिणा पूर्वेण ॥ ३ ॥

अनूकमुपधीयते ॥ ३ ॥

अपरा दक्षिणेन ॥ ४ ॥

उत्तराऽपरेण ॥ ५ ॥

दक्षिणामुत्तरेण पञ्चमी ॥ ६ ॥

अर्धपद्ये चैते भवतः ॥ ६ ॥

वैश्वदेवीः ॥ ७ ॥

वैश्वदेवीरितीष्टकानां संज्ञा ॥ ७ ॥

तासां देशमाह—

पूर्वा दक्षिणेन ॥ ८ ॥

दक्षिणामपरेण ॥ ९ ॥

अपरामुत्तरेण ॥ १० ॥

उत्तरां पूर्वेण ॥ ११ ॥

एवं वैश्वदेवीभ्यः प्राणभृतः ॥ १२ ॥

उपधीयन्ते ॥ १२ ॥

प्राणभृद्भ्योऽपस्याः ॥ १३ ॥

उपधीयन्ते ॥ १३ ॥

पूर्ववत्पञ्चभ्यः सर्वासाम् ॥ १४ ॥

एतच्चाचार्येण लाघवार्थमुपदिष्टम् ॥ १४ ॥

इदानीमुपधानक्रममाह—

आश्विनीर्ध्रुवक्षितिरिति प्रतिमन्त्रम् ॥ १५ ॥

उपदधाति ॥ १५ ॥

शुक्रश्च शुचिश्चेत्यृतव्ये पूर्वयोरुपरि ॥ १६ ॥

उपधीयेते ॥ १६ ॥

उत्तराश्च ॥ १७ ॥

ऋतव्याः पूर्वयोरेवोपरि ॥ १७ ॥

वैश्वदेवीः सजूर्ऋतुभिरिति प्रतिमन्त्रम् ॥ १८ ॥

उपदधाति ॥ १८ ॥

उत्तराश्च ॥ १९ ॥

चशब्दात्प्रतिमन्त्रम् । १९ ॥

प्राणभृतः प्राणं म इति ॥ २० ॥

प्रतिमन्त्रमुपदधाति ॥ २० ॥

अपः पिन्वेत्यपस्याः ॥ २१ ॥

उपदधाति ॥ २१ ॥

वयस्याः पञ्च पञ्चानूकान्तेषु मूर्द्धाऽवय इति प्रतिमन्त्रम्॥

चतस्रः पुरस्तात् ॥ २३ ॥

उपदधाति। तासाञ्च द्वे जङ्घामात्र्यौ समलोकव्याप्त्यै द्वे चाध्यर्धे शेषा अध्यर्धा एव ॥ २३ ॥

दक्षिणत उत्तरतः पश्चात् ॥ २४ ॥

अनेन क्रमेणोपधानम् ॥ २४ ॥

दक्षिणाश्रोणेरधि लोकम्पृणाः पूर्ववत् ॥ २५ ॥

उपधीयन्ते ॥ २५ ॥

इति सप्तदशाध्याये अष्टमी कण्डिका ॥

९

तृतीयायाः स्वयमातृण्णामिद्राग्नी इति मध्ये ॥ १ ॥

उपदधाति। तृतीयाग्रहणं द्वितीयान्तप्रज्ञप्त्यर्थम्। तदन्तप्रज्ञप्तेश्च प्रयोजनं पुरीषदानादि भवति। द्वे प्रथमायां, तिस्रो मध्यमायामिति च ज्ञापनाय ॥ १ ॥

अनूकेषु पञ्च दिश्या वैश्वदेवीविद्राड्यसीति प्रतिमन्त्रम्॥

वत्करणं च रेतःसिग्वेलार्थं दक्षिणामुत्तरेण पञ्चमीत्येवमर्थं च ॥ २ ॥

विश्वकर्मेति विश्वज्योतिषमुपरि पूर्वस्याः ॥ ३ ॥

उपदधाति ॥ ३ ॥

उत्तमायां च ऋतव्ये नभश्च नभस्यश्चेति ॥ ४ ॥

उपधीयेते ॥ ४ ॥

अवकाः कूर्मवत् ॥ ५ ॥

भवन्ति ॥ ५ ॥

इषश्चोर्जश्चेत्यपरे ॥ ६ ॥

ऋतव्ये एवोपधीयेते । अर्धोत्सेधाश्चैताः, चयनयोगात् ॥ ६ ॥

पूर्वार्धे प्राणभृतो दशायुर्म इति प्रतिमन्त्रम् ॥ ७ ॥

उपदधाति ॥ ७ ॥

छन्दस्या द्वादश द्वादशाप्ययेषु मा च्छन्द इति प्रतिमन्त्रम् ॥

पक्षपुच्छाप्ययेषु छन्दस्या इष्टका द्वादश द्वादश "मा च्छन्द" ( वा० सं० १४।१८ ) इति प्रतिमन्त्रम् उपदधाति ॥ ८ ॥

वालखिल्या लोकं पश्चाच्छिष्ट्वा ॥ ९ ॥

याः पश्चादुपधीयन्ते ता वालखिल्या लोकस्य पुरस्तात् शिष्ट्वा ॥ ९ ॥

वालखिल्याः सप्त पुरस्तात् ॥ १० ॥

उपदधाति ॥ १० ॥

प्राणभृद्भ्यो वापराः ॥ ११ ॥

वा पूर्वा इति विकल्पः ॥ ११ ॥

द्वादशभ्योऽपरास्तु ॥ १२ ॥

द्वादशभ्यस्त्वपरा एव ॥ १२ ॥

मूर्धासि राडिति प्रतिमन्त्रम् ॥ १३ ॥

उपधीयन्ते ॥ १३ ॥

यजुष्मतीश्च जानन् ॥ १४ ॥

उपदधाति, "यां कां च यजुष्मतीमिष्टकां विद्यात्तां मध्यमायां चिता उपदध्यात्" ( श० ब्रा० ८।७।२।१८ ) इति वचनात् ॥ १४ ॥

उत्तराश्रोणेरधि लोकम्पृणाः पूर्ववत् ॥ १५ ॥

उपधीयन्ते ॥ १५ ॥

इति सप्तदशाध्याये नवमी कण्डिका ॥

१०

चतुर्थ्यामनूकान्तेषु दक्षिणोत्तरे द्वे द्वे ॥ १ ॥

चतुर्थीग्रहणं तृतीयान्तप्रज्ञापनाय। पुरस्तात्पश्चाच्च जङ्घामात्र्यौ। दक्षिणत उत्तराश्च पद्याः ॥ १ ॥

पूर्वाभ्यामपराश्चतुर्दश ॥ २ ॥

ताश्चार्धपद्याः ॥ २ ॥

ताभ्यः षट् ॥ ३ ॥

ताभ्योऽपराः षट् पद्याः ॥ ३ ॥

पूर्वदक्षिणेऽवान्तरदेश एके ॥ ४ ॥

चतुर्दश षट् चोपदधाति ॥ ४ ॥

उत्तरा वा दक्षिणाभ्याम् ॥ ५ ॥

उपधीयन्ते। लाघविकेन सताऽऽचार्येणैवमुपदिष्टाः ॥ ५ ॥

उपधानक्रमः पुनरिहोच्यते—

उत्तरां पूर्वयोराशुस्त्रिवृदिति ॥ ६ ॥

उपदधाति ॥ ६ ॥

दक्षिणामपरयोर्धरुण एकविंशश इति ॥ ७ ॥

दक्षिणां दक्षिणयोर्भान्तः पञ्चदश इति ॥ ८ ॥

दक्षिणामुत्तरयोर्व्योमा सप्तदश इति ॥ ९ ॥

चतुर्दश प्रतिमन्त्रं प्रतूर्त्तिरष्टादश इति ॥ १० ॥

उपदधाति ॥ १० ॥

दक्षिणां पूर्वयोरग्नेर्भाग इति ॥ ११ ॥

उत्तरामपरयोर्मित्रस्य भाग इति ॥ १२ ॥

उत्तरां दक्षिणयोर्नृचक्षसां भाग इति ॥ १३ ॥

**उत्तरामुत्तरयोरिन्द्रस्य भाग इति ॥ १४ ॥**

**षट् प्रतिमन्त्रं वसूनां भाग इति ॥ १५ ॥**

षडुपदधाति "वसूनां भाग" इति प्रतिमन्त्रम् ॥ १५ ॥

**ऋतव्ये सहश्च सहस्यश्चेति ॥ १६ ॥**

उपदधाति ॥ १६ ॥

**रेतःसिग्वेलायां च सप्तदश सर्वतो नव दक्षिणेनानूकं सृष्टीरेकया स्तुवतेति प्रतिमन्त्रम् ॥ १७ ॥**

सृष्टीरितीष्टकानाम । तत्र च दक्षिणतोऽनूक्यमभितोऽर्धपद्ये ॥ १७ ॥

**उत्तरांस्मादधि लोकम्पृणाः पूर्ववत् ॥ १८ ॥**

इति सप्तदशाध्याये दशमी कण्डिका ॥



## ११

**पञ्चम्यामन्तेष्वाश्विनीवदसपत्नाः ॥ १ ॥**

इष्टका उपधीयन्ते । अन्तग्रहणं रेतःसिग्वेलाव्युदासार्थम् । आश्विनीवदिति । द्वितीये लोके उपधानं चतसृणामपि ॥ १ ॥

**दक्षिणयोररत्न्यन्तरम् ॥ २ ॥**

पञ्चमी च पद्या भवति प्राग्लक्षणा । आश्विनीवदित्यर्धपद्ये मा भूतामिति ॥२॥

**अग्नेजातानिति प्रतिमन्त्रम् ॥ ३ ॥**

असपत्नोपधानम् ॥ ३ ॥

**पश्चिमा द्वितीया ॥ ४ ॥**

उपधीयते, "पुरस्तादुपधाय पश्चादुपदधाति" इति वचनात् ॥ ४ ॥

**विराजो दश दश प्रतिदिशं पुरस्तात्प्रथममेवश्छन्द इति प्रतिमन्त्रम् ॥ ५ ॥**

उपदधाति । बहिर्विराजत्वे च सर्वाः पद्या भवन्ति ॥ ५ ॥

गायत्र्यसपत्ना गणमध्येऽसम्भवात् ॥ ६ ॥

गायत्र्य इष्टका असपत्नाश्च विराड्गणस्य या इष्टकास्तासां मध्ये भवन्ति । न हि विराड्गणस्य बहिः सम्भवः ॥ ६ ॥

उष्णिगभ्यो वाऽपरा अर्धपद्या उपधाय ॥ ७ ॥

उष्णिह्यामन्त्रानुपहितत्वात्तल्लोकस्यापरा अर्धपद्या विराजो भवन्ति ॥ ७ ॥

असपत्ना स्पृशोऽन्यतोन्तराः ॥ ८ ॥

अन्यत्र विराजः असपत्ना संलग्ना अन्तरा उपधीयन्ते ॥ ८ ॥

सर्वतोऽषाढावेलायाः स्तोमभागा रश्मिना सत्यायेति प्रतिमन्त्रम् ॥ ९ ॥

उपधीयन्ते ॥ ९ ॥

पञ्चदश दक्षिणेनानूकम् ॥ १० ॥

तत्र चानूकमभितोऽर्धपद्ये ॥ १० ॥

वेषश्रीः क्षत्राय क्षत्रं जिन्वेति त्रिंशत्तमीमेके ॥११॥

उपदधति, एके नेति ॥ ११ ॥

पुरीषमास्वावपति मन्त्रेण वा तापश्चितस्य तूष्णीं श्रुतेः ॥

आसु स्तोमभागासु पुरीषमावपति मन्त्रेण । कुत एतत् ? तापश्चितस्य तूष्णीं श्रुतेः । तत्र हि श्रूयते—"तूष्णीं मासं स्तोमभागा पुरीषमभिहरन्ति" ( श० ब्रा० १०।२।५।१३ ) इति । तेनात्र मन्त्रवदिति गम्यते । एवं प्राप्ते वाशब्देन पुनर्व्यावर्त्यते । न वा मन्त्रेण पुरीषावापः । न ह्यत्र मन्त्रो विहित इति ।

ननु तापश्चिते तूष्णीमित्युक्तत्वात् इह मन्त्रो गम्यते, नेत्युच्यते, 'तूष्णीम्' इत्यनुवादोऽयम् । मासो हि अत्र विधीयते । तूष्णीं मासं स्तोमभागा पुरीषमभिहरन्तीति मासोऽत्र विधीयते । यदि मन्त्रनिवृत्तिर्विधीयेत, वाक्यं भिद्येत । तस्मात्तूष्णीमेवेह पुरीषावापः ॥ १२ ॥

इति सप्तदशाध्याये एकादशी कण्डिका ॥



१२

नाकसदोऽनूकेषु पूर्ववर्जमृतव्यावेलायामाश्विनीवद्राड्यसीति प्रतिमन्त्रम् ॥ १ ॥

नाकसद इष्टकाः अनूकेषूपधीयन्ते। पूर्ववर्जमृतव्यावेलायामाश्विनीवदिति दक्षिणामुत्तरेण पञ्चमी अर्धपद्ये चिते इति च गम्यते। सर्वाश्चैता अर्धोत्सेधाः, पूर्वा तु द्वितीये लोके ॥ १ ॥

पुरीषमोप्योपर्ययं पुर इति पञ्चचूडाः प्रतिमन्त्रम् ॥ २ ॥

उपदधाति। एता अप्यर्धोत्सेधाः। पुरीषावापश्चोर्ध्वं नाकसत्सु ॥ २ ॥

प्रतिदिशं यथालिङ्गम् ॥ ३ ॥

उपधानम् ॥ ३ ॥

पश्चिमोत्तमा ॥ ४ ॥

उपधीयते ॥ ४ ॥

छन्दस्यास्तिस्रस्तिस्रोऽनूकान्तेषु पुरस्ताद्गायत्रीरग्नि-मूर्धेति प्रत्यृचम् ॥ ५ ॥

छन्दस्या इष्टकास्तिस्रस्तिस्रोऽनूकान्तेषु उपधीयन्ते, पुरस्ताद्गायत्री उपदधाति "अग्निर्मूर्धा" ( वा० सं० १५।२१ ) इति प्रत्यृचम् ॥ ५ ॥

उत्तराश्च ॥ ६ ॥

चशब्दात्प्रत्यृचम् ( वा० सं १५।२३ ) ॥ ६ ॥

पुरस्तात्त्रिष्टुभो रेतःसिग्वेलायां भुवो यज्ञस्येति ॥ ७ ॥

एभिर्मन्त्रैः प्रतिमन्त्रम् ॥ ७ ॥

जगतीश्च पश्चादयमिहेति ॥ ८ ॥

चशब्दाद्रेतःसिग्वेलायामेव ॥ ८ ॥

अपरास्ताभ्योऽनुष्टुभः सखायः सं व इति ॥ ९ ॥

एभिर्मन्त्रैर्जगतीभ्योऽपरा अनुष्टुभः ॥ ९ ॥

अषाढावेलायाः पुरस्ताद् बृहतीरेना व इति ॥ १० ॥

भद्रो न इति कुकुभस्ताभ्यो बृहत्यन्तरश्रुतेर्मन्त्रक्रमेण॥११॥

"भद्रो न" (वा० सं० १५।३८) इत्येभिर्मन्त्रैर्बृहतीनां पुरस्तान्मन्त्रक्रमेण ककुभ उपदधाति। कुत एतदिति चेत्? बृहतीनामन्तरालश्रुतेः। "सोऽन्तरेण त्रिष्टुभश्च ककुभश्च बृहतीरुपदधाति" (श० ब्रा० ८।६।२।१०) इति वचनात्॥ ११॥

उद्धृतान्यपकृष्येच्छन्॥ १२ ॥

एवं हि श्रूयते—"अथैतासां ककुभां चत्वारि चत्वार्यक्षराण्यादायातिच्छन्दस्युपदधाति। सा सातिच्छन्दा एव भवति गायत्र्य इतराः सम्पद्यन्ते" (श०ब्रा०८।६।२।३) इति। एवं च सत्यपकर्षः प्राप्नोति। तथा च 'गायत्र्य इतराः सम्पद्यन्त' इति। एवं स्थिते उच्यते—'इच्छन्नपकृष्य' इति। ककुप्छन्दस्य छन्दोविषयत्वाच्चतुर्ष्वक्षरेषूद्धृतेषु ककुप्त्वमेव हीयते। अपूर्णा च ऋगर्थाभिधानसमर्था न भवति। तथा सत्यदृष्टार्थता स्यात्। न चासौ न्याय्या। अपि च चतुर्णामक्षराणामतिच्छन्दसि प्रत्यवधानेनार्थवद्वाक्यं सञ्जातम्। तदूनानां ककुभां प्रयोग इति निःप्रमाणकमेव स्यात्।

ननु च श्रूयते "गायत्र्य इतराः सम्पद्यन्ते" इति, न, अविधायकत्वात्। न ह्ययं विधिर्वर्त्तमानापदेशादितरसंस्तव इति। तस्मादनपकृष्यैवेति॥ १२॥

अपरा गायत्रीभ्य उष्णिहोऽग्ने वाजस्येति ॥ १३ ॥

प्रतिमन्त्रम् उपदधाति॥ १३॥

इदानीं ककुभामुपधानम्—

अनूकान्ते दक्षिणे पङ्क्तीरग्निं तमिति ॥ १४ ॥

उपदधाति॥ १४॥

उत्तरे पदपङ्क्तीरग्ने तमद्येति॥ १५ ॥

उपदधाति॥ १५॥

पुरीषवत्याः पूर्वामतिच्छन्दसं प्राच्यौ पुरीषसहिते भद्रा रातिर्वृत्रतूर्येऽवस्थिराग्निं होतारमिति ॥ १६ ॥

दक्षिणयोरुत्तराऽसपत्ना पुरीषवती। तस्यां हि पुरीषं विहितं 'पुरीषसहिते' इति। 'प्राच्यौ' इति प्राग्लक्षणे चैते भवतः। "भद्रारातिः" इत्येवमादिना मन्त्रेण पुरीषवत्याः पूर्वामतिच्छन्दसमुपदधाति। भद्रारातिः इत्येतानि चत्वारि चत्वार्यक्षराणीति॥ १६॥

## अग्ने त्वमित्यनूकान्तेऽपरे द्विपदाः ॥ १७ ॥

उपधीयन्ते । सर्वछन्दस्यास्वभितोऽर्धपद्ये । उष्णिहस्तु तिस्रस्तिर्यगर्धपद्याः॥१७॥

## मध्येऽष्टेष्टकं गार्हपत्यम् ॥ १८ ॥

उपदधाति । 'अष्टेष्टकम्' इत्युक्तत्वात् अधिका न भवन्ति । 'गार्हपत्यम्' इति च नामधेयात् तद्वदेवोपधानमष्टानामपि । तथा चाह–"तं वा एतैरेव यजुर्भिरेतयावृता चिनोति" (श०ब्रा०८।६।३।७) इति । इयांस्तु विशेषोऽर्धबृहतीनां स्थानेऽर्धपद्याः ॥१८॥

## पुनश्चितिं चोपरि तद्वद्येन ऋषय इति प्रत्यृचम् ॥१९॥

तस्यैव गार्हपत्यस्योपरि तद्वदेव पुनश्चितिमुपदधाति । इयांस्तु विशेषः "येन ऋषयः ( वा० सं० १५।५६ ) इति प्रत्यृचम् । अस्मिंश्च पक्षे अर्धोत्सेधा इष्टका भवन्त्युत्सेधायोगात् ॥ १९ ॥

## पुच्छसन्धावेके ॥ २० ॥

पुनश्चितिमुपदधाति, "तां हैके जघनार्धऽउपदधति" ( श० ब्रा० ८।६।३।११ ) इति श्रुतेः । अस्मिंश्च पक्षे द्विपदा अर्धोत्सेधा ॥ २० ॥

## पूर्वार्धे वा ॥ २१ ॥

पुनश्चितिमुपदध्यात् । अत्र यथा सम्भवमर्धोत्सेधाः ॥ २१ ॥

## गार्हपत्यं पुच्छसन्धौ कृत्वा ॥ २२ ॥

पुनश्चितिं पूर्वार्धे उपदधाति, तद्धैके जघनार्धे गार्हपत्यमुपदधति पूर्वार्धे पुनश्चितिम्" ( श० ब्रा० ८।६।३।१४ ) इति श्रुतेः ॥ २२ ॥

## ऋतव्ये तपश्च तपस्यश्चेति ॥ २३ ॥

## विश्वज्योतिषं परमेष्ठी त्वेति ॥ २४ ॥

## दक्षिणांसात्प्रत्यगरत्निमात्रादधि लोकम्पृणाः पूर्ववत्॥२५॥

उपदधाति ॥ २५ ॥

## प्रच्छाद्य पुरीषेण विकर्णीं स्वयमातृण्णे शर्करे सं स्पृष्टे छिद्रे प्रोथदश्व इत्युत्तरां विकर्णीमायो ष्ट इति स्वयमातृण्णाम्॥२६॥

प्रच्छाद्य पुरीषेण चितिं विकर्णीस्वयमातृण्णे उपधीयेते। संलग्ने "प्रोथदश्वः" ( वा० सं १५।६२ ) इत्युत्तरां विकर्णीमुपदधाति। स्वयमातृण्णाम् "आयोष्ट्वा" इति। 'शर्करे' 'छिद्रे' इति च विकल्पार्थमुच्यते ॥ २६ ॥

सकृन्नित्ये ॥ २७ ॥

सादनसूददोहसौ सकृदेव। चोदनाभेदादारम्भः ॥ २७ ॥

पुरुषाभिहोमवत्तिष्ठन्नग्निं प्रोक्षति हिरण्यशकलसहस्रेण शते द्वे द्वे प्रकिरति सहस्रस्येति प्रतिमन्त्रं सहस्रस्येति प्रतिमन्त्रम् ॥ २८ ॥

इति सप्तदशाध्याये द्वादशी कण्डिका।

इति श्रीकर्कोपाध्यायकृतौ कात्यायनसूत्रभाष्ये सप्तदशोऽध्यायः।



# अष्टादशोऽध्यायः

१

**शतरुद्रियहोम उत्तरपक्षस्यापरस्यां स्रक्त्यां परिश्रित्स्वर्क-पर्णेनार्ककाष्ठेन शातयन्त्सन्ततं जर्त्तिलमिश्रान्गवेधुका-सक्तूनजाक्षीरमेके तिष्ठन्नुदङ् नमस्त इत्यध्यायेन॥१॥**

'शतरुद्रियम्' इति नाम, "अथातः शतरुद्रियं जुहोति" ( श० ब्रा० ९।१।१।१ ) इति। स चोत्तरपक्षस्यापरस्यां स्रक्त्यां परिश्रित्सु कर्तव्यम्। परिश्रित आहवनीय-कार्ये। तासां समुदितानाम् नैकैकस्याः, "परिश्रित्सु जुहोति" ( श० ब्रा० ९।१।१।५ ) इति वचनात्। प्रयोजनं समुदितानां धर्मसम्बन्धः। अर्कपर्णेनार्ककाष्ठेन शातयन्, अर्कपर्णं जुह्वाः कार्ये "अर्कपर्णेन जुहोति" ( श० ब्रा० ९।१।१।४ ) इति। काष्ठमपूर्व-त्वादुपकल्पनीयम्। तेन शातयन्त्सन्ततमविच्छिन्नं जर्त्तिलमिश्रान् गवेधुकासक्तून्। "जर्त्तिलैर्जुहोति" ( श० ब्रा० ९।१।१।३ ) इति। तथा "गवेधुकासक्तुभिर्जुहोति" ( श० ब्रा० ९।१।१।८ ) इति विकल्पे प्राप्ते शाखान्तरात्समुच्चयः। तेन 'जर्त्तिलमिश्रान्' इत्युक्तम्। 'अजाक्षीरेणैके जुह्वति' शाखान्तरात् 'तिष्ठन्नुदङ् जुहोति' इति जुहोतौ सति तिष्ठतिक्रिया वाचनिकी 'उदङ्' इति च दिङ्नियमार्थम्। "नमस्ते"(१) इत्यध्यायेन मन्त्रद्रव्यं सन्ततं जुहोति(२)। बहूनि चैतानि कर्माणि श्रूयन्ते—"षष्टिश्च ह वै त्रीणि च शतान्येतच्छतरुद्रियमथ त्रिंशदथ पञ्चत्रिंशत्" ( श० ब्रा० ९।१।१।४३ ) इति। एतावन्तो द्रव्यदेवता(३) सम्बन्धाः। एवं च सति एतावन्ति चतुर्मुष्टिकानि गृह्यन्ते। अजाक्षीरपक्षे चैतावन्त एव षड्वर्गाः॥ १॥

---

१. समग्रः षोडशाध्यायोऽत्र ग्राह्यः।

२. अग्नेः प्रोक्षणानन्तरं तदानीमेव शतरुद्रियसंज्ञको होमो भवति। तस्याऽऽहवनीये प्राप्तो अपवादमाह—उत्तरपक्षस्य पश्चिमकोणे याः परिश्रितो जङ्घामात्र्यादयः सन्ति तासु कर्तव्य इति। समुदितानामेवाहवनीयकार्यत्वं नैकस्याः। अत्र जर्तिलमिश्रान् आरण्यतिलमिश्रान् गवेधुकासक्तून् कशकुसक्तून् अर्ककाष्ठेन शातयन् अनवरतं क्षारयन् अर्कपत्रेण जुहोति। अर्कपत्रं दक्षिणकरेण, अर्ककाष्ठं च वामेनादाय तद्द्रविः सन्ततं पातनीयमित्यर्थः।

३. ते च यथा—"नमस्ते" इत्यध्याये नवानुवाकाः सन्ति। 'नमस्ते' इत्यारभ्य 'सद-मित्वा हवामहे' इत्यन्तः षोडशकण्डिकात्मकः प्रथमोऽनुवाकः। 'नमो हिरण्य' इत्यारभ्य 'नमऽ आनिर्हतेभ्यः' इत्यन्तास्त्रिशत्कण्डिकात्मकाः सप्तानुवाकाः। 'द्रापे अन्धसस्पते' इत्यारभ्याष्ट-शिष्टविंशतिकण्डिकात्मकश्च चरमो नवमोऽनुवाक इति।

तत्र प्रथमानुवाकस्य प्रथमकण्डिका गायत्रीछन्दस्का, तत्र त्रयः ३ पादाः। ततस्तिस्रः कण्डिका अनुष्टुप्छन्दस्काः, तत्र प्रतिकण्डिकं चत्वारः पादा इति द्वादश १२ पादाः। ततस्तिस्रः कण्डिकाः पंक्तिच्छन्दस्काः, तत्र प्रतिकण्डिकं पञ्चपादा इति पञ्चदश १५ पादाः। ततः सप्त कण्डिका अनुष्टुप्छन्दस्काः, तत्र प्रतिकण्डिकं चत्वारः पादा इति अष्टाविंशतिः २८ पादाः। ततो द्वे कण्डिके जगतीछन्दस्के, तत्र प्रतिकण्डिकं षट् पादा इति द्वादश १२ पादाः। सर्वेषां सङ्कलने प्रथमेऽनुवाके सप्ततिः पादा भवन्ति। एकैकस्य पादस्य च साकांक्षत्वेऽपि "जहामि सेदिम्" इतिवत् 'दिवो मात्रया' इतिवच्च मन्त्रत्वं "षष्टिश्च ह वै त्रीणि" इत्यादिशतपथश्रुत्यनुरोधात्। एवमग्रेऽप्यूह्यम्। एवञ्च प्रथमेऽनुवाके सप्ततिसंख्या मन्त्राणां सिद्धयति।

ततस्त्रिंशत् कण्डिकाः सप्तानुवाकभूता यजूंषि। तत्राऽऽद्यासु दशकण्डिकासु 'नमो हिरण्यबाहवे' इत्यारभ्य 'अर्भकेभ्यश्च वो नमः' इत्यन्तासु प्रतिकण्डिकमष्ट यजूंषीति अशीति-८०र्यजूंषि। ततो 'नमस्तक्षभ्य' इत्यारभ्य 'सुधन्वने च' इत्यन्तासु दशकण्डिकासु तथैवाशीति ८०र्यजूंषि ततो 'नमः स्रुत्याय च' इत्यारभ्य 'अरुणाय च' इत्यन्तासु तिसृषु कण्डिकासु प्रतिकण्डिकमष्टेति चतुर्विंशतियजूंषि, 'नमः शङ्गवे च' इति कण्डिकायां दश, 'नमः शम्भवाय च' इत्यस्यां षट, 'नमः पार्याय च' इत्यारभ्य षट्चत्वारिंशत्तमकण्डिकास्थ 'धनुष्कृद्भ्यश्च वो नमः' इत्यन्तासु सार्धचतसृषु कण्डिकासु प्रतिकण्डिकमष्टाष्टेति सङ्कलनेऽशीति ८०र्यजूंषि। ततो 'नमो वः किरिकेभ्यः' इत्यवशिष्टकण्डिकायां चत्वारि ४ यजूंषीति सर्वेषां यजुषां सङ्कलने चतुश्चत्वारिंशदधिकशतद्वयसंख्या यजुषां त्रिंशत्कण्डिकासु संपद्यते। अत्रापि पूर्ववत् प्रत्येकं यजुषो मन्त्रत्वमिति सप्तस्वनुवाकेषु चतुश्चत्वारिंशदधिकशतद्वयसंख्या २४४ मन्त्राणां सिद्धयति।

नवमेऽनुवाके प्रथमा कण्डिका बृहती, तत्र प्रथम पादः सप्ताक्षरो द्वितीयोऽष्टाक्षरस्तृतीयो दशाक्षरश्चतुर्थो द्वादशाक्षर इति चत्वारः पादाः। ततो द्वितीया कण्डिका जगती, तृतीया अनुष्टुप्, चतुर्थी त्रिष्टुप्। चतसृष्वपि कण्डिकासु प्रतिकण्डिकं चत्वारः पादा इति षोडश १६ पादाः। पञ्चमी च यवमध्या त्रिष्टुप्, तत्र तृतीयः पाद एकादशाक्षरोऽन्ये चत्वारश्चाष्टाक्षरा इति पञ्च ५ पादाः। ततो 'विकिरिद्र' इत्यारभ्य 'नमोऽस्तु रुद्रेभ्यः' इत्येतत्प्राक्तनद्वादशकण्डिका अनुष्टुभः, प्रतिकण्डिकं च चत्वारः पादा इति अष्टाचत्वारिंशत् ४८ पादाः। सर्वेषां सङ्कलने एकोनसप्ततिः पादाः सप्तदशकण्डिकासु सिद्धयन्ति। एकैकस्य च पादस्य पूर्ववन्मन्त्रत्वम्। ततोऽवशिष्टास्तिस्रः कण्डिका यजूंषि, तत्र प्रतिकण्डिकं चतुर्दश चतुर्दश यजूंषीति द्वाचत्वारिंशद् यजूंषीति तावन्तो मन्त्राः पूर्वैः सह सङ्कलिता एकादशाधिकशतं मन्त्रा नवमेऽनुवाके सिद्धयन्तीति हरिस्वाम्यादय इति रुद्रकल्पद्रुमे स्पष्टम्।

देवयाज्ञिकादयस्तु प्रथमोऽनुवाके षट्षष्टिर्मन्त्रास्ततः सप्तस्वनुवाकेषु षट्षष्टयधिकशतद्वयं, नवमेऽनुवाके च सप्तदशसु कण्डिकासु पूर्ववदेकोनसप्ततिरन्तिमासु च तिसृषु कण्डिकासु प्रतिकण्डिकमष्टाष्टेति चतुर्विंशतिरिति गणनाप्रकारमाहुः। तत्र प्रथमेऽनुवाके पञ्चदशषोडशकण्डिकयोर्जगतीछन्दस्कयोः प्रतिकण्डिकं चत्वार एव पादाः, ततः सप्तस्वनुवाकेषु प्रथमासु पञ्चकण्डिकासु प्रतिकण्डिकं द्वादशयजूंषि, षष्ठयां च नव, सप्तमीमारभ्य सप्तदशकण्डिकासु

## त्र्यनुवाकान्ते स्वाहाकारो जानुमात्रे ॥ २ ॥

"स वै जानुदघ्ने प्रथमं स्वाहाकरोति" ( श० ब्रा० ९।१।१।११ ) इति वचनात् ॥ २ ॥

## पञ्चान्ते च नाभिमात्रे ॥ ३ ॥

पञ्चानुवाकान्ते नाभिमात्रे । चशब्दात्स्वाहाकारः ॥ ३ ॥

---

प्रतिकण्डिकमष्टाष्टेति, तत एकस्यामेकादश, ततोऽग्रिमायां षट्, ततश्चतसृषु अष्टाष्टेति, ततश्चैकस्यां द्वादश, सर्वान्ते च तिसृषु कण्डिकासु प्रतिकण्डिकमष्टाष्टेति । हिरण्यबाहवे सेनान्ये, वृक्षेभ्यो हरिकेशेभ्यः, शष्पिञ्जराय त्विषीमते, हरिकेशाय उपवीतिने, बभ्लुशाय व्याधिने, भवस्य हेत्यै, रुद्राय आततायिने, सूताय अहन्त्यै, रोहिताय स्थपतये, भुवन्तये वारिवस्कृताय, मन्त्रिणे वाणिजाय, उच्चैर्घोषाय आक्रन्दयते, कृत्स्नायतया धावते, सहमानाय निव्याधिने, निषङ्गिणे ककुभाय, निचेरवे परिचराय, वञ्चते परिवञ्चते, निषङ्गिण इषुधिमते, सृकायिभ्यो जिघाᳬसद्भ्यः, असिमद्भ्यो नक्तंचरद्भ्यः, उष्णीषिणे गिरिचराय, वृक्षेभ्यो हरिकेशेभ्यः इति द्वयोर्द्वयोरेकार्थबोधकत्वेऽपि सर्वेषामपि गुणपदत्वेनैकविशेष्यकत्वेनैकार्थबोधकत्वाविशेषाद् गुणार्थानि द्रव्यार्थानि वा सर्वाण्येव पदानि मन्त्रभेदप्रयोजकानि इति पृथगेव मन्त्रत्वमिति तदाशयः ।

तन्न, "स वा अशीत्यां च स्वाहाकरोति, अथाशीत्यामथाशीत्याम्" "अथैतानि यजूंषि जपति नमो वः किरिकेभ्यः" इति श्रुतिविरोधात् । अनया हि श्रुत्या षट्सु सप्तस्वनुवाकेषु त्रिंशत्कण्डिकात्मकेषु चतुश्चत्वारिंशदधिकशतद्वयसंख्यैव मन्त्राणामवगम्यते नतु षट्षष्टयधिक-शतद्वयसंख्येति । किञ्च हिरण्यबाहवे इत्यादीनां पृथङ्मन्त्रत्वे 'सेनान्ये' इत्यादित्र्यक्षराणामपि मन्त्रत्वं प्रसज्यते । न चेदं महीधरसंमतं "चतुरक्षरं दैवी बृहती, पञ्चाक्षरं दैवी पंक्तिः, षडक्षरं यजुर्गायत्री, सप्ताक्षरं यजुरुष्णिक्, अष्टाक्षरं यजुरनुष्टुप्, नवाक्षरं यजुर्बृहती, दशाक्षरं यजुः पंक्तिः, एकादशाक्षरं यजुस्त्रिष्टुप्, द्वादशाक्षरं यजुर्जगती, चतुर्दशाक्षरं सामोष्णिगेकमेव किरिकेभ्य इति" इत्युक्त्वा '-एतान्येवात्र छन्दांसि" इत्युक्त्या इतोऽन्येषामस्वीकारात् ।

यदपि कात्यायनः सर्वानुक्रमे "नमो वः किरिकेभ्य इत्यग्निवायुसूर्यहृदयभूताः पञ्च व्याहृतयो बहुरुद्रदेवत्या" इति एकाधिकां संख्यामाह । तदपि मन्त्रविभागप्रकारान्तरपरतया कथञ्चिन्नेयम् । "एते हीदᳬसर्वं कुर्वन्ति देवानाᳬ हृदयेभ्य इति" इति श्रुत्या 'देवानां हृदयेभ्य' इत्यस्य सर्वत्रानुषङ्गबोधनेन यजुश्चतुष्कस्यैव लाभादिति सूत्रभाष्यकाराः । चतुर्णा-मेवादौ नमःशब्दाद्यजुश्चतुष्कत्वमिति संहिताभाष्यकाराः ।

कर्मसु सर्वत्र मन्त्रमय्यो देवता इत्यन्यत्र निर्णीतम् । तेन प्रकृते उक्तविधया संपन्नेभ्यः पञ्चविंशत्यधिकचतुःशतमन्त्रेभ्यः प्रतिपादितानां तत्संख्याकदेवतानां सम्बन्धा अभिहिता भवन्तीत्यर्थः ।

प्राञ्च प्रत्यवरोहेभ्यो मुखमात्रे ॥ ४ ॥

स्वाहाकारः॥ ४ ॥

प्रतिलोमं प्रत्यवरोहाञ्जुहोति प्रमाणेषु नमोऽस्त्विति प्रतिमन्त्रम् ॥ ५ ॥

प्रातिलोम्यं च प्रथमं मुखमात्रे, ततो नाभिमात्रे, पुनर्जानुमात्रे, इति। प्रत्यवरोहाश्च "नमोऽस्तु रुद्रेभ्य इति ॥ ५ ॥

हवने प्रार्थयति चात्वाले ॥ ६ ॥

अर्कपर्णार्ककाष्ठे इत्यर्थः। आगन्तुत्वाच्च कर्मापवर्गान्ते। ६ ॥

इत्यष्टादशाध्याये प्रथमा कण्डिका।



२

चित्यं परिषिञ्चत्यग्नीद्दक्षिणे निकक्षेऽद्रिं कृत्वाऽश्मन्नूर्जमित्यद्रेरधि ॥ १ ॥

चित्यमग्निमग्नीत्परिषिञ्चेद्दक्षिणे निकक्षेऽद्रिं कृत्वा (१) "अश्मन्नूर्जम्" (वा० सं० १७।१) इत्यनेन मन्त्रेणाद्रेरारभ्य ॥ १ ॥

अश्मंस्ते क्षुदित्यद्रौ कुम्भं कृत्वा मयि त ऊर्गित्यादाय॥२॥

एवं द्विरपरम् ॥ ३ ॥

परिषिञ्चति ॥ ३ ॥

तावत्प्रतिपर्येति ॥ ४ ॥

"निधायोदहरणं, त्रिर्विपल्ययते" (श०ब्रा० ९।१।२।६) इति श्रुतेः ॥ ४ ॥

कुम्भेऽद्रिं कृत्वा दक्षिणस्यां वेदिश्रोणौ प्राङ् तिष्ठन् दक्षिणास्यति यं द्विष्म इति ॥ ५ ॥

१. दक्षिणपक्षस्यापरसन्धिसमीपवर्तिन्यात्मभागेऽद्रिं कृत्वा अश्मानं निधाय उदकुम्भमादाय अद्रेरारभ्य सपक्षपुच्छमग्निं प्रदक्षिणं जलधारया समन्तादग्नीन् सिञ्चति।

अनेन मन्त्रेण ॥ ५ ॥

## अभिन्ने भेत्तवै ब्रूयात् ॥ ६ ॥

यदि न भिद्यते 'भेत्तवै' ब्रूयादिति । तच्च प्रतिप्रस्थाता प्रैषे । भेदने तु प्रधानत्वादध्वर्युः ॥ ६ ॥

अत्रैतच्चिन्त्यते । किं कुम्भविषयमेतद्भेदनम्, उताद्रिविषयमिति । किं तावत्प्राप्तम् ? सूत्रेणैवोपक्रमः—

## कुम्भे भेदनः सामर्थ्यात् ॥ ७ ॥

कुम्भविषयमेतद्भेदनम् नाद्रिविषयम् । कुत एतत् ? एवमेतद्वचनं समर्थं भवति "यदि न भिद्येत भेत्तवै ब्रूयात्" ( श०ब्रा ९।१।२।१२ ) इति । अद्रौ त्वसमर्थमेव । न हि तस्य कठिनत्वाद्भेदनमाशङ्क्यते ॥ ७ ॥

एवं प्राप्त आह—

## अश्मनि वाऽर्थवादात् ॥ ८ ॥

वाशब्दः पक्षव्यावृत्तौ । अश्मनि वैतद्भेदनं प्रतिपत्तव्यम । न कुम्भविषयत्वम् । कुत एतत् ? अर्थवादात्—"यदा ह्येव स भिद्यतेऽथ तां शुगृच्छति यं द्वेष्टि" ( श० ब्रा० ९।१।२।१२ ) इति । सा च शुगश्मनि निहिता "तदश्मनि शुचं दधाति" इति ॥ ८ ॥

## वाच्यत्वाच्च ॥ ९ ॥

अपिचाश्मन्येव वाच्यं भेदनं न कुम्भे, स ह्यश्मगर्भः क्षिप्तोऽवश्यमेव भिद्यत इति ॥ ९ ॥

## अनपेक्षमेत्योदङ्प्राङ् तिष्ठन्नात्मन उपरि प्रापणान्ते जपतीमा म इति ॥ १० ॥

आत्मा चात्राग्न्यात्मोच्यते(१) ॥ १० ॥

## मण्डूकावकावेतसशाखा वेणौ बद्ध्वाऽवकर्षति मन्त्रकृष्टवत्समुद्रस्य त्वेति प्रत्यृचम् ॥ ११ ॥

---

१. ततः कुम्भनिरसनानन्तरं यजमानोऽपश्यन्नेत्य दक्षिणाश्रोणिसमीपे उदङ् प्राङ् इत्यैशानदिगभिमुखस्तिष्ठन् अग्नेरुपरि हस्तौ प्रलम्बौ प्रसार्य प्रापणान्ते चयनप्रदेशं स्प्रष्टुं यत्र शक्नोति तत्र स्पृष्ट्वा जपति कण्डिकाद्वयमित्यर्थः ।

मण्डूकादीन्वेणौ बद्ध्वाऽग्निं विकर्षति मन्त्रकृष्ट(१)वत्क्रमेण "समुद्रस्य त्वा" ( वा० सं० १७।४ ) इति प्रत्यृचम् ॥ १ ॥

## पक्षपुच्छानि चाभ्यात्ममग्ने पावकरोचिषेति ॥ १२ ॥

अग्न्यात्मानमाभिमुख्येन पक्षपुच्छानि कर्षति "अग्ने पावकरोचिषा" ( वा० सं० १७।८ ) इति प्रत्यृचमेव ॥ १२ ॥

## अन्त्यमुत्तरम् ॥ १३ ॥

अन्त्यमुत्तरं पक्षम् ॥ १३ ॥

इत्यष्टादशाध्याये द्वितीया कण्डिका ॥



३

वेणुमुत्करे कृत्वा चित्यमालभ्य तिष्ठन्—

## हिङ्कृत्य साम गायति ॥ १ ॥

सामगानमुद्गातुः स्यात्, समाख्यानात् । अध्वर्योर्वा वचनसामर्थ्यात् । "नान्योऽध्वर्योर्गायेत्" ( श० ब्रा० ९।१।२।४३ ) इति समाख्यानमप्यध्वर्योरेव । विधानानुसारिणी हि समाख्या । विधानं चाध्वर्यववेदविहितम्-"अथैनं सामभिः परिगायति" ( श० ब्रा० ९।१।२।३२ ) इति । एव च 'नान्योऽध्वर्योर्गायेत् इत्यनुवाद एव ॥ १ ॥

## पुरस्ताद्गायत्रम् ॥ २ ॥

साम गायति ॥ २ ॥

## दक्षिणे पक्षे रथन्तरम् ॥ ३ ॥

## उत्तरे बृहत् ॥ ४ ॥

## आत्मनि वामदेव्यम् ॥ ५ ॥

## पुच्छे यज्ञायज्ञियम् ॥ ६ ॥

---

१. मन्त्रकृष्टवदिति दक्षिणश्रोणेरारभ्य दक्षिणांसं यावत्, दक्षिणश्रोण्याद्युत्तरश्रोण्यन्तम्, उत्तरश्रोणेरुत्तरांसपर्यन्तम्, उत्तरांसाद्दक्षिणांसं च यावद् भूमिसंलग्नेन वेणुना क्रमेण चतुर्भिर्मन्त्रैः कर्षति ।

दक्षिणे निकक्षे प्रजापतिहृदयम् ॥ ७ ॥

अग्न्युक्थꣳ शꣳसेत्याह ॥ ८ ॥

होतुः प्रेषणम् ॥ ८ ॥

औपवसथ्ये विसृष्टवाचि पञ्चगृहीते हिरण्यशकला-न्नास्यति पञ्च ॥ ९ ॥

"उपवसथीयेऽहन्प्रातरुदित आदित्ये वाचं विसृजते" ( श० ब्रा० ९।२।१।१ ) इति प्रकृत्यैवं श्रुतत्वात् ॥ ९ ॥

दधि मधु घृतं पात्र्याꣳ समासिच्य स्थाल्यां वा महा-मुख्यां कुशमुष्टिं चोपर्युभयमादाय चित्यारोहणं नमस्त इति ॥ १० ॥

दध्यादीन् पात्र्यां प्रास्य महामुख्यां वा स्थाल्यां तदुपरि च कुशमुष्टिमुभयं गृहीत्वा चित्यमारोहेत् "नमस्ते ( वा० सं० १७।११ ) इत्यनेन मन्त्रेण ॥ १० ॥

स्वयमातृण्णायां पञ्चगृहीतं जुहोति नाभिवद्धिरण्या-दर्शनं च नृषदे वेडिति प्रतिमन्त्रम् ॥ ११ ॥

स्वयमातृण्णायां पञ्चगृहीतं जुहोति नाभिव्याघारणवत्(१) "नृषदे वेट्" ( वा० सं० १७।१२ ) इति प्रतिमन्त्रम् । हिरण्यदर्शनं च न भवति(२) ॥ ११ ॥

समासिक्तान्कुशैः प्रोक्षति सपरिश्रितकं बाह्येन च ये देवा इति ॥ १२ ॥

"अथैनꣳ समुक्षति" ( श० ब्रा० ९।१।१।११ ) इति प्रकृत्य "सर्वतः समुक्षत्यपि बाह्येन परिश्रित" ( श० ब्रा० ९।२।१।१२ ) इति श्रुतेः ॥ १२ ॥

प्राणदा इत्यवरोहति ॥ १३ ॥

अवतरति ॥ १३ ॥

---

१ दक्षिणांसश्रोणिद्वयोत्तरांसमध्येष्वित्यर्थः ।

२. नाभिव्याघारणे हिरण्यं पश्यन् जुहोति, अत्र तु नेति भावः ।

## एवमारोहणावरोहणमतः ॥ १४ ॥

अत ऊर्ध्वमेवमेवाऽऽरोहणावरोहणे(१) कार्ये ॥ १४ ॥

## उपसदन्ते प्रवर्ग्योत्सादनं यथोक्तमग्नौ परिष्यन्दे वा॥१५॥

वाशब्दो विकल्पार्थः। विकल्पेन हि श्रवणमत्र। परि समन्तादापः स्यन्दन्ते यत्र प्रदेशे स परिष्यन्दः ॥ १५ ॥

## स्वयमातृण्णास्पृष्टं प्रथमम् ॥ १६ ॥

अग्निपक्षे—"स्वयमातृण्णया संस्पृष्टं प्रवर्ग्यमुत्सादयति" ( श० ब्रा० ९।२।१।२३ ) इति वचनात् ॥ १६ ॥

## पञ्चगृहीतं जुहोत्यग्निस्तिग्मेनेत्यृचा षोडशगृहीतार्ध-मनुवाकशेषेण ॥ १७ ॥

पुनः षोडशगृहीतं गृहीत्वा तदर्धमनुवाकशेषेणाष्टाभिर्ऋग्भिर्जुहोतीति ॥ १७ ॥

## चक्षुषः पितेत्यपरमनुवाकेन ॥ १८ ॥

अपरमर्द्धं "चक्षुषः पिता" ( वा० सं० १७।२५ ) इत्यनुवाकेन अष्टाभिर्ऋग्भिः। सर्वाणि चैतानि शालाग्नौ जुहोति ॥ १८ ॥

## आर्द्रौदुम्बरीघृतोषितास्तिस्र उदेनमित्यादधाति प्रत्यृचम् ॥ १९ ॥

औदुम्बरीः समिधः घृते न्युत्ताः सर्वां रात्रिमुषिताः तिस्र "उदेनम्" ( वा० सं० १७।५० ) इत्यादधाति प्रत्यृचम् ॥ १९ ॥

वैकृतावसरे प्राकृतानुवृत्त्यर्थमाह—

## अग्निं प्रणयति ॥ २० ॥

तत्र विशेषमाह—

## प्रेष्यत्युद्यच्छेध्ममुपयच्छोपयमनीः ॥ २१ ॥

अयं च प्रेषः प्रतिप्रस्थातुः। तदर्थोऽध्वर्योः ॥ २१ ॥

---

१. अतः परमस्याग्ने रोहणमवतरणं च एवमेव सर्वैः कर्तव्यम्।

अग्नये प्रह्रियमाणायानुब्रूह्यग्नीदेकस्फ्ययानूदेहि ब्रह्मन्-प्रतिरथं जपेति ॥ २२ ॥

च प्रेष्यति ॥ २२ ॥

त्रिरुक्तायामुद्यम्योदुत्वेति ॥ २३ ॥

चित्यं गच्छन्ति पञ्च दिश इति ॥ २४ ॥

त्रिरुक्तायां होत्रा प्रथमायामृचि 'उदुत्वा' इत्युद्यम्याग्निं चित्यं प्रति गच्छन्ति "पञ्च दिश" इत्यनेन मन्त्रेण ॥ २४ ॥

आग्नीध्रदेशाद्दक्षिणं पृष्ठ्यासहितं पृश्न्यश्मानमुपदधाति विमान इति ॥ २५ ॥

अनेन मन्त्रेण ॥ २५ ॥

न नित्ये ॥ २६ ॥

नित्ये सादनसूददोहसौ न भवतः । इष्टकासंस्तवात्प्राप्तयोर्निषेधः ॥ २६ ॥

निधायैनमतिक्रामन्तीन्द्रं विश्वा इति ॥ २७ ॥

"तं निधाय यथा न नश्येदथोपायन्ति" ( श० ब्रा० ९।२।३।१९,२० ) इति वचनात् ॥ २७ ॥

इत्यष्टादशाध्याये तृतीया कण्डिका ॥

४

क्रमध्वमग्निनेति चित्यमारोहन्ति ॥ १ ॥

अतश्च 'नमस्ते' ( वा० सं० १७।११ ) इत्ययं निवर्त्तते ॥ १ ॥

स्वयमातृण्णामध्यग्निं धारयञ्छुक्लवत्सापयसाऽभिजुहोति कृष्णाया दोहनेन स्वयमातृण्णामवसिञ्चन्नक्तोषासेति ॥२॥

स्वयमातृण्णाया उपरि धारयन्नग्निं कृष्णाया गोः शुक्लवत्सायाः पयसा दोहनेनाभिजुहोति "नक्तोषासा" ( वा० सं० १७।७० ) इत्यनेन मन्त्रेण स्वयमातृण्णा-

मवसिञ्चन्। अयं जुहोतिः, ततश्च साम्नाय्यधर्माः प्रवर्तन्ते जुहोतित्वान्मन्त्रवर्जम्। दोहनस्य जुहूकार्यापत्तिरतश्च तद्धर्मा भवन्ति। महावेदेश्च सम्मर्शनान्ता धर्माः कृताः, तत उत्तरपरिग्रहाद्यत्र कर्तव्यम्। शतरुद्रिये तु खननादि ॥ २ ॥

पैतुदारवाद्यत्रैके ॥ ३ ॥

एके प्राङ् 'मयि गृह्णामि' इति जपात्। तत्र ह्युक्तमाचार्येण "उत्तरवेदिप्रोक्षणाद्या सम्भारनिवपनात्कृत्वा" ( का० श्रौ० १७।३।२६ ) इति। यद्येवमिह कस्मात्सम्भारनिर्वापः? अग्न्यर्थत्वात्। यद्येवमिहैव सम्भारनिर्वापः ॥ ३ ॥

तस्यामग्निं निदधाति सुपर्णोऽसीति वषट्कारेण ॥ ४ ॥

तस्यां स्वयमातृण्णायां "सुपर्णोसि" (वा० सं० १७।७२) इत्यनेन मन्त्रेण वषट्कारान्तेनाग्निं निदधाति ॥ ४ ॥

नित्ये च ॥ ५ ॥

अत्र भवतः। इष्टकासंस्तवादग्नेः ॥ ५ ॥

समिदाधानं शामीलीवैकङ्कत्यौदुम्बर्यस्ताः सवितुरिति प्रत्यृचमुत्तमा सकर्णका ॥ ६ ॥

समिद्भवति ॥ ६ ॥

कर्णकाऽभावे दधिद्रप्साक्ताः ॥ ७ ॥

कर्तव्या ॥ ७ ॥

स्रुवाहुती जुहोत्यग्ने तमद्येति च प्रत्यृचम् ॥ ८ ॥

पूर्णाहुतिं च सप्त त इति ॥ ९ ॥

जुहोति ॥ ९ ॥

तिष्ठन्त्समिधः सर्वत्र मध्ये ॥ १० ॥

सर्वत्रग्रहणात् समिदुद्देशेन विहितत्वात्तिष्ठतिक्रिया सर्वत्र भवति। समिदाधानं ग्रहणाहुत्योर्मध्ये, "अन्तेष्वाहुतीः" ( का० श्रौ० १८।४।११ ) इति सूत्रितत्वात् ॥ १० ॥

अन्तेष्वाहुतीरुपविश्य ॥ ११ ॥

तिष्ठतिक्रियानन्तर्यात् 'उपविश्य' इत्युच्यते ॥ ११ ॥

## अत्र पञ्चम्याः सप्तर्चोपस्थानꣳ सर्वोपधानात् ॥ १२ ॥

अस्मिन्नवसरे पञ्चम्याश्चितेः सप्तर्चोपस्थानं कर्तव्यम् । अत्र हि सकला पञ्चमी चितिरुपहिता भवति ॥ १२ ॥

## धिष्ण्यान्वा चित्वोत्तमसंयोगात् ॥ १३ ॥

अथवा धिष्ण्यांश्चित्वा सप्तर्चोपस्थानं कर्त्तव्यम् । कुत एतत् ? धिष्ण्यानां हि पञ्चम्याश्चितेः अन्तरभावः । तस्मात्तत्रैव युक्तमुपस्थानम् ॥ १३ ॥

## अभिमृशेदिच्छन्त्सम्वत्सरोऽसीति ॥ १४ ॥

अग्निम् ॥ १४ ॥

## एवं यथाचिति ॥ १५ ॥

सम्मर्शनं कर्तव्यम् । यन्नामा चितिस्तदभिधायकेन ( वा० सं० २७।४५ ) मन्त्रेण ॥ १५ ॥

## वैश्वानरमारुतां निर्वपति यथोक्तम् ॥ १६ ॥

वैश्वानरश्च मारुताश्च वैश्वानरमारुताः तान्निर्वपति । यथोक्तग्रहणाच्च वैश्वानरो यजतिः, मारुता जुहोतयः । तत्कथम् ? वैश्वानरं हि प्रकृत्याह—"तं वा एतं पुरोऽनुवाक्यवन्तं याज्यवन्तं वषट्कृते स्रुचा जुहोति" ( श० ब्रा०.९।३।१।१६ ) इति । यजतीनां ह्येष धर्मः । पुरोऽनुवाक्याद्यभिधानाच्च यावदुक्तं स्यात् । तथा मारुतान्प्रकृत्याह—"हस्तेनैवे-तरानासीनः स्वाहाकारेण" ( श० ब्रा० ५।३।१।१६ ) इति । जुहोतीनां ह्ययं धर्मः । कपालसंख्यार्थं च यथोक्तग्रहणम् । वैश्वानरस्य हि द्वादशकपालता पठ्यते मारुतानां सप्तकपालता ॥ १६ ॥

## वैश्वानरमधिश्रित्य दक्षिणोत्तरौ मारुतौ ॥ १७ ॥

अधिश्रयति । "अवरोक्तमुत्तरम्" (का०श्रौ०१।१०।५) इत्यस्यापवादोऽयम् ॥ १७ ॥

## पश्चाच्च संकृष्टतरौ ॥ १८ ॥

चशब्दाद्दक्षिणोत्तरावधिश्रयति ॥ १८ ॥

## एवमपरौ ॥ १९ ॥

द्वावधिश्रयतीति शेषः । एवंशब्देन च दक्षिणोत्तरता संकृष्टतरता च लभ्यते ॥१९॥

## पश्चादरण्येऽनूच्यम् ॥ २० ॥

अरण्येऽनूच्यं च पुरोडाशं पश्चादधिश्रयति ॥ २० ॥

## होमासादनयोश्च ॥ २१ ॥

चशब्दादयमेव विधिः ॥ २१ ॥

## पुच्छादपरान् कुशानास्तीर्याहवनीयसहितान्वा तत्रासादनम् ॥ २२ ॥

कुशानास्तीर्येति प्राकृतमेव परिस्तरणमनूद्यते । प्रदेशविधानाय 'पुच्छादपरान्' इति । कुत एतत् ? सपुच्छोऽयमाहवनीय इति । प्रकृतौ चाहवनीयमपरेण स्तरणं वृत्तमिहापि तथैव कर्त्तव्यम् । आहवनीयसहितान्वेति । कुत एतत् ? आहवनीयशब्दो ह्यग्न्यभिधायक उपचारवृत्त्या स्थले वर्तते । तस्मादाहवनीयसहितानेवेत्यवधार्यते । तत्रासादनं कर्तव्यम् ॥ २२ ॥

## वैश्वानरेण प्रचर्य सर्वहुतेन हस्तेन मारुतान् जुहोत्युपविश्य वैश्वानरे वा वैश्वानरं पृथुं कृत्वा शुक्रज्योतिरिति प्रतिमन्त्रम् ॥ २३ ॥

मारुतान् जुहोति । विकल्पश्चायं वैश्वानरे होमोऽग्नौ वेति ॥ २३ ॥

## विमुखेनारण्येऽनूच्यम् ॥ २४ ॥

अरण्येऽनूच्यं पुरोडाशं विमुखेन जुहोति । विमुखश्चाध्येतॄणां प्रसिद्धः "उग्रश्च भीमश्च" ( वा० सं० ३९।७ ) इति ॥ २४ ॥

## इन्द्रं दैवीरिति जपति ॥ २५ ॥

आगन्तुत्वादन्ते ॥ २५ ॥

## इमꣳ स्तनमिति वाचयति वा ॥ २६ ॥

जपति वेति विकल्पः । वैश्वानरमारुतानामेकतन्त्रम् । तत्र च यः साधारणपदार्थः स मन्त्रवान्कर्तव्यः । मारुतानां हि पदार्थमात्रेण प्रयोजनम् । समन्त्रकोऽपि पदार्थः पदार्थ एवेति ॥ २६ ॥

इत्यष्टादशाध्याये चतुर्थी कण्डिका ।

५

## वसोर्धारां जुहोत्यौदुम्बर्या पञ्चगृहीतꣳ सन्ततं यजमानोऽरण्येऽनच्येऽग्निप्राप्ते वाजश्चम इत्यष्टानुवाकेन ॥ १ ॥

'वसोर्धारा' इति कर्मनामधेयम्। तच्च समुदायस्य। एवं हि श्रूयते "षष्टिश्च ह वै त्रीणि च शतान्येषा वसोर्धाराऽथ षडथ पञ्चत्रिंꣳशत्(१)" ( श० ब्रा० ९।३।३।१८ ) इति। अत्र च यदन्तरितं तस्यावृत्तिर्भवति। औदुम्बर्या स्रुचा पञ्चगृहीतमाज्यं जुहोति अग्नौ प्राप्ते "वाजश्चमे" ( वा० सं० १८।१ ) इत्यष्टानुवाकेन। सन्ततमिति च द्रव्यसन्ततं मन्त्रसन्ततं च। अत्र च श्रूयते—"अष्टासु कल्पयति दशसु कल्पयति" ( श० ब्रा० ९।३।२।८ ) इत्येवमादिना वाक्यपरिसमाप्तिः। प्रतिवाक्यं च स्वाहाकारकरणम्। अत्र च देवतापदान्तराये पञ्चगृहीतमेव च सकलवाक्येन होतव्यं न ह्यन्यथेतद्दृष्टमिति ॥ १ ॥

## हुत्वा स्रुक्प्रासनम् ॥ २ ॥

तच्चाग्नौ। एवं हि श्रूयते–"अत्र ताꣳ स्रुचमनुप्रास्यति यदत्राज्यलिप्तं तन्नेद्बहिर्द्धाग्नेरसत्" ( श० ब्रा० ९।३।३।१४ ) इति ॥ २ ॥

## अग्नये स्वाहेति षट् पार्थानि जुहोति ॥ ३ ॥

तानि च राजसूयिकानि, तत्राम्नानात्। इह च श्रूयते–"स वै राजसूयस्य पूर्वाणि जुहोति" ( श० ब्रा० ९।३।४।८ ) इति ॥ ३ ॥

## वाजप्रसवीयानि वप्रावत्सम्भृत्य चमसवत्स्रुवेण वाजपेयिकानि वाजस्येममिति ॥ ४ ॥

'वाजप्रसवीयानि' इति नामधेयं, विदुध्यर्थवादमन्त्रत्वासम्भवात् समुदायनामधेयञ्चैतत्। सप्त ह्येतानि कर्माणि वाजपेयिकानि। प्रयोजनमन्यतमाऽपाये तस्यैवावृत्तिः। तानि च वप्रावत्सम्भृत्य चमसवत्स्रुवेणवप्राशब्देनाग्निक्षेत्रकेदाराभिधानम्। तद्वदत्रापि सम्भृत्य चमसवत् चतुःस्रक्तिना उदुम्बरेण स्रुवेण वाजपेयिकानि "वाजस्येमम्"

१. अनया श्रुत्या एकाधिकशतचतुष्टयसंख्या वसोर्धाराहुतीनां गम्यते। ताश्च यथा–'वाजश्च मे' इत्यारभ्य 'वेट्स्वाहा' इत्यन्तमेकोनत्रिंशत्कण्डिका अष्टानुवाकेषु वर्तन्ते। तत्र आद्यासु एकविंशतिकण्डिकासु चतुर्थीपञ्चदश वर्जितासु प्रतिकण्डिकं त्रयोदश यजूंषि, चतुर्थ्यां पञ्चदश, पञ्चदश्याञ्च नवेति। ततः द्वादश, षट्, त्रयस्त्रिंशत्, त्रयोविंशतिः, एकादश, नव, चतुर्दश, एकविंशतिरिति क्रमेण द्वाविंशतिकण्डिकामारभ्य एकोनत्रिंशत्कण्डिकापर्यन्तं यजूंषि वर्तन्ते। सर्वाणि मिलित्वा एकाधिका चतुःशती संख्या सम्पद्यते। प्रत्येकं यजुषो मन्त्रत्वं बोद्धव्यम्।

( वा० सं० ९।२३ ) इति प्रतिमन्त्रं जुहोति । वाजपेयिकग्रहणाच्च अप्पयसी प्रक्षिप्येते । एवं हि तत्राचार्येणाभिहितम्—"औदुम्बरे पात्रेऽप आसिच्य पयश्च सप्तदशान्नान्यावपति यावस्मृति वा" ( का० श्रौ० १४।४।३४,३५,३६ ) इति । एवं च सति सप्त षड्वर्गाः सप्त चतुर्मुष्टिकान्युदादेयान्यापश्चेति ॥ ४ ॥

## आग्निकानि च वाजस्य न्विति ॥ ५ ॥

आग्निकानि च वाजप्रसवीयानि "वाजस्य ( वा० सं० १८।३० ) नु" इति प्रतिमन्त्रं जुहोति । आग्निकेष्वपि सप्तैव सर्वौषधस्य चतुर्मुष्टिकानि ॥ ५ ॥

## स्रुवं प्रास्य परिश्रित्स्पृक्कृष्णाजिनमास्तीर्य पुच्छादुत्तरतः शेषेऽपः कृत्वा ॥ ६ ॥

'अभिषिञ्चति' इति सूत्रशेषः । स्रुवमग्नौ प्रास्य तदन्ते परिश्रित्संलग्नं पुच्छादुत्तरतः कृष्णाजिनमास्तीर्य हुतशेषेऽपः कृत्वा ॥ ६ ॥

कुत एतत् ?—

## अभिषेकसामर्थ्यात् ॥ ७ ॥

अन्यथाऽभिषेक एव न भवति ( १ ) ॥ ७ ॥

## क्षीरोदके वा(२) वाजपेयिकानीति श्रुतेः ॥ ८ ॥

वा नैवापामासेकः येन क्षीरोदके वाजपेयिकशेषे विद्येते एव । अतश्चाभिषेकोऽपि सम्भवत्येव ॥ ८ ॥

## तत्राभिषिच्यते ब्रह्मवर्चसकामश्श्रित्यन्वारब्धो देवस्य त्वेति ॥

तत्र कृष्णाजिनेऽभिषिच्यते यजमानश्श्रित्यन्वारब्धो "देवस्य त्वा ( वा० सं० १८।३७ ) इत्यनेन मन्त्रेण । ब्रह्मवर्चसकामस्य च कृष्णाजिनेऽभिषेकः, "कृष्णाजिने ब्रह्मवर्च्चसकामम्" ( श० ब्रा० ९।३।४।१४ ) इति वचनात् ॥ ९ ॥

## तिष्ठन्बुभूषुः ॥ १० ॥

---

१. अभिषेकस्य द्रवद्रव्यसाध्यत्वात्केवलेन सर्वौषधशेषेण तदसम्भवात्सामर्थ्याच्छेषेऽपामासेकं कृत्वा सोदकेन शेषेणाभिषेकः कर्तव्य इति पूर्वः पक्षः ।

२. अथ सिद्धान्तः—वाशब्दः पूर्वपक्षनिरासार्थः नैव शेषेऽपामासेकः कार्य इति । यतः शेषमध्ये क्षीरोदके विद्येते । कुतः ? "वाजपेयिकानि" इति श्रुतेः । अत्र वाजपेयिकानि वाजप्रसवीयानि जुहोतीति श्रवणात् । तत्र च नामधेयात्क्षीरोदके स्त एवेति सांप्रदायिकाः । "औदुम्बरे पात्रेऽप आसिच्य पयश्च" ( का० श्रौ० १४।४।३४ ) इत्युक्तेरिति महीधरः ।

भूतिमिच्छंस्तिष्ठन्नभिषिच्यते ॥ १० ॥

**भूत उपविष्टः ॥ ११ ॥**

प्राप्तभूति(१)रुपविष्टोऽभिषिच्यते ॥ ११ ॥

**बस्तचर्मणि पुष्टीच्छुः ॥ १२ ॥**

पुष्टिमिच्छन्बस्तचर्मण्य(२)भिषिच्यते ॥ १२ ॥

**उभयेच्छुरुभयोः ॥ १३ ॥**

यो नाम पुष्टिब्रह्मवर्चसे उभेऽपीच्छति स उभयोश्चर्मणोर्व्यवस्थितोऽभिषिच्यते ॥ १३ ॥

**एके दक्षिणतश्चित्ये वा ॥ १४ ॥**

स्थितमभिषिञ्चति, "तꣳ हैके दक्षिणतोऽग्नेरभिषिञ्चन्ति" (श०ब्रा०९।३।४।११) "आहवनीय उ हैकेऽभिषिञ्चन्ति" ( श०ब्रा०९।३।४।१२ ) इति च श्रुतेः ॥ १४ ॥

**प्रास्य चमसमिन्द्राय स्वाहेति षड् जुहोति प्रतिमन्त्रम् ॥ १५ ॥**

अग्नौ प्रास्य चमसम् "इन्द्राय स्वाहा" ( वा० सं० १०।५ ) इति षट् पार्थानि जुहोति। एतान्यपि राजसूयिकानि। ततश्च पूर्वपार्थाज्यसंस्कारोऽत्रापि भवति ॥ १५ ॥

**द्वादशगृहीतं विग्राहं जुहोत्यृताषाडिति प्रतिस्वाहाकारꣳ राष्ट्रभृतो वाट्कारान्तः पूर्वः पूर्वो मन्त्रः ॥ १६ ॥**

द्वादशगृहीतमाज्यं विगृह्य जुहोति "ऋताषाड्" इति प्रतिस्वाहाकारं राष्ट्रभृत्संज्ञकान्होमान्। तत्र च वाट्कारान्तः पूर्वः पूर्वो मन्त्रो भवति। उत्तरस्तु स्वाहाकारान्तः। एवं ह्यत्र श्रूयते "मिथुनानि जुहोति" ( श० ब्रा० ९।४।१।५ ) गन्धर्वाप्सरोऽभ्यो जुहोति" ( श० ब्रा० ९।४।१।४ ) "पुꣳसे पूर्वस्मै जुहोत्यथ स्त्रीभ्यः, एकस्माऽ इव पुꣳसे जुहोति, बह्वीभ्य इव स्त्रीभ्य, उभाभ्यां वषट्कारेण च स्वाहाकारेण च पुꣳसे जुहोति, स्वाहाकारेणैव स्त्रीभ्यः" ( श० ब्रा० ९।४।१।६ ) इति। एवं श्रवणे सति समाम्नायपरिपठिते मन्त्रे विभागः कर्त्तव्यः—यानि पुल्लिङ्गानि पदानि तान्येकवाक्यतामुपनेयानि। एवं स्त्रीलिङ्गान्तान्यपि। "ऋताषाड्तधामाग्निर्गन्धर्वः स न इदं ब्रह्मक्षत्रं पातु तस्मै स्वाहा वाट्" इति पूर्वो मन्त्रः। "तस्यौषधयोऽप्सरसो मुदो नाम ताभ्यः

---

१. प्राप्तभूतिः ग्रामादिस्वामी।

२. वस्तो महाजस्तस्य चर्मणि।

स्वाहा" इत्युत्तरः । अत्र च "तस्यौषधयः" इति सापेक्षत्वादृताषाड्‌ऋतधामाग्निर्गन्धर्व इत्यनुवर्तते(१) ॥ १६ ॥

**पञ्चगृहीतं च रथशिरस्यध्यध्याहवनीयं ध्रियमाणे पञ्चकृत्वः स नो भुवनस्येति ॥ १७ ॥**

पञ्चगृहीतमाज्यं चशब्दाज्जुहोति । रथशिरस्यध्यध्याहवनीयं ध्रियमाणे पञ्चकृत्वः "स नो भुवनस्य"(२)इत्यनेन मन्त्रेण ॥ १७ ॥

अत्र विशेषमाह—

**प्रदक्षिणं रथनीडपरिहारः ॥ १८ ॥**

कर्तव्यः ॥ १८ ॥

**पुरुषाहुतिवद्वा ॥ १९ ॥**

वेति विकल्पः ॥ १९ ॥

पक्षद्वयेपि—

**अध्वर्युरभिमुखो रथशिरः(३) ॥ २० ॥**

जुहोति ॥ २० ॥

इत्यष्टादशाध्याये पञ्चमी कण्डिका ॥



६

**वातहोमान् जुहोत्यञ्जलिनाहृत्य पुरस्ताद्बहिर्वेदेरधो दक्षिणस्यां धुर्युत्तरत उत्तरस्यां दक्षिणतो दक्षिणाप्रष्टेः समुद्रोऽसीति प्रतिमन्त्रम् ॥ १ ॥**

---

१. इमे मन्त्राः वाजसनेयसंहितायामष्टादशाध्याये द्रष्टव्याः ।

२. स नो भुवनस्य० ( वा० सं० १८।४४ ) इत्यनेन पञ्चधाऽऽवृत्तेन मन्त्रेण आहवनीयोपरि प्रतिप्रस्थात्रादिना धार्यमाणे रथशिरसि पूर्वसंस्कृतं पञ्चगृहीतमाज्यं पञ्चधा विभज्य पञ्चकृत्वो जुहोति इति तदर्थः ।

३. रथशिर इति द्वितीयैकवचनम् ।

वातहोमान् जुहोति अञ्जलिना आहृत्य पुरस्ताद्बहिर्वेदेः अधो दक्षिणस्यां धुरि। एवमेवोत्तरत आहृत्योत्तरस्यां धुरि। दक्षिणतः पश्चात् आहृत्यान्यं दक्षिणाप्रष्टेरेवमेव। "समुद्रो ( वा० सं० १८।४५ ) ऽसि" इति मन्त्रैः प्रतिमन्त्रम् ॥ १ ॥

## योक्त्रपरिहरणं च सर्वत्र ॥ २ ॥

चशब्दाद्धोमसमनन्तरमेव(१) ॥ २ ॥

## प्रगृह्याध्वर्योरावसथहरणम् ॥ ३ ॥

रथस्य कर्तव्यम् ॥ ३ ॥

## दक्षिणाकालेऽध्वर्यवे ददाति ॥ ४ ॥

रथम् ॥ ४ ॥

## अश्वांश्च ॥ ५ ॥

ददाति ॥ ५ ॥

## नव जुहोति यास्त इति प्रतिमन्त्रम् ॥ ६ ॥

आहुतीः ॥ ६ ॥

## जानन्ब्राह्मणोक्ता जुहुयाद्वा ॥ ७ ॥

"यां कां च ब्राह्मणवतीमाहुतिं विद्यात्तामेतस्मिन्काले जुहुयात्" ( श० ब्रा० ९।४।२।२७ ) इति श्रुतेः। तामेव प्रकृत्याह—"न जुहुयान्नेदतिरेचयानि" ( श० ब्रा० ९।४।२।२८ ) इति। विहितप्रतिषेधाद्विकल्पः ॥ ७ ॥

## हविर्धानप्रक्षालनाद्याग्नीध्रालम्भनात्कृत्वा धिष्ण्यांश्विनोत्यष्टेष्टकाँल्लोकम्पृणाभिश्चतुःस्रक्तींस्तिरश्चो न्युप्य न्युप्य॥

वैकृतावसरे प्राकृतानुवृत्त्यर्थमाह—हविर्धानप्रक्षालनाद्याग्नीध्रालम्भनात्प्राकृतं कर्म कृत्वा धिष्ण्यांश्चिनोत्यष्टेष्टकान्। 'लोकम्पृणाभिः' इति तद्धर्मप्रवृत्त्यर्थम्। चतुःस्रक्तीन्, तिरश्च इति-तिर्यक्प्रस्तारान् नोपरिस्थलिकया चयनम्। न्युप्य न्युप्येति "यं यमेवाध्वरधिष्ण्यं निर्वपति तं तं चिनोति" ( श० ब्रा० ९।४।३।५ ) इति वचनात् ॥८॥

## पृश्न्यश्मा चाग्नीध्रीये ॥ ९ ॥

उपधेयः ॥ ९ ॥

---

१. सर्वत्र त्रिष्वपि होमेषु योक्त्रेण तस्य तस्य हुतस्य वातस्याश्वस्थानीयस्य योजनं करोतीत्यर्थः।

सकृन्मन्त्रवचनम् ॥ १० ॥

होत्रीये त्रिरेकविंशत्या ॥ ११ ॥

होतृधिष्ण्ये त्रिर्मन्त्रवचनम्(१)। एकविंशतिभिरिष्टकाभिश्चयनम् ॥ ११ ॥

ब्राह्मणाच्छंस्ये द्विरेकादशसु षण्मार्जालीये ॥ १२ ॥

शेषा अष्टेष्टकाः ॥ १३ ॥

यावदिष्टकं परिश्रितः परिनिधाय(२) ॥ १४ ॥

"तेषां वै यावत्य एव यजुष्मत्यस्तावत्यः परिश्रित" ( श० ब्रा० ९।४।३।९ ) इति वचनात्। परिनिधानं परिश्रितां श्रूयते न निखननम्। "स वै पर्य्येव निदधाति" ( श० ब्रा० ९।४।३।९ ) ॥ १४ ॥

पुरीषं च तूष्णीम् ॥ १५ ॥

पुरीषनिर्वापे मन्त्रो माभूदिति 'तूष्णीम्' इत्युक्तम् ॥ १५ ॥

प्राकृतानुवृत्त्यर्थमाह—

अनुदेशाद्या पुरोडाशस्विष्टकृतोऽभिषेचनीयवत् ॥१६॥

कर्म भवति(३)। 'एष वोऽमी राजा' इत्यस्य वचनसामर्थ्यात् विलिङ्गस्यापि प्रयोगो भवति। "अथैनं पूर्वाभिषेकेणाभिमृशति" ( श० ब्रा० ९।४।३।१६ ) इति प्रकृत्याह "एष वोऽमी राजा सोमोऽस्माकं ब्राह्मणानां राजा" ( श० ब्रा० ९।४।३।१६ ) इति ॥ १६ ॥

अग्नियोजनम्प्रातरनुवाकमुपाकरिष्यन्परिधीनालभ्य यथा-पूर्वमग्निं युनज्मीति प्रत्यृचम् ॥ १७ ॥

प्रातर्विमोचनम्। प्रातरनुवाकमुपाकरिष्यन्नग्नियोजनं करोति यथासूत्रितम् ॥१७॥

---

१. लोकं पृण० ( वा० सं० १५।५९ ) इति मन्त्रस्य त्रिः पठनम्।

२. यस्मिन्धिष्ण्ये यावत्य इष्टका उपहिताः तस्मिन् तावतीः परिश्रित उपदधाति परितो भूमावेव स्थापयति।

३. अनुदेशादि "सदोद्वारं पूर्वेण" ( का० श्रौ० ८।६।२१ ) इति एतस्मादारभ्य आपुरोडाशस्विष्टकृतः अभिषेचनीयवत् इति राजसूयान्तर्गताभिषेचनीयसोमस्येव कर्म भवति।

आग्निमारुतस्तोत्रपुरस्ताद्विमोचनं परिधिषंध्योर्दिवो मूर्धेति प्रत्यृचम् ॥ १८ ॥

आग्निमारुतस्तोत्रस्य पुरस्तादग्निमोचनं परिधिषंध्यालम्भनं कृत्वा "दिवो मूर्धा" ( वा० सं० १८।५४ ) इति प्रत्यृचम् ॥ १८ ॥

प्रायणीयेऽतिरात्रे युक्त्वोदयनीये विमोकमेके ॥ १९ ॥

एके अहरहर्युञ्जन्ति च विमुञ्चन्ति च ॥ १९ ॥

अध्वरसमिष्टयजुरन्त इष्टो यज्ञ इति प्रत्यृचमपरे ॥२०॥

समिष्टयजुषी जुहोति ॥ २० ॥

पशुपुरोडाशमन्वनूबन्ध्यस्य देविकाहवींषि निर्वपति यजप्रैषाणि ॥ २१ ॥

अनूबन्ध्यस्य पशुपुरोडाशमनु देविकाहविषां निर्वापः क्रियते । यजप्रैषाणि ॥२१॥

तानीदानीमाह—

अनुमतिराकासिनीवालीकुहूभ्यश्चरवो धात्रा द्वादशकपालः सर्वहुतः ॥ २२ ॥

कर्तव्यः ॥ २२ ॥

हृदयशूलान्ते स्रुवाहुतीर्जुहोति यदाकूतादिति प्रत्यृचमष्टौ ॥ २३ ॥

अनूबन्ध्याहृदयशूलान्ते "यदाकूतात्" ( वा० सं० १८।५८ ) इति प्रत्यृचमष्टौ स्रुवाहुतीर्जुहोति ॥ २३ ॥

चित्रोसीति चित्यनाम कृत्वोपतिष्ठते ये अग्नय इति ॥२४॥

तमेव चित्यम् ॥ २४ ॥

पयस्या मैत्रावरुणी तूपरमिथुनदक्षिणोदवसानीयान्ते ॥२५॥

उदवसानीयान्तग्रहणं मा भूदुपस्थानान्ते । पयस्यायाश्च तूपरौ छागौ मिथुनाहौं दक्षिणा ॥ २५ ॥

## वर्षत्यसरणमतः ॥ २६ ॥

"अग्निचिद्वर्षति न धावेत्" इति वचनात् ॥ २६ ॥

## पद्यभोजनम् ॥ २७ ॥

"न वयसोऽग्निचिदश्नीयात्" ( श० ब्रा० १०।१।४।१३ इति ॥ २७ ॥

## सवर्णोपायी ॥ २८ ॥

सर्वणशब्देन द्विजात्यभिधानम् । ततश्च शूद्रानिवृत्तिः । एवं ह्यामनन्ति । "अग्निं चित्वा" प्रथमं चित्वा "न रामामुपेयात्" इति । रामा च शूद्री । सा हि "रमणायोपेयते न धर्माय" ( निरु० १२।१३ ) इति ॥ २८ ॥

## द्वितीये स्वामेव ॥ २६ ॥

द्वितीयेऽग्निचयने विनिवृत्ते स्वामेवोपेयात् "क्षत्रियां वैश्यां च" इति । एवमपि हि श्रूयते इति ॥ २९ ॥

## तृतीये न कां चन ॥ ३० ॥

तृतीयेऽग्निचयने विनिवृत्ते न काञ्चनोपेयात् ब्रह्मचार्येव भवति ॥ ३० ॥

## यावज्जीवं व्रतान्यविशेषात् ॥ ३१ ॥

"अग्निचिद्वर्षति न धावेत्" इत्येवमादीनि भवेयुः । कुत एतत् ? अविशेषात् । न ह्यत्र कालविशेषः श्रूयते । एतावन्तं कालमेतानि व्रतानीति ॥ ३१ ॥

एवं स्थित आह—

## सम्वत्सरं वा कालस्यानवस्थितत्वात् ॥ ३२ ॥

संवत्सरं वा यावदेतानि व्रतानि भवेयुः । कुत एतत् ? कालस्यानवस्थितत्वात् । न हि कालो व्यवस्थितः । शास्त्रे व्यवस्थितेन च भवितव्यम् ॥ ३२ ॥

## तद्व्रतश्रुतेश्च ॥ ३३ ॥

अपि च तद्व्रतश्रुतिर्भवति "संवत्सरसम्मिता वै व्रतचर्या" ( श० ब्रा ५।५।३।२ ) इति । तदेतत्पक्षद्वयं प्रदर्शितमाचार्येण । अत्र यः श्रेयस्करतरः पक्षः स एवाभ्युपेयः । कोऽसौ ? "यावज्जीवं व्रतान्येतानि" इति । कुत एतत् ? अग्निचित्संयोगात् । अग्निं चितवान् यः सोऽग्निचिदुच्यते । यावज्जीवं चासावग्निचित् । अतो व्रतान्यपि तावदेवेति । आचार्यस्याप्ययमभिप्रायः । येन विश्वजिद्याजिनः संवत्सरसम्मितं व्रतचर्यामाह—"सवत्सरं न याचेत्" ( का० श्रौ० २२।१।३२ ) इति । यत्पुनरुक्तं "संवत्सरसम्मिता वै व्रतचर्या" इति, उक्तविधिशेषत्वात्तद्विषयमेव तदिति ॥ ३३ ॥

## चित्याशक्तौ पुनः सोमेज्यायां स्वयमातृण्णाविश्व-ज्योतिर्ऋतव्यानामन्यतमाः ॥ ३४ ॥

उपधेयाः। "स्रवत्यु हैषाऽग्निचित आहुतिः सोमाहुतिर्योमनिष्टके जुहोति" ( श० ब्रा० ९।५।१।५७ ) इति प्रकृत्यैवमेव श्रुतत्वात्। "स स्वयमातृण्णा एवोपदधीत" "तथा ऋतव्या एवोपदधीत" "विश्वज्योतिष एवोपदधीत" ( श० ब्रा० ९।५।१।५८, ५९, ६० ) ॥ ३४ ॥

## पुनश्चितिम् ॥ ३५ ॥

"पुनश्चितिमेवोपदधीत" ( श०ब्रा० ९।५।१।६१ ) इति च ॥ ३५ ॥

## अचयनं वा ॥ ३६ ॥

कुत एतत् ?

## चित्यस्याहवनीयाभिसम्पत्तेः ॥ ३७ ॥

आहवनीय एव चित्याभिसम्पत्तिश्रवणात्। "यो वावचितेऽग्निर्निधीयते तामेवेष्टकामेष सर्वोऽग्निरभिसम्पद्यते" ( श० ब्रा० ९।५।१।६१ ) इति ॥ ३७ ॥

इत्यष्टादशाध्याये षष्ठी कण्डिका ।

इति श्रीकर्कोपाध्यायकृतौ कात्यायनसूत्रभाष्ये

अष्टादशोऽध्यायः ।



# एकोनविंशोऽध्यायः ।

## सौत्रामणी

### १

आचार्येणाग्निरनुविहितः । इदानीमवसरप्राप्तं सौत्रामण्यनुविधानं क्रियते ।

## ब्राह्मणयज्ञः सौत्रामण्यृद्धिकामस्य ॥ १ ॥

"तस्मादेष ब्राह्मणयज्ञ एव यत्सौत्रामणी" ( श० ब्रा० १२।९।१।१ ) इति वचनात् । ब्राह्मणग्रहणं क्षत्रियवैश्ययोर्निवृत्त्यर्थम् । सा च ऋद्धिकामस्य भवति, शाखान्तरात् ।

ननु तयोरपि निधनविशेषविधानमस्ति—"सञ्जित्यै विजित्यै सत्यजित्यै जित्यै" इति क्षत्रियस्य, "सम्पुष्ट्यै विपुष्ट्यै सत्यपुष्ट्यै पुष्ट्यै" इति वैश्यस्य । उच्यते, क्षत्रियवैश्ययोर्विशेषश्रवणमग्न्यङ्गसौत्रामणीविषयम् । कुत एतत् ? अग्नौ हि तयोरपि प्राप्तिरस्ति । तस्माद् वृद्धिकामस्य ब्राह्मणस्यैव, नेतरयोर्वर्णयोरिति । 'सौत्रामणी' इति कर्मनामधेयम् । तच्चेष्टिपशुसमुदायस्य, सन्निधानात् लिङ्गाच्च । "उभयं वै सौत्रामणीष्टिश्च पशुबन्धश्च" ( श०ब्रा० १२।७।२।१२ ) इति । तथा च आचार्यप्रस्थानम्—'सौत्रामण्यामिष्टिपशवो भिन्नतन्त्राः कालभेदात्' इति । एवं प्राप्ते उच्यते—त्रिपशोर्वा नामधेयम् । कुत एतत् ? लिङ्गादेव । "आत्मा वै यज्ञस्य सौत्रामणी बाहू ऐन्द्रश्च वयोधश्च" ( श० ब्रा० १२।९।३।१६ ) इत्यैन्द्रवायोधसव्यतिरिक्ते वस्तुनि सौत्रामणीशब्दमाह । तथा—"तद्यदेतौ सौत्रामणिकं यूपमेतौ यूपावभितो भवतः" ( श०ब्रा० १२।९।३।१६ ) इति सौत्रमणीशब्दं त्रिपशावेवाह । यच्चोक्तम् "उभयं वै सौत्रामणीष्टिश्च पशुबन्धश्च" इति, तदितरेषामङ्गत्वेऽपि सम्भवत्येव । यद्वा पयोग्रहसुराग्रहसम्बन्धेनोभयरूपा सौत्रामणीति । आचार्यप्रस्थानन्तु प्रकरणोपलक्षणार्थम् । प्रयोजनं त्रिपशोरेवान्तराये प्रयोक्तृत्वमिति ॥ १ ॥

## अग्निचित्सोमयाजिसोमातिपूतसोमवामिनाम् ॥ २ ॥

एभिश्च निमित्तैः सौत्रामणी भवति । तत्र 'अग्निचित्सोमयाजि' इति ग्रहणम् अग्निमतः सोमस्याङ्गं यथा स्यादिति । स हि फलवान्, निष्फलोऽग्निरिति । एवं च सत्यग्निमत्सोमयागान्ते सौत्रामणी भवति ।

ननु च "अग्निं चित्वा सौत्रामण्या यजेत" इति वचनसामर्थ्यात् चयनसमनन्तरमेव प्राप्नोति । नेत्युच्यते, 'अग्निं चित्वा' इत्यत्राग्नेः पारार्थ्येनोपादानम् 'अग्नि

चित्वा" इति चयनेन तत्कार्यमभिनिर्वर्त्त्येत्येतदुक्तं भवति। किं च तत्कार्यं ? तत्र स्थितेनाग्निना सोमयागाभिनिर्वृत्तिः। तस्मादग्निमतः सोमस्याङ्गमिति। तदुक्तमाचार्येण "अग्निचित्सोमयाजि" इति।

ननु च 'भिन्नं जुहोति' 'स्कन्ने जुहोति' इति यथाऽत्र निमित्तकालता नैमित्तिकस्य, एवमिहापि चयनाभिनिर्वृत्तिकालता किन्न भवति ? विषमोऽयमुपन्यासः, यत्र हि निमित्तं स्वतन्त्रमेव भवति तत्र निमित्तकालता नैमित्तिकस्य युक्ता। तदुक्तमाचार्येण "कालो वा प्रत्ययात्" ( का० श्रौ० २५।१।३ ) इति। इह पुनरग्नेः सोमाङ्गतया विधानसामर्थ्यात् अग्निकार्याभिनिर्वृत्त्युत्तरकालतैव युक्तरूपेति 'अग्निं चित्वा' इत्यस्यार्थः। तस्मादग्निमता यः सोमेनेष्टवांस्तस्यैव सौत्रामणी।

ननु चानग्निमतोऽपि सोमस्याङ्गत्वेन सौत्रामणी श्रूयते—"सोमेनेष्ट्वा सौत्रामण्या यजेत" ( श० ब्रा० १२।८।२।२ ) इति। नैतदेवम्, 'अग्निञ्चित्वा' इत्यस्य वाक्यस्याग्निप्रकरणे श्रुतत्वात्तदङ्गता युक्ता। यस्य प्रकरणं तस्यान्यद्विधीयमानं तदङ्गमेव भवतीति न्याय्यम्। सोमेनेष्ट्वा सौत्रामण्या यजेत" इति सौत्रामणीप्रकरणे पाठः। तेन प्रत्युत विपरीतवृत्त्या सोमस्यैव सौत्रामण्यङ्गता भवति, न सौत्रामण्याः सोमाङ्गता। यथा "वाजपेयेनेष्ट्वा बृहस्पतिसवेन यजेत" इति वाजपेयं प्रकृत्य विधानात् वाजपेयाङ्गता बृहस्पतिसवस्य। तस्मान्नानग्निमति सोमे सौत्रामणी। "सोमेनेष्ट्वा सौत्रामण्या यजेत" इति किमर्थस्तर्हि पाठः ? अग्निमत्सोमस्यानुवादोयमित्यदोषः। यद्वा 'अग्निञ्चित्वा' इत्यस्यैव शेषोऽयम्। अग्निमता 'सोमेनेष्ट्वा' इत्येतदुक्तं भवति।

ननु च क्रमार्थमेतद्वाक्यं कस्मान्न भवति ? यथा "दर्शपूर्णमासाभ्यामिष्ट्वाऽन्येन यजेत" इति, एवं "सोमेनेष्ट्वा सौत्रामण्या यजेत" इति ? नैतदेवम्—अङ्गत्वप्रतिपादनस्वरूपो ह्यर्थवादोऽत्र भवति। "सोमेनेष्ट्वा सौत्रामण्या यजेत" इत्युक्त्वा आह "यथा धेनुर्दुग्धा पुनराप्यायेनैव ँ हैव पुनराप्यायते" इति। तस्मादग्निमत्सोमाङ्गमेवेति। सोमातिपूतसोमवामिनोश्च सौत्रामणी भवति, शाखान्तरश्रवणात्। (१)सोमातिपूतः सोमवामी च ब्राह्मण एव। न हि क्षत्रियवैश्ययोरेतद्विशेषणमिति।

ननु च सोमकार्ये तयोरपि न्यग्रोधविधानम्, तेन तदतिपवने तद्वमने च किमिति न भवति ? नैतदेवम्, यदि नाम कार्यापत्त्या धर्मप्राप्तिर्भवति। न चायं सोमधर्मः। किं तर्हि तदतिपवने यागान्तरविधानमिति। अग्निचितस्तु वर्णत्रयस्यापि भवति, अग्निसंयोगविधानात्॥ २॥

## राज्ञोपरुद्धस्य च॥ ३॥

सौत्रामणी भवति। राज्ञः अपरुद्धस्य राज्यात्प्रच्यावितस्येत्यर्थः, "दुष्टरीतुहं पौँसायनो दशपुरुषँ राज्यादपरुद्ध आस" (श० ब्रा० १२।९।३।१ ) इति तद्विधानात्॥३॥

---

१. मुखेतरच्छिद्रेण सोमवामो सोमातिपूतः, मुखेन च तद्वामी सोमवामी इति स्पष्टं महीधरभाष्ये।

## अलम्पशोरपशोः ॥ ४ ॥

सौत्रामणी भवति। पशुयोग्यः सन् यो नाम पशून्न विन्दते सोऽलम्पशुरपशुः॥४॥

## आदित्यश्चरुः ॥ ५ ॥

'भवति' इति सूत्रशेषः। "आदित्यं चरुं यक्ष्यमाणो निर्वपति" ( श० ब्रा० १२।९।२।११ ) इति श्रुतेः ॥ ५ ॥

## अन्ते(१) च ॥ ६ ॥

आदित्यश्चरुर्भवति। "आदित्यमीजान" ( श० ब्रा० १२।९।२।११ ) इति। ईजानशब्द इष्टवत्येव भवति ॥ ६ ॥

## आमिक्षाया(२) वा पूर्वः ॥ ७ ॥

आदित्यश्चरुर्भवति। तस्य हि कक्षौ चरव इति कक्षसंस्तवः। वायोधसस्य च बाहुसंस्तवात् पयस्यान्ते च विधानात् आमिक्षायाः पूर्वो भवतीति सम्प्रदायः। विकल्प इत्यपरे ॥ ७ ॥

## धेनुर्दक्षिणा ॥ ८ ॥

अस्यादित्यस्य चरोर्भवति ॥ ८ ॥

तत्र विभागमाह—

## वत्सः पूर्वे ॥ ९ ॥

चरौ ॥ ९ ॥

## मातोत्तरे ॥ १० ॥

दीयते। "वत्सं पूर्वस्यां ददाति मातरमुत्तरस्याम्" ( श० ब्रा० १२।९।२।११ ) इति। इष्ट्यपेक्षया स्त्रीलिङ्गान्तता ॥ १० ॥

## अभ्यादधामीति प्रत्यृचमाहवनीये तिस्रः समिधोऽभ्यादधाति ॥ ११ ॥

उद्धृत्याहवनीयम् ॥ ११ ॥

---

१. अन्ते समाप्तौ स एव चरुर्भवति।

२. अन्ते य आदित्यश्चरुः स आमिक्षायाः पयस्याः पूर्वो भवति।

## सत्यवादी ॥ १२ ॥

'यजमानो भवति' इति शेषः । अत्र चेष्टिषु केचिद् व्रतग्रहणं नेच्छन्ति, सौत्रामणिकस्य सत्यनियमस्य विद्यमानत्वात् । यथा दीक्षितस्य सत्यवदननियमेन ज्योतिष्टोमे व्रतग्रहणाभावः, एवमिहापीति । तदेतन्नातीव युक्तरूपम् । येन चोदकपरिप्राप्तसत्यनियमाबाधेनापि सौत्रामणिकस्य सत्यनियमस्य प्राप्तिरस्त्येव तद्व्याप्यप्रदेशाद्बहिः । अपि चेष्टिविधानेन स एव पूर्वसत्यनियमः प्राप्नोति । प्राकृतसत्यनियमगृहीता एव इष्टयो विधीयन्ते । तस्मादयमन्तरालधर्म इति । ज्योतिष्टोमेऽप्येवमेवास्त्विति चेत् ? न, दीक्षितनिबन्धनत्वात्तस्य यावद्दीक्षितकालभावित्वाच्च सत्यनियमस्य प्राकृतस्य नावसर इति बाध्यते । प्रयोजनमिष्टिषु व्रतं गृह्यत एव ॥ १२ ॥

## हुतोच्छिष्टभक्षः ॥ १३ ॥

यजमानो भवति । अग्निहोत्रहुतशेषभक्ष इत्यर्थः ॥ १३ ॥

## चतूरात्रम् ॥ १४ ॥

'अयं क्रतुर्भवति' इति सूत्रशेषः । किं वा स्यात्, पौर्णमास्यां सर्वेष्टयो मा भूवन्निति ॥ १४ ॥

## अग्निहोत्रं जुहोति ॥ १५ ॥

पुनर्विधानसामर्थ्यात् स्वयमेवेति नियमः ॥ १५ ॥

## ऐन्द्रः पशुः ॥ १६ ॥

'कर्तव्यः' इति शेषः ॥ १६ ॥

## चरुपश्वोर्विपर्यासमेके ॥ १७ ॥

इच्छन्ति । कक्षसंस्तवाच्चरोः बाहुसंस्तवाच्चैन्द्रस्येति । यद्येवं पूर्वः कस्मादादित्य उक्तः ? "यक्ष्यमाणो निर्वपति" इत्यतो वचनात् । अस्तु तथेति चेत् ? न, कक्षसंस्तवात्, बाहुसंस्तवाच्चेतरस्य । अन्तर्वहिर्भावमङ्गीकृत्य संस्तवोऽयमिति । कथं तर्हि यक्ष्यमाण इति भवति । प्राक्त्रिपशुकालात् यक्ष्यमाणो भवति ॥ १७ ॥

## अन्तः पात्यस्थाने चर्मणि सुरासोमविक्रयिणः सीसेन शष्पक्रयस्तोक्मानाभूर्णाभिर्लाजानाꣳसूत्रैः सुरासोमविक्रयिन् क्रय्यास्ते सुरासोमा३ इत्यामन्त्र्यामन्त्र्य सर्वेषु ॥१८॥

प्रक्रमतृतीयेन सोमवदुत्तरामिति वक्ष्यति। तत्रान्तःपात्यस्थानमस्ति। तत्र सुरासोमविक्रयिणः सकाशाच्चर्मणि सीसेन शष्पक्रयः कर्तव्यः। सीसं प्रसिद्धमेव। 'शष्प'शब्देन व्रीहयो विरूढा उच्यन्त इति सम्प्रदायः। अपरे तु 'शष्प'शब्दं तृणमात्रवाचकमाहुः। प्रसिद्धो ह्ययं तृणेष्वपीति। 'तोक्म'शब्देन विरूढा यवा उच्यन्ते। तेषामूर्णाभिः(१) क्रयः, लाजानां(२) च सूत्रैः। यच्च पठ्यते—"ऊर्णासूत्रेण क्रीणाति" (श० ब्रा० १२।७।२।११) इति, स द्वन्द्वैकवद्भावः। 'सुरासोमविक्रयिन् क्रय्यास्ते सुरासोमा' इत्यामन्त्र्यामन्त्र्य क्रयः कर्तव्यः। 'सर्वेषु' इति च सर्वग्रहणं नग्नहुविषयम्। तस्यापि चामन्त्र्यानियतद्रव्येण क्रयणं कर्तव्यम् ॥ १८ ॥

## क्लीबादेके ॥ १९ ॥

क्रेतुमिच्छन्ति। क्लीवः प्रसिद्ध एव ॥ १९ ॥

## दक्षिणेन हृत्वा नग्नहुचूर्णानि कृत्वा तांश्च व्रीहिश्यामाकौदनयोः पृथगाचामौ निषिच्य चूर्णैः संसृज्य निदधाति तन्मासरम् ॥ २० ॥

दक्षिणेन द्वारेण प्रवेश्याग्न्यागारं नग्नहुचूर्णानि कृत्वा। नग्नहुः किण्व उच्यते। तांश्च शष्पादीन् चूर्णयित्वा व्रीहिश्यामाकौदनयोः पृथगाचामौ निषिच्य चूर्णैः संसृज्य निदधाति(३) 'तन्मासरम्' उच्यते। व्रीहिश्यामाकाभ्यां च सुरा निष्पाद्यते। सा च

---

१. उर्णाभिः मेषरोमभिः।

२. लाजानां भृष्टव्रीहीणाम्।

३. सर्जत्वक्त्रिफला चैव, शुण्ठी चैव पुनर्नवा।
चतुर्जातकसंयुक्ता, पिप्पली गजपिप्पली ॥
वंशाऽवका बृहच्छत्रा, चित्रकं चेन्द्रवारुणी।
अश्वगन्धां समुत्पाट्य, मूलान्येतानि निर्दिशेत् ॥
धान्यकं च यवानी च, जीरकं कृष्णजीरकम्।
द्वे हरिद्रे वचा चैव, विरूढा व्रीहयो यवाः ॥ इति।

क्रयणानन्तरं तानि शष्पादीन्यादाय दक्षिणेन हृत्वाऽग्न्यागारं प्रवेश्य पूर्वं नग्नहुचूर्णानि कृत्वा सर्जत्वगाद्यौषधानि तूष्णीं पिष्ट्वा शष्पतोक्मलाजांश्च चूर्णीकृत्य दर्शपूर्णमासधर्मेण पात्रासादनादि व्रीहिश्यामाकचतुर्मुष्टिग्रहणपूर्वकं फलीकरणान्तं समन्त्रकं कृत्वा बहुतरोदके पृथक्पृथक्चरुं पक्त्वा शृतालम्भनानन्तरं व्रीहिश्यामाकौदनयोः पृथगाचामौ निषिच्य पृथग्भिन्नयोः पात्रयोश्चर्वोर्मध्यादतिरिक्तमुष्णोदकमवस्राव्य तदुदकं नग्नहुप्रभृतिभिश्चतुर्भिश्चूर्णैः संसृज्य स्थापयति। तन्मासरं तस्य चूर्णसंसृष्टस्याचामस्य मासरमिति संज्ञा।

यागसाधनम् । तेन सा तद्धर्मैरभिसम्बध्यते । अतस्तयोश्चतुर्मुष्टिकग्रहणपूर्वकं पृथगोदनौ निष्पाद्येते ॥ २० ॥

## ओदनौ चूर्णमासरैः सꣳसृज्य स्वाद्वीं त्वाꣳ- शुना त इति ॥ २१ ॥

चूर्णमासरसꣳसृष्टावोदनौ "स्वाद्वीं त्वा" ( वा० सं० १९।१ ) इति मन्त्राभ्यां कुम्भ्यां प्रक्षिपति ॥ २१ ॥

## त्रिरात्रं निदधाति ॥ २२ ॥

प्रक्षिप्ता च त्रिरात्रं निधेया सुरा ॥ २२ ॥

## एकस्याः पयसाऽपाकृतेनाश्विनेन परिषिञ्चति परीतो षिञ्चतेति ॥ २३ ॥

एकस्या गोः पयसाऽपाकृतेनाश्विनेन सुरां परिषिञ्चति "परीतो षिञ्चता" ( वा० सं० १९।२ ) इत्यनेन मन्त्रेण । "एकस्यै दुग्धेन प्रथमाꣳरात्रिं परिषिञ्चति" ( श० ब्रा० १२।८।२।११ ) इति वचनात् । अश्विनावुद्दिश्यापाकरणं कर्तव्यम् । तच्चापूर्वत्वादप्रधानत्वाच्च पयसः 'अश्विभ्यामपाकरोमि' इति । 'गोस्पर्शनमात्रमेव' इति सम्प्रदायः । अपरे तु धर्मवदपाकरणमिच्छन्ति ॥ २३ ॥

## शष्पचूर्णानि चावपति ॥ २४ ॥

चशब्दात्सुरायाम् ॥ २४ ॥

## सारस्वतेन द्वयोः प्रातः ॥ २५ ॥

प्रातःशब्देन च द्वितीयमहरभिधीयते । तत्रापि च रात्रावेवाभिषेकः । "प्रथमाꣳ रात्रिं परिषिञ्चति" इति प्रकृत्य "द्वयोर्दुग्धेन द्वितीयाम्" ( श० ब्रा० १२।८।२।११ ) इत्याह । द्वितीयां रात्रिमिति गम्यते(१) ॥ २५ ॥

## तोक्मचूर्णानि च ॥ २६ ॥

आवपति ॥ २६ ॥

## ऐन्द्रेणोत्तमे तिसृणाम् ॥ २७ ॥

(२)गवां दुग्धेनैन्द्रेण परिषिञ्चति ॥ २७ ॥

---

१. "सरस्वत्या अपाकरोमि" इति गावौ स्पृष्ट्वा दोहितेन तयोर्दुग्धेन तेनैव मन्त्रेण सुरां सिञ्चतीत्यर्थः ।

२. तृतीयेऽह्नि "इन्द्राय सुत्राम्णेऽपाकरोमि" इति स्पृष्टानां तिसृणां गवामित्यर्थः ।

## लाजचूर्णानि च ॥ २८ ॥

आवपति । अत्र चूर्णानां पयसश्च संस्कारकत्वम् । साधनं तु व्रीहिश्यामाकावेव । अतस्तयोरेव देवतोद्देशेन ग्रहणम् ॥ २८ ॥

इत्येकोनविंशेऽध्याये प्रथमा कण्डिका ॥

२

## वेदी मिमीते वरुणप्रघासवत् ॥ १ ॥

उत्तराऽन्या भवति दक्षिणाऽन्येति । दक्षिणस्याः प्रतिप्रस्थातृकर्तृकता वतिना लभ्यते ॥ १ ॥

## प्रक्रमतृतीयेनावृत्तेनोत्तरां सोमवत् ॥ २ ॥

प्रक्रमस्य तृतीयं प्रक्रमतृतीयम् । तेनोत्तरस्यां वेद्यामावृता मानक्रिया सोमवत्कर्तव्या । 'सोमवत्' इति च प्राची षट्त्रिंशत् पश्चात्त्रिंशत्त्रयस्त्रिंशद्वा पुरस्ताच्चतुर्विंशतिः । तृतीयेनेति कुतोऽध्यवसितम् ? 'वितृतीये यजेत वितृतीयं वै सोमस्य सौत्रामणी' इति वचनात् । एवं च सति यदि प्रक्रमस्य तृतीयं गृह्यते ततः क्षेत्रस्य नवमभागः परिच्छिद्यते । तत्र वितृतीये यजेतेत्यसमर्थं स्यात् । तस्मात्प्रक्रमशब्देन प्रक्रमपरिच्छिन्नं क्षेत्रमभिधीयते, यथा पादावृत्त्या । परिच्छिन्नं क्षेत्रं पादावर्तशब्देनाभिधीयते, एवं प्रक्रमपरिच्छिन्नं प्रक्रमशब्देन । तस्य तृतीयं प्रक्रमतृतीयम् । तेन च मानस्याशक्यत्वात् परिच्छेदकरणं प्रमाणं लक्ष्यते । तेन प्रमाणेन सोमवत् क्रियोत्तरस्याः । यद्वा प्रक्रमपरिच्छिन्नक्षेत्रतृतीयकरणीप्रमाणेन सोमवदावृत्तेनेति । प्रक्रमतृतीयकरणीप्रकारश्च शुल्बकारेणोक्त एव ॥ २ ॥

## तयोः पश्चात्खरौ करोति ॥ ३ ॥

तयोर्वेद्योर्निष्पन्नस्वरूपयोः पश्चाद्भागे खरौ करोति । (१)खरकरणं च शाखान्तरे विहितमेव ॥ ३ ॥

## श्वः प्रणयनीयाधानादि करोत्याज्यासादनात् स्फ्यादि करोति दक्षिणस्यां वरुणप्रघासवत् ॥ ४ ॥

एवं चतुर्दश्याम् उत्तरवेदिच्छादनान्तोत्तरा वेदिर्भवति, दक्षिणोत्करकरणान्ता । तस्यां च 'वरुणप्रघासवत्' इति वत्युपदेशात्प्रतिप्रस्थाता कर्ता ॥ ४ ॥

---

१. बर्हिराज्यधिकरणन्यायेन खरशब्दस्य संस्कारनिमित्तत्वम् ।

## सौरमेवास्याम् ॥ ५ ॥

दक्षिणस्यां (१)सौरमेव भवति। एवकारकरणं च तदङ्गाभावज्ञापनार्थम्। तत्कुतः? अत्र हि श्रूयते "आश्विनोऽजो धूम्रः सारस्वतो मेष ऐन्द्र ऋषभ" इति। तथा "पयश्च सुरा च भवतः" (श० ब्रा० १२।७।३।८) इति सर्वस्यास्यैकतन्त्र्यम्। तत्र वचनाद्दक्षिणेऽग्नौ सुराग्रहहोमः। "दक्षिणेऽग्नौ सुराग्रहान् जुह्वति" (श० ब्रा० १२।९।३।१२) इति। तदङ्गान्युत्तर एव। तथा चाह—"उत्तरेऽग्नौ पशुभिः पुरोडाशैः पयोग्रहैरिति चरन्ति यदुचान्यत्" (श० ब्रा० १२।९।३।१४) इति। अन्यग्रहणेन सौरग्रहाङ्गान्युच्यन्ते। तान्युत्तरस्यामेवैकतन्त्र्यात्। अतश्च आचार्येण ज्ञापितमेतत् 'सौरमेवास्यां' भवति। एवकारकरणात् अङ्गान्युत्तर एव। एवं च कृत्वा तन्त्रैकत्वान्न दक्षिणवेद्यर्थं प्रणीताः क्रियन्ते। 'अग्निप्रणयनम्' इत्याहवनीयादेव दक्षिणस्याम्। सपाशुकेषु चातुर्मास्येषु तु तन्त्रभेदाद्दक्षिणवेद्यर्थं प्रणीताप्रणयनं क्रियते गार्हपत्याच्चाग्नि-प्रणयनम् ॥ ५ ॥

## श्वभ्रं खात्वा खरमपरेण चर्मावधाय परिस्रुतमासिच्य कारोतरमवदधाति कारोतराद्वा चर्मणि मन्त्रलिङ्गात्पूतामादत्ते सिञ्चन्ति परिषिञ्चन्तीति ॥ ६ ॥

दक्षिणां वेदिश्रोणिमपरेण श्वभ्रं खात्वा चर्मावधाय परिस्रुतमासिच्य तत्र कारोतरमवदधाति सुरापावनाय। कारोतरं च सुरापावनं प्रसिद्धं शौण्डिकानाम्। ततः पूतां सुरामादत्ते "सिञ्चन्ति परिषिञ्चन्ति" (वा० सं० २०। ८) इत्यनेन मन्त्रेण। कारोतराद्वा पतितां चर्मणि गृह्णन्तीति। कुत एतत्? चर्मणि मन्त्रलिङ्गात्। "कारोतरेण दधतो गवां त्वचि" (वा० सं० १९।८२) इति मन्त्रलिङ्गमप्यर्थप्राप्तस्योपायस्य नियामकं भवति। यद्येवं कारोतरादेव पतितां चर्मणि गृह्णाति। सम्प्रदाये तु विकल्पः(२) ॥ ६ ॥

## सते पुनाति गोऽश्ववालवालेन पुनाति ते परिस्रुतमिति॥

सतशब्दः पात्रवाची। तच्च पालाशम्। तत्र हि सुरा न विनाशमुपयाति। तत्र गोऽश्ववालपवित्रेण सुरां पुनाति "पुनाति ते परिपुनाति स्रुतम्" (वा० सं० १९।४) इत्यनेन मन्त्रेण ॥ ७ ॥

---

१. अस्यां दक्षिणस्यां वेदौ केवलं सौरमेव कर्म भवति।

२. अथवा पूर्वं चर्मणि कारोतरमवधाय तत्र सुरामासिञ्चति तथा च सति कारोत-राच्चर्मणि सुरा पतति। कुतः? मन्त्रलिङ्गात् "कारोतरेण दधतो गवान्त्वचि" इति पूतां सुरामादत्ते।

वायोः पूत इति सीमातिपूतस्य ॥ ८ ॥

प्राङिति तद्गामिनः ॥ ९ ॥

'पुनाति' इति शेषः ॥ ९ ॥

उत्तरस्यां पयो वैतसेऽजाऽविलोमपवित्रेण ब्रह्मक्षत्रमिति ॥

उत्तरस्यां वेद्यां अजाऽविलोमपवित्रेण (१)वैतसे पात्रे पयः पुनाति "ब्रह्मक्षत्रम्" ( वा० सं० १९।५ ) इत्यनेन मन्त्रेण । तच्च पयो यागार्थत्वाद्धर्मवद्भवति ॥ १० ॥

ब्रह्मानुमन्त्रणमध्वर्यो अद्रिभिरिति ॥ ११ ॥

पूयमानं पयो ब्रह्माऽनुमन्त्रयते "अध्वर्यो अद्रिभिः" इति ॥ ११ ॥

पयोग्रहान् गृह्णाति कुविदङ्गेति ॥ १२ ॥

अनेन मन्त्रेण ॥ १२ ॥

पृथगुपयामा योनी ॥ १३ ॥

प्रतिग्रहं भवतः ॥ १३ ॥

खरयोः सादनम् ॥ १४ ॥

पयोग्रहसुराग्रहाणां च कर्तव्यम् ॥ १४ ॥

आश्विनमाश्वत्थेन ॥ १५ ॥

पात्रेण गृह्णाति ॥ १५ ॥

गोधूम(२) कुवलचूर्णानि चावपति तेजोऽसीति ॥ १६ ॥

'च' शब्दाद्ग्रहे ॥ १६ ॥

सारस्वतमौदुम्बरेण ॥ १७ ॥

पात्रेण गृह्णाति ॥ १७ ॥

उपवाकबदरचूर्णानि च वीर्यमसीति ॥ १८ ॥

'च' शब्दादावपति । उपवाकशब्देन इन्द्रयवः ॥ १८ ॥

---

१. वेतसवृक्षविकारे पात्रे ( वैतसो जलजम्बुकः ) ।

२. कुवलान्यामलकतुल्यानि बदराणि ।

ऐन्द्रं नैयग्रोधेन ॥ १९ ॥

(१)यवकर्कन्धुचूर्णानि च बलमसीति ॥ २० ॥

आवपति ॥ २० ॥

स्थालीभिः सौरान्नाना हि वामिति व्यत्यासम् ॥ २१ ॥

सौरान् ग्रहान् गृह्णाति "नाना हि वाम्" ( वा० सं० १९।७ ) इत्यनेन मन्त्रेण। तांश्च गृह्णन् व्यत्यासेन गृह्णाति। पयोग्रहं गृहीत्वा ततः सुराग्रहं पुनरप्येवमेव। "व्यतिषक्तान् गृह्णाति" ( श० ब्रा० १२.७।३।१५ ) इति वचनात् ॥ २१ ॥

पयोग्रहान्वा पूर्वम् ॥ २२ ॥

पयोग्रहान्वा पूर्वं गृह्णाति(२)। एमपि हि श्रूयते इति ॥ २२ ॥

सुराग्रहाञ्छ्रीणात्योजोऽसीति वृकव्याघ्रसिंहलोमभिः प्रतिमन्त्रं मिश्रैः ॥ २३ ॥

"ओजोऽसि" ( वा० सं० १९।९ ) इत्येभिर्मन्त्रैः प्रतिमन्त्रं वृकादिलोमभिर्मिश्रैः सुराग्रहाञ्छ्रीणातीति ॥ २३ ॥

एके यथासंख्यम् ॥ २४ ॥

लोमभिः श्रयणं कुर्वन्ति ॥ २४ ॥

सोमो राजेत्यनुवाकेन ग्रहानुपतिष्ठते युगपत् ॥ २५ ॥

यौगपद्येन च ॥ २५ ॥

चतुर्भिर्वा पयोग्रहाञ्छेषेण सौरान् ॥ २६ ॥

उपतिष्ठते ॥ २६ ॥

दीक्षावत्पावयतोऽन्तःपात्ये श्येनपत्राभ्यां या व्याघ्रमिति ॥

अध्वर्युप्रतिप्रस्थातारावन्तःपात्ये स्थितं यजमानं श्येनपत्राभ्यां पावयतो "या व्याघ्रम्" ( वा० सं० १९।१० ) इत्यनेन मन्त्रेण। दीक्षावदिति ऊर्ध्वमवाञ्चं च ॥२७॥

अग्निं प्रेक्षयति यदापिपेषेति ॥ २८ ॥

---

१. कर्कन्धूनि आरण्यबदराणि।

२. सर्वेषामपि पयोग्रहान् गृहीत्वा ततः सुराग्रहानित्यर्थः।

'प्रेक्षयति" इति कारितत्वादध्येषणा(१)। "यदापिपेष" (वा० सं० १९।११) इति यजमानः प्रेक्षते ॥ २८ ॥

## पयोग्रहसंमर्शनꣳ सम्पृचस्थेति विपृचस्थेति ॥ २९ ॥

इत्येकोनविंशेऽध्याये द्वितीया कण्डिका ॥



३

## सौराणाम् ॥ १ ॥

अभिमर्शनम्। सौरानभिमृश्योदकस्पर्शनमिति सम्प्रदायः। व्यत्यासग्रहणेऽप्येवम् ॥ १ ॥

वैकृतावसरे प्राकृतानुवृत्त्यर्थमाह—

## अभ्रयादि करोति ॥ २ ॥

## आश्विनोऽजो धूम्रः ॥ ३ ॥

पशुर्भवति। अजग्रहणमुत्तरविवक्षया ॥ ३ ॥

## सारस्वतो मेषः ॥ ४ ॥

## ऐन्द्र ऋषभः ॥ ५ ॥

## मध्ये यूपः ॥ ६ ॥

## दक्षिणोत्तरावैन्द्रवायोधसयोः ॥ ७ ॥

एवं देशाध्यवसानं कर्तव्यम्। एवं हि श्रूयते—"तद्यदेतꣳ सौत्रामणिकं यूपमेतौ यूपावभितो भवतः" (श० ब्रा० १२।९।३।१६) इति ॥ ७ ॥

## वपामार्जनान्ते ग्रहानादाय पूर्ववदनुवाचनꣳ सुरासोमेभ्योऽनुब्रूहीति ॥ ८ ॥

'पूर्ववत्' शब्देन च राजसूयसौत्रामणिक उच्यते। तत्र ह्युक्तम्—"अश्विभ्याꣳ सरस्वत्या इन्द्राय सुत्राम्ण" (श० ब्रा० ५।५।४।२४) इति, 'एता हि ग्रहदेवता' इति।

१. 'अग्निं प्रेक्षस्व' इति प्रैषेणाध्वर्युर्यजमानमग्निं दर्शयति, स च प्रेषित औत्तरवेदिकमग्निं प्रेक्षते।

अतश्च पयोग्रहार्थं तदुद्देशेनोपाकरणम्। सुराग्रहार्थे च व्रीहिश्यामाकयोश्चतुर्मुष्टीनां ग्रहणमिति। अयं च चरकसौत्रामण्यनुवाचनातिदेशोऽपरो विशेषः॥ ८॥

## सम्प्रैषन्तु॥ ९॥

'तु' शब्दो विशेषणार्थः॥ ९॥

## प्रस्थितमिति च॥ १०॥

'च' शब्दादपरो विशेषः। प्रस्थितशब्दस्य प्रयोगः सुरासोमान्प्रस्थितान्प्रेष्येति॥ १०॥

## त्रिपशोः सर्वम्॥ ११॥

प्रस्थितशब्दवद्भवति। सर्वग्रहणं च वपार्थम्। पशुपुरोडाशार्थमित्यपरे। तच्चानुपपन्नम्। येनायं सवनीयेषु पठ्यते—"प्रस्थितमिति च प्रसुते" ( का० श्रौ० ६।६।२३ ) तेनेह प्राप्तस्योपसंहारार्थमिदं वचनम्। न च पुरोडाशे प्रस्थितशब्दस्य प्राप्तिः। तस्मात्सर्वग्रहणं वपार्थमेव। पशुशब्दस्याङ्गेषूपचरितत्वात्तत्रैव मा भूदिति 'सर्व' ग्रहणम्। इह चोपसंहारात्प्रस्थितशब्दस्य पशुगणान्तरेष्वप्रवृत्तिः॥ ११॥

## सुरावन्तमिति जुहोति॥ १२॥

पयोग्रहान् (१)॥ १२॥

## पालाशैः सौरान्न मृन्मयमाहुतिमानश इति श्रुतेर्यस्त इति॥ १३॥

पालाशैः सुराग्रहान् जुहोति "यस्त" ( वा०सं० १९।३३ ) इत्यनेन मन्त्रेण। कुत एतत् 'पालाशैः' इति? यस्मात् मृन्मयमाहुतिं न व्याप्नोति। कथं ज्ञायते? "यद्वानस्पत्यैर्देवेभ्यो जुह्वत्यथ कस्मादेतं मृन्मयेनैव जुहोति' ( श०ब्रा० १४।२।२।५३ ) इति। वानस्पत्यं देवानामुचितं मृन्मयं चानुचितमिति ज्ञापयति। अपि च "पालाशान्युपशयानि भवन्ति" ( श० ब्रा० १२।७।२।१५ ) इति अत्र श्रूयते मा भूददृष्टार्थता तेषामिति॥ १३॥

## अध्वर्युः प्रतिप्रस्थाताग्नीध्रमश्विनेत्याश्विनं भक्षयन्ति द्विर्द्विरावर्त्तम्॥ १४॥

अध्वर्य्वादय आश्विनग्रहशेषं द्विर्द्विरावर्त्यावर्त्त्य "यमश्विना" ( वा० सं० १९। ३४ ) इति मन्त्रेण भक्षयन्ति॥ १४॥

---

१. अध्वर्युस्त्रीनपि पयोग्रहान्सहैव जुहोति।

होतृब्रह्ममैत्रावरुणाः सारस्वतमाश्विनवत् ॥ १५ ॥

'भक्षयन्ति' इति शेषः ॥ १५ ॥

शेषं शेषमासिञ्चत्युत्तरे पूर्वस्य ॥ १६ ॥

भक्षितशेषं पूर्वस्य ग्रहस्योत्तर आसिच्यते(१) ॥ १६ ॥

ऐन्द्रं यजमानः ॥ १७ ॥

'भक्षयति' इति शेषः ॥ १७ ॥

यदत्रेति सौरान्भक्षयन्ति यथाभक्षितं प्राचीनावीतिनो दक्षिणतः ॥ १८ ॥

दक्षिणतो वितानस्य व्यवस्थिताः प्राचीनावीतिनः सन्तो "यदत्र" ( वा० सं० १९।३५ ) इत्यनेन मन्त्रेण सौरान्भक्षयन्ति । यथा पयोग्रहाणां भक्षणं कृतं तथैवेति ॥१८॥

घ्राणभक्षमेके ॥ १९ ॥

कुर्वन्ति । स चायं विकल्पः । शास्त्रस्य तुल्यत्वात् ॥ १९ ॥

परिक्रीतो वा वैश्यराजन्ययोरन्यतरः ॥ २० ॥

'भक्षयेत्' इति ॥ २० ॥

अङ्गारेषु वा बर्हिष्परिधि दक्षिणतो जुहोत्याश्विनमुत्तरे मध्यमे सारस्वतमैन्द्रं दक्षिणे पितृभ्य इति प्रतिमन्त्रम् ॥

जुहोति(२) ॥ २१ ॥

अक्षन्पितर इति प्रक्षालनेनोपसिञ्चति ॥२२॥

यथाहोमं पात्रे ॥ २२ ॥

पितरः शुन्धध्वमिति जपति ॥ २३ ॥

---

१. पूर्वस्य पूर्वस्य ग्रहस्य शेषमुत्तर उत्तरे ग्रहे आसिञ्चति ।

२. सुराग्रहाणां भक्षणं घ्राणम् परिक्रीतभूपालवैश्यान्यतरकर्तृकं पानमिति पक्षत्रय-मुक्तम् । चतुर्थमाह यद्वाऽऽहवनीयस्याङ्गारेषु परिधेर्बहिर्दक्षिणदिक्स्थेषु होमशेषान्सुराग्रहान्पितृभ्य इति मन्त्रत्रयेण जुहोति ।

**कुम्भीमासज्य कुम्भवत् शतवितृण्णां वालपवित्रहिरण्या-न्यन्तर्धाय नवर्चं वाचयति पुनन्तु मेति ॥ २४ ॥**

'कुम्भवत्' इति दक्षिणस्याग्नेरुपरि सुरावतीमासज्जति वालपवित्रहिरण्यान्यन्त-र्धाय मध्ये नवर्चं वाचयति "पुनन्तु मा" ( वा० सं० १९।३७ ) इति ॥ २४ ॥

**सोमवतां बर्हिषदामग्निष्वात्तानां च ॥ २५ ॥**

'च' शब्दान्नवर्चं वाचयति ॥ २५ ॥

**पूर्ववत् सोमातिपूतश्चेत् ॥ २६ ॥**

सोमातिपूतसौत्रामण्यां पूर्ववदुपस्थानं कर्तव्यम् 'सोमवदादि' इति ॥ २६ ॥

**ये समाना इति यजमानो जुहोति ॥ २७ ॥**

**उत्तरे च यज्ञोपवीत्युत्तरया ॥ २८ ॥**

ऋचा ( वा० सं० १९।४६ ) जुहोति । चशब्दाद्यजमानः । अत्र च श्रूयते— "सर्वे यज्ञोपवीतानि कृत्वोत्तरमग्निमुपसमायन्ति" (श० ब्रा० १२।८।१।१९) इति ॥२८॥

**अन्वारब्धेषु पयो जुहोति द्वे सृती इति ॥ २९ ॥**

तच्चैतज्जुहोतिधर्मैर्धर्मवद्भवति ॥ २९ ॥

**शेषं यजमानो भक्षयतीदꣳ हविरिति ॥ ३० ॥**

अनेन मन्त्रेण ॥ ३० ॥

इत्येकोनविंशेऽध्याये तृतीया कण्डिका ॥



## ४

चात्वाले मार्जयन्ते सपत्नीका हिरण्यमन्तर्धाय—

**पशुपुरोडाशान्निर्वपत्यैन्द्रꣳ सावित्रं वारुणं दशकपालम् ॥ १ ॥**

"अन्यदेवत्याः पशवो भवन्ति" वचनात् "अन्यदेवत्याः पुरोडाशाः" ( श० ब्रा० १२।७।२।१६ ) इति । पशुपुरोडाशस्य च प्रकृतौ पशुदेवतासंस्कारार्थतोक्ता, सा चात्र न सम्भवति । तत्र केचिदाहुः—पशुपुरोडाश ऐन्द्रः पशुदेवतासंस्कारकः, सावित्रः संस्कारसामान्यात् सारस्वतस्य, वारुण आश्विनस्य । एवं संस्कारकत्वमेषाम् । तत्पुनः युक्तायुक्तविचारार्हमिति ॥ १ ॥

## एककपालं चावभृथाय ॥ २ ॥

वारुणं चैककपालं तैरेव सहावभृथाय निर्वपति। वारुणस्य दशकपालतैन्द्र-सावित्रयोरपि कपालसंख्योपलक्षणार्थम्। एवं हि श्रूयते—"एकादशकपाल ऐन्द्रो भवति, द्वादशकपालः सावित्रो, दशकपालो वारुणः" (श०ब्रा०१२।७।२।१८,१९,२०) इति ॥२॥

## आसाद्यैनानाज्यभागौ यजत्यत्र स्विष्टकृद्वनस्पत्योः प्रैषदर्शनात् ॥ ३ ॥

पशुपुरोडाशानासाद्याज्यभागौ यजति। अत्र हि क्रमे स्विष्टकृद्वनस्पत्योः प्रैषे आज्यभागदेवतयोः सङ्कीर्तनदर्शनात् ॥ ३ ॥

## यथोक्तं वा मन्त्राणामविधानात् ॥ ४ ॥

'वा'शब्दः पक्षव्यावृत्तौ। नात्राज्यभागौ विद्येते। यथाप्राप्तमेवाज्यभागयो-रनुष्ठानम्। कथं च प्राप्तिः ग्रहयागात्पूर्वम्? तेषां हि दर्शपूर्णमासचोदकेनाज्यभागयोः प्राप्तिः। यत्तु-'स्विष्टकृद्वनस्पत्योः प्रैषदर्शनात्' इत्युक्तम्। तन्न, मन्त्राणामविधाय-कत्वात्। न हि विधायका मन्त्राः ॥ ४ ॥

## त्रयस्त्रिंशतं दक्षिणा ददात्यनुशिशु च वडवधेनुम् ॥५॥

ननु च धेनुग्रहणदेवानुशिशुत्वं प्राप्तम् अनुशिशुग्रहणं न कर्तव्यम्? न, तत्कृतोप-काराभावाच्छिशुर्न लभ्यते, तस्मात्कर्तव्यमेव। धेनुग्रहणं तर्हि किमर्थम्? अनुशिशु-ग्रहणमेव कर्तव्यम्। कर्तव्यं वा। अक्रियमाणे हि परशिशुरपि प्राप्नुयात्। तन्मा भूदित्युभयमुक्तम्। अस्मिन्नवसरे दक्षिणादानमुक्तं पशुपुरोडाशान्ते यथा स्यादिति ॥५॥

## एकादशिनिधर्माः पशुगणेषु(१) ॥ ६ ॥

भवन्ति, गणत्वसामान्यात् ॥ ६ ॥

## शमित्रनुशासनप्रभृति वनस्पत्यन्तं कृत्वा सोमासन्दीवदा-सन्दीं जानुमात्रपादीं वेद्योर्निदधाति क्षत्रस्य योनिरिति ॥

"द्वाऽउत्तरस्यां वेद्यां पादौ भवतो द्वौ दक्षिणस्याम्" ( श० ब्रा० १२।८।३।६ ) इति श्रुतेः(२)। शमित्रनुशासनं तु द्वितीयं कर्तव्यम्। प्रथमं हि सवनीयचोदक-परिप्राप्त्या पशुपुरोडाशस्योदकदानान्ते तत्पात्रसम्मार्गं कृत्वा निर्वृत्तमिति ॥ ७ ॥

१. पशूनां गणाः द्विप्रभृतिपशुसमूहाः तेषु पशुगणेषु एकादशिनिधर्मा नियोजनादयोऽतिदिश्यन्ते।

२. क्षत्रस्य योनिः० ( वा० सं० २०।१ ) इत्यनेन मन्त्रेण जानुप्रमाणपादामासन्दीं तथा निदधाति यथा तस्या द्वौ पादौ उत्तरवेद्यां द्वौ च दक्षिणस्यां भवेताम्। सोमासन्दीवदिति मुञ्जरज्जुव्युतामित्यर्थः।

## कृष्णाजिनमस्यामास्तृणाति मा त्वेति ॥ ८ ॥

आसन्द्याम् ॥ ८ ॥

## तस्मिन्नास्ते यजमानो निषसादेति ॥ ९ ॥

"निषसाद" (वा० सं० २०।२) इत्यनेन मन्त्रेण यजमान उपरि विशेत् ॥ ९ ॥

## पादयोरुक्मा उपास्यति राजतꣳ सव्ये मृत्योरिति॥ १० ॥

(१)अनेन मन्त्रेण ॥ १० ॥

## सौवर्णꣳ शिरस्येके विद्योदिति ॥ ११ ॥

सौवर्णं पुनः शिरस्येके आचार्याः उपास्यन्ति, एके दक्षिणपादे । 'विद्योत्' (वा० सं० २०।२ ) इत्यनेन मन्त्रेण ॥ ११ ॥

## खुरैर्वंसाग्रहान् द्वात्रिꣳशतं जुहोति सीसेनेति प्रत्यृचम्॥१२॥

खुराश्चार्षभाः प्रतिपत्तव्याः ॥ १२ ॥

## द्वौ द्वौ हुत्वा शेषान्त्सते करोति ॥ १३ ॥

तांश्च द्वौ द्वौ हुत्वा तच्छेषान्त्सते करोति वैतसे ॥ १३ ॥

## सर्वसुरभ्युन्मृदितꣳ शेषैरभिषिञ्चत्या मुखादवस्रावयन्प्रति-दिशꣳ सर्वत्र सावित्रमश्विनोः सरस्वत्या इन्द्रस्येति प्रतिमन्त्रम् ॥ १४ ॥

सर्वसुरभिभिश्चन्दनादिभिरभ्युन्मृदितं यजमानं ग्रहशेषैरभिषिञ्चति । आमुखादवस्रावयन् । आमुखादिति मर्यादेयम्, अकर्म्मविषयत्वात् । प्रतिदिशं व्यवस्थितः । "सर्वतः परिक्रामम्" ( श० ब्रा० १२।८।३।१७ ) इति वचनात् सर्वत्र सावित्रं सर्वाभिषेकेषु सावित्रं मन्त्रमाह —'अश्विनोः' 'सरस्वत्या' 'इन्द्रस्य' ( वा० सं० २०।३ ) इति च प्रतिमन्त्रम् ॥ १४ ॥

## सर्वाभिश्चतुर्थम् ॥ १५ ॥

---

१. आसन्द्युपविष्टस्य यजमानस्य पादयोरधः रुक्मो मण्डलाकारो भूषणविशेषो न्यस्यति । मृत्योः पाहि ( वा० सं० २०।२ ) अनेन मन्त्रेण राजतं सव्ये, "विद्योत्पाहि" ( वा० सं० २०।२ ) अनेन च दक्षिणे सौवर्णम् ।

अभिषेकं सर्वाभिर्देवताभिः करोति। "पुरस्तात्प्रत्यङ्ङभिषिञ्चति पुरस्ताद्धि प्रत्यगन्नमद्यते शीर्षतः शीर्षतो ह्यन्नमद्यते" (श०ब्रा०१२।८।३।१७) इति प्रकृत्य श्रुतेः ॥१५॥

## महाव्याहृतिभिरेके ॥ १६ ॥

सा चेयं स्त्रपदविभाषा "तꣳ हैकऽ एताभिश्च देवताभिरभिषिञ्चन्ति भूर्भुवः स्वरित्येताभिश्च व्याहृतिभिः" ( श० ब्रा० १२।८।३।१८ ) इति वचनात् ॥ १६ ॥

अत्र न ज्ञायते किं व्याहृतिपदं पूर्वं देवतापदेभ्य उतोत्तरमित्यत आह—

## उत्तमेन वा ॥ १७ ॥

उत्तमेन व्याहृतिपदेनाभिषेको न पूर्वेण। न चानियमः। कुत एतत्? पाठक्रमात्। "तꣳ हैकऽ एताभिश्च देवताभिरभिषिञ्चति भूर्भुवः स्वरित्येताभिश्च व्याहृतिभिः" ( श० ब्रा० १२।८।३।१८ ) इति ॥ १७ ॥

## उन्मर्दनमभिषेकेऽवनीयैके ॥ १८ ॥

उन्मर्दनं चन्दनादि तदभिषेकेऽवनीयाभिषेकमेके कुर्वन्ति ॥ १८ ॥

## यजमानमालभते कोऽसीति ॥ १९ ॥

अनेन मन्त्रेण ( वा० सं० २०।४ ) ॥ १९ ॥

## सुश्लोकेत्यालब्धो ह्वयति ॥ २० ॥

यदुक्तं भवति यजमानः(१) ॥ २० ॥

## अङ्गानि चालभते यथालिङ्गꣳ शिरो म इति प्रतिमन्त्रम् ॥

'च'शब्दाद्यजमान एव यथालिङ्गमङ्गान्यालभते। अत्र च 'अस्तु' इति क्रियापदाध्याहारः, साक्षाङ्गत्वात् यथायोगं 'मे' इति च पदस्यानुषङ्गः ॥ २१ ॥

## उद्यच्छन्त्येनꣳ शतरुद्रियवत्प्रमाणेषु ॥ २२ ॥

एनं यजमानं सुश्लोकादय आहूता उत्क्षिपन्ति शतरुद्रियवज्जानुदघ्नादिषु प्रमाणेषु। कुत एतत्? एवं दृष्टार्थताऽह्वानस्य भवति। सुश्लोकादिग्रहणं च राजसूयवदेव नामोपलक्षणार्थम् ॥ २२ ॥

## कृष्णाजिनेऽवरोहति प्रति क्षत्र इति ॥ २३ ॥

कृष्णाजिनेऽवतरति यजमानः "प्रतिक्षत्र"(वा०सं० २०।१०) इत्यनेन मन्त्रेण॥२३॥

---

१. अध्वर्युणा आलब्धः कृतान्वारम्भो यजमानः सुश्लोकादिसंज्ञान्पुरुषानाह्वयति।

त्रयस्त्रिꣳशं वसाग्रहं गृह्णाति यो भूतानामिति ॥ २४ ॥

त्रयस्त्रिꣳशग्रहणाच्च खुरेण ग्रहणम् ॥ २४ ॥

आज्यग्रहमाश्वत्थेनैके ॥ २५ ॥

एके आचार्या आज्यग्रहमाश्वत्थेन पात्रेण गृह्णन्ति। ततश्चाहवनीययजतित्वाद् ध्रुवायाः सवषट्कारत्वाच्चतुर्ग्रहणमाप्यायनं च ॥ २५ ॥

इत्येकोनविंशेऽध्याये चतुर्थी कण्डिका ॥



५

साम प्रेष्यति ॥ १ ॥

'साम गाय' इत्येवं 'ब्रूहि' इति वा। ब्रह्मा गायति ॥ १ ॥

ऐन्द्र्यां बृहत्यां गायति ॥ २ ॥

इन्द्रलिङ्गायां बार्हतेन छन्दसोपेतायामृचि ( वा० सं० २०।३० ) गायति ॥ २ ॥

सꣳश्रवसे विश्रवसे सत्यश्रवसे श्रवस इति सर्वे निधनमुपयन्ति ॥ ३ ॥

सञ्जित्यै विजित्यै सत्यजित्यै जित्या इति क्षत्रियस्य ॥४॥

निधनम् ॥ ४ ॥

सम्पुष्ट्यै विपुष्ट्यै सत्यपुष्ट्यै पुष्ट्या इति वैश्यस्य॥५॥

निधनम्। अग्न्यङ्गतया अग्निचितयोरपि प्रापितत्वात्सौत्रामण्याम् ॥ ५ ॥

यथाम्नातं वा सर्वेषाम् ॥ ६ ॥

सर्ववर्णानां यथाऽऽम्नातं निधनं भवति। तच्च "सꣳश्रवस" ( श० ब्रा० १२।८।३।२६ ) इत्येवमादि ॥ ६ ॥

आस्ते प्रतिगरिष्यन् ॥ ७ ॥

होतुरग्रतः ॥ ७ ॥

त्रया देवा इति शस्त्रान्ते जुहोति ॥ ८ ॥

ग्रहम्। तच्चानुवाचनयजप्रैषपूर्वकम्। देवताश्चात्र प्रकृता एव। तथा च ( वा० सं० २०।८० ) याज्यानुवाक्ययोः तदभिधानं दृश्यते। "अश्विना तेजसा" "अश्विनापिबतम्" इति ॥ ८ ॥

**शेषमृत्विजः प्राणभक्षं भक्षयन्ति प्राणपा म इति ॥ ९ ॥**

ग्रहशेषमृत्विजः प्राणभक्षं भक्षयन्ति (वा० सं० २०।३४) "प्राणपा म" इत्यनेन मन्त्रेण ॥ ९ ॥

**प्रत्यक्षभक्षं यजमानो लोमानि त्र्यतिरिति ॥ १० ॥**

अनेन ( वा० सं० २०।१३ ) मन्त्रेण ॥ १० ॥

**स्विष्टकृत्प्रभृत्याबर्हिर्होमात्कृत्वा परिस्रुत्क्षीरलिप्ता-न्यादायावभृथवद्गमनम् ॥ ११ ॥**

स्विष्टकृत्प्रभृतिबर्हिर्होमान्तं कृत्वा परिस्रुत् क्षीरलिप्तान्यादायावभृथवद्गच्छन्ति। शूलावभृथेन व्यवधानात् 'अवभृथवद्' इत्युच्यते ॥ ११ ॥

**आशूलाभिमन्त्रणात्कृत्वोदकाधिष्ठानप्रभृत्यावभृथेष्टेः ॥ १२ ॥**

शूलाभिमन्त्रणान्तं कर्म कृत्वा उदकाधिष्ठानप्रभृति आ अवभृथेष्टेः ॥ १२ ॥

**मासरकुम्भं प्लावयति यद्देवा इति ॥ १३ ॥**

अनेन मन्त्रेण ॥ १३ ॥

**पूर्ववन्मज्जनम् ॥ १४ ॥**

मासरकुम्भस्यैवावभृथे निमज्जनम् ॥ १४ ॥

**सुमित्रिया न इत्यपोऽञ्जलिनादाय दुर्मित्रिया इति द्वेष्यं परिषिञ्चति द्वौ विक्रमा उदङ्गत्वा ॥ १५ ॥**

"सुमित्रिया न" इत्यनेन मन्त्रेणापोऽञ्जलिनादाय द्वौ विक्रमा उदङ्गत्वा "दुर्मित्रिया" ( वा० सं० २०।१९ ) इति द्वेष्यं प्रतिषिञ्चति "यामस्य दिशं द्वेष्यः स्यात्तां दिशं परासिञ्चेत्" ( श० ब्रा० १२।९।२।६ ) इति वचनात् ॥ १५ ॥

**अवभृथवत्स्नात्वा वासोऽपासनं द्रुपदादिवेति ॥ १६ ॥**

अवभृथवत्स्नानग्रहणं वासोऽपासनार्थं प्राप्तत्वादेव ॥ १६ ॥

## सोमवदुत्क्रमणमागमनं च ॥ १७ ॥

सोमवदेव 'उद्वयम्' (वा० सं० २०।२१) इत्युन्नयनं आमहीयजपवदागमनम् ॥१७॥

## आहवनीयमुपतिष्ठतेऽपो अद्येति ॥ १८ ॥

अनेन ( वा० सं० २०।२२ ) मन्त्रेण ॥ १८ ॥

## एधोसीति समिधमादायाहवनीयेऽभ्यादधाति समिदसीति॥

शूलावभृथसमिदाधानं सौत्रामणिकं च तन्त्रेण कालैकत्वाज्जुहोति ॥ १९ ॥

## जुहोति च समाववर्त्तीति ॥ २० ॥

'च' शब्दाच्छेषपरिसमाप्तिं करोति ॥ २० ॥

## उदवसाय पयस्या मैत्रावरुणी ॥ २१ ॥

कर्तव्या। अस्याश्च पूर्वम् आदित्येष्टिरुक्तैव ॥ २१ ॥

## तदन्ते पशुरिन्द्राय वयोधसे ॥ २२ ॥

तच्छब्देन पयस्या परामृश्यते ॥ २२ ॥

इत्येकोनविंशेऽध्याये पञ्चमी कण्डिका ॥



६

आचार्येण सौत्रामण्यनुविहिता। इदानीमध्वर्युवेदविहितहौत्रव्याख्यानोपन्यासाय न्यायोपप्रदर्शनायाचार्य आह—

## सौत्रामण्यामिष्टिपशवो भिन्नतन्त्राः कालभेदात् ॥ १ ॥

इह चादित्यपयस्यात्रिपशूनामन्यत्रापि सम्भवात्तद्विषयताऽपि मा भूदिति 'सौत्रामणी'ग्रहणम् प्रयोगवचनैकत्वप्रज्ञप्त्यर्थं च। एको हि प्रयोगवचनोऽत्र 'ऋद्धिकामः सौत्रामण्या यजेत' इति। अत्रेष्टिपशवो भिन्नतन्त्रा भवन्ति। कुत एतत्? कालभेदात्। भिन्नो हि कालः। "आदित्यं चरुं यक्ष्यमाणो निर्वपति। आदित्यमीजान" ( श० ब्रा० १२।९।२।११ ) इति चैवमादि।

ननु च प्रयोगवचनैकत्वे 'राजसूयेन स्वाराज्यकामो यजेत' इत्यत्र कालभेदात्तन्त्रभेद उक्तः 'इष्टिपशवो भिन्नतन्त्राः कालभेदात्' इति, किमर्थं पुनरुच्यते? सत्यमेतदेवम्। तत्र ह्यनुमत्यादीनां फलैकत्वे तन्त्रभेदोऽभिहितः, इह पुनस्तथा नेति। इह

यागविशेषाणां सौत्रामणीसंशब्दितानाम् 'ऋद्धिकामः सौत्रामण्या यजेत' इति फल-सम्बन्धः, तत्सन्निधानादितरेषां तदङ्गतेति वैषम्याद्भेदेनोच्यते। अङ्गानां प्रधानानां च प्रयोगवचनैकत्वादेकतन्त्र्यं मा भूदित्युच्यते। ननु च ज्योतिष्टोमवदेकतन्त्र्यं कस्मान्न भवत्यङ्गानां प्रधानानां च। न इत्युच्यते। तत्र हि ऋत्विग्वरणदेवयजनजोषणादीना-मुत्तरकालं दीक्षणीयादिविधानम्। इह पुनरादित्यादीनामङ्गत्वेऽपि सति कालभेदात्त-न्त्रभेद इति न दुरुक्तम्।. १॥

## सप्तदश सामिधेन्यः ॥ २ ॥

अत्र भवन्ति। अनारभ्य समधीतं साप्तदश्यं प्रकृतितः पाञ्चदश्येनोत्कालितं यत्र यत्र श्रूयते तत्र तत्र भवति ॥ २॥

## वार्त्रघ्नावाज्यभागौ ॥ ३ ॥

अत्र भवतः ॥ ३ ॥

## वृधन्वन्तौ वा पशुषु सान्नाय्यविकारात् ॥ ४ ॥

पशुषु यस्याज्यभागौ तस्य वृधन्वन्तौ भवतः। पशुषु पयोग्रहा भवन्ति। तेषां सान्नाय्यविकाराद् वृधन्वन्तौ भवतः ॥ ४ ॥

## आमिक्षायां च ॥ ५ ॥

वृधन्वन्तावेव सान्नाय्यविकारत्वात्। अधस्तनसूत्रे 'पशुषु' इति विशेषितत्वादा-मिक्षायामप्राप्तिर्मा भूदिति भेदेन ग्रहणम् ॥ ५ ॥

## उपांशुदेवतेष्टिषु ॥ ६ ॥

'भवति' इति वाक्यशेषश्च ॥ ६ ॥

## विराजौ संयाज्ये अविशेषोपदेशात् ॥ ७ ॥

संयाज्याशब्देन स्विष्टकृत्सम्बन्धिन्यौ याज्यानुवाक्ये उच्येते। ते च "प्रेद्धोऽ-अग्ने" "इमोऽअग्न" ( ऋक्सं० ७।१।३।१८) इति। अविशेषेण हि सौत्रामणीं प्रकृत्य 'विराजौ संयाज्ये' इति समाम्नायते ॥ ७ ॥

## वसिष्ठशुनकानां नाराशंसः ॥ ८ ॥

वसिष्ठानां शुनकानां च नाराशंसो द्वितीयः प्रयाजो भवति ॥ ८ ॥

## अत्रीणां चैके ॥ ९ ॥

द्वितीयं नाराशंसमिच्छन्ति। एके तनूनपातम् ॥ ९ ॥

**प्राकृताः प्रथमोत्तमयोः प्रयाजानुयाजप्रैषाः ॥ १० ॥**

चोदकप्राप्त्या भवन्ति ॥ १० ॥

**ऐन्द्रानेके प्रथमस्य वायोधसानुत्तमस्य ॥ ११ ॥**

तत्कुतः ? लिङ्गात् । "होता यक्षत्समिधेन्द्रमिडस्पदे" इत्येवमादि । तत्पुनर्बर्हिः प्रकरणात्पाठे सति लिङ्गं विनियोजकमिति पर्यालोचनीयम् ॥ ११ ॥

**समिद्ध इन्द्र इत्याप्रियः प्रथमस्य ॥ १२ ॥**

आप्रियः प्रयाजयाज्याः "समिद्ध इन्द्र" ( वा० सं० २०।३६ ) इति प्रथमस्य पशोर्भवति ॥ १२ ॥

**याज्यानुवाक्याश्च वपापुरोडाशपशूनामायात्विन्द्र इति ॥ १३ ॥**

'च' शब्दात्प्रथमस्य भवन्ति ॥ १३ ॥

**होता यक्षत्समिधाग्निमिति प्रयाजप्रैषास्त्रिपशोः ॥ १४ ॥**

भवन्ति ॥ १४ ॥

**आप्रियश्च समिद्धो अग्निरश्विनेति ॥ १५ ॥**

'च'शब्दात्त्रिपशोरेव ॥ १५ ॥

**अश्विनाहविरिति तिस्रो वपानां याज्यानुवाक्याः ॥ १६ ॥**

भवन्ति ॥ १६ ॥

**प्रथमामनूच्य द्वितीया याज्या द्वितीयामनूच्य तृतीया याज्या तृतीयामनूच्य प्रथमा याज्या ॥ १७ ॥**

"सर्वाः पुरोनुवाक्या भवन्ति, सर्वा याज्याः" ( श० ब्रा० १२।८।२।३५ ) इति श्रुतेः । तथा "सर्वाः प्रथमा भवन्ति सर्वा मध्यमाः सर्वा उत्तमाः" ( श० ब्रा० १२।८।२।३५ ) इति ॥ १७ ॥

**य इन्द्र इति पुरोडाशानां पूर्ववत् ॥ १८ ॥**

पूर्ववच्छब्देन 'प्रथमामनूच्य' इत्येवमादि लभ्यते ॥ १८ ॥

अश्विना गोभिरिति च हविषाम् ॥ १९ ॥

चशब्दात्पूर्ववद्याज्यानुवाक्याः ॥ १९ ॥

ग्रहाणां युवꣳ सुराममुत्रमिवेति ॥ २० ॥

याज्यानुवाक्ये भवतः ॥ २० ॥

पशुस्विष्टकृतो यस्मिन्नश्वास ऽहाव्यग्न इति ॥ २१ ॥

याज्यानुवाक्ये ॥ २१ ॥

होता यक्षदश्विनाविति त्रयो वपानां प्रैषा यथालिङ्गम् ॥

प्रैषा भवन्ति ॥ २२ ॥

ग्रहाणां चतुर्थः ॥ २३ ॥

प्रैषो भवति ॥ २३ ॥

हविषामुत्तरे यथालिङ्गम् ॥ २४ ॥

प्रैषा भवन्ति ॥ २४ ॥

उत्तमौ वनस्पतिस्विष्टकृतोः ॥ २५ ॥

यथालिङ्गमेव भवतः ॥ २५ ॥

प्रतिगरिष्यत्युपविष्टेऽध्वर्यौ शोꣳसावेत्याहूयाश्विना तेजसेत्यनुवाकꣳ शꣳसति ॥ २६ ॥

केचिदुपविष्टेऽध्वर्याविति पठन्ति । तेषां शोꣳसावेत्येतावानेवाहावः "अश्विना तेजसा" ( वा० सं० २०।८० ) इत्येतमनुवाकं शंसति ॥ २६ ॥

त्रिःप्रथमान्त्ये ॥ २७ ॥

प्रथमान्त्ये च त्रिः शंसति ॥ २७ ॥

त्रिचादिष्वाहूय ॥ २८ ॥

त्रिचस्य त्रिचस्यादौ आहावं कुर्यात् ॥ २८ ॥

उत्तमाꣳशिष्ट्वा प्राङ्नवम्या दशम्या वा त्रया देवा इति निवित्सप्तदशावसानोङ्कारः ॥ २९ ॥

उत्तमाया ऋचः प्राङ्नवम्या वा दशम्या वा निवित्सप्तदशावसाना शंस्यते। अवसाने ओङ्कारो भवति ।। २९ ।।

## ऋगन्तेऽन्त्येऽक्षरे स्वरप्रभृति प्रणवे लोपः ।। ३० ।।

ऋचो(१) यदन्त्यमक्षरं तस्य प्रणवे परत्रावस्थिते स्वरप्रभृति लुप्यत इत्यर्थः। 'इन्द्राय दधुरिन्द्रियम्' इत्यत्र अमित्यस्य लोपः। एवं सर्वत्र ।। ३० ।।

## तस्मिन्प्रणवान्तं चैके ।। ३१ ।।

तस्मिन्नेव प्रणवे चैकेऽन्तमपि लुम्पन्ति। तत्र मकारो लुप्यते। ओ इत्येतावानेव प्रणवो भवति ।। ३१ ।।

इत्येकोनविंशेऽध्याये षष्ठी कण्डिका ।।

७

## अश्विनातेजसाऽश्विना पिबतामिति याज्यानुवाक्ये सशस्त्रस्य ।। १ ।।

सशस्त्रस्य ग्रहस्य "अश्विना तेजसा" "अश्विना पिबताम्" इति याज्यानुवाक्ये भवतः। अनयोश्च ऋचोरपि नियुक्तत्वाच्छस्त्रे अप्रयोगो मा भूदिति अनुवाकग्रहणमधस्तात्कृतम् ।। १ ।।

## अनुवाचनप्रैषौ समस्याऽनुयाजप्रैषा देवं बर्हिरिति ।। २ ।।

## याज्याश्च ।। ३ ।।

एता एव ।। ३ ।।

## अग्निमद्येति सूक्तवाकप्रैषः ।। ४ ।।

भवति ।। ४ ।।

## प्राकृतः सूक्तवाकप्रभृति प्रागवभृथेष्टेः ।। ५ ।।

---

१. ऋचः सम्बन्धिन्यन्त्येऽक्षरे प्रणवे परे स्वरप्रभृतिवर्णजातस्य लोपो भवति। तद्यथा "इन्द्रायदधुरिन्द्रियम्" ( वा० सं० २०।८० ) 'अम्' इत्येतावदत्र लुप्यते तेन इन्द्रियोमित्येवं सम्पद्यते। एवं सर्वत्र ज्ञेयम्।

अनुक्तं च ॥ ६ ॥

यच्चान्वयेन होतुः प्राप्नोति तदप्यत्रैव भवत्येव ॥ ६ ॥

इमं मे तत्त्वेत्येककपालस्य ॥ ७ ॥

याज्यानुवाक्ये भवतः ॥ ७ ॥

अग्नीवरुणयोस्त्वन्नः स त्वमिति ॥ ८ ॥

याज्यानुवाक्ये ॥ ८ ॥

आदित्यस्य सुत्रामाणं महीमूषुमातरमिति ॥ ९ ॥

आ नः प्र वाहत्वेति पयस्यायाः ॥ १० ॥

वाजिनस्य श न्नो वाजे वाज इति ॥ ११ ॥

अयं तु विशेषः—

अनवानं याज्या ॥ १२ ॥

वायोधसाप्रियः समिद्धो अग्निः समिधेति ॥ १३ ॥

वायोधसस्य पशोराप्रियः प्रयाजयाज्याः "समिद्धो अग्निः समिधा" इत्येता भवन्ति ॥ १३ ॥

याज्यानुवाक्याश्च वपापुरोडाशपशूनां वसन्तेन ऋतुनेति॥

'च' शब्दाद्वायोधसस्यैव ॥ १४ ॥

इत्येकोनविंशेऽध्याये सप्तमी कण्डिका ।

इति कर्कभाष्यसहिते कात्यायनश्रौतसूत्रे

एकोनविंशतितमोऽध्यायः समाप्तः ।



# विंशोऽध्यायः

## अश्वमेधः

१

सौत्रामणीविधानसमनन्तरं श्रुतिमन्त्रपाठावसरप्राप्तोऽश्वमेधोऽनुविधीयते।

## राजयज्ञोऽश्वमेधः सर्वकामस्य ॥ १ ॥

राजशब्दोऽभिषेकवति क्षत्रिये वर्तत इत्युक्तं प्रदेशान्तरे। तथा च—"क्षत्रिययज्ञ उ वाऽ एप यदश्वमेधः" ( श० ब्रा० १३।४।१।२ ) इति। "तस्माद्राष्ट्र्यश्वमेधेन यजेत" ( श० ब्रा० १३।१।६।३ ) इति। राज्ञो यज्ञः राजयज्ञः, न ब्राह्मणवैश्ययोरिति। अश्वमेध इति त्रिरात्रस्य यज्ञक्रतोर्नामधेयम्। स सर्वकामस्य भवति। सर्वकामावाप्तिश्च परमात्माख्यसत्त्वप्राप्तिमन्तरेण न भवति यावच्छरीरकालभाविनो हि कामा इति। तेन 'सर्वकामस्येति मुमुक्षोः' इत्येतदुक्तं भवति। तथा चाह—"सर्वान्ह वै कामानाप्नोति सर्वा व्यष्टीर्व्यश्नुते योऽश्वमेधेन यजते" ( श० ब्रा० १३।४।१।१ ) इति ॥ १ ॥

## अष्टम्यां नवम्यां वा फाल्गुनीशुक्लस्य ॥ २ ॥

फाल्गुनशुक्लपक्षेऽष्टम्यां नवम्यां वा प्रारम्भः। 'सा यासौ फाल्गुनी पौर्णमासी भवति" इति प्रकृत्य "तस्यै पुरस्तात्षडहे वा सप्ताहे वऽर्त्विज उपसमायन्ति" ( श० ब्रा० १३ ४।१।४ ) इति श्रुतेः ॥ २ ॥

## ग्रीष्म एके ॥ ३ ॥

आरम्भं कुर्वन्ति (१)श्रुतेरेव ॥ ३ ॥

## ब्रह्मौदनं पचति चतुर्णां पात्राणामञ्जलिप्रसृतानां च ॥४॥

"चतुरः पात्रांश्चतुरोऽञ्जलींश्चतुरः (२)प्रसृतान्" ( श० ब्रा० १३।४।१।५ ) इति श्रुतेः ॥ ४ ॥

## अक्त्वैनमाद्यर्त्विग्भ्यः प्रयच्छति ॥ ५ ॥

---

१. "ग्रीष्मेऽप्यारभेतेति" ( श० ब्रा० १३।४।१।२ ) ज्येष्ठशुक्ले आषाढशुक्ले वा अष्टम्यां नवम्यां वा प्रारभेत इत्यर्थः।

२. प्रसृतश्चैकहस्ताङ्गुलिकोशः। चतुर्णां पात्राणां, चतुर्णामञ्जलीनां, चतुर्णां प्रसृतानां चेत्यर्थः।

अक्त्वैनमोदनमाद्यर्त्विग्भ्यः समर्पयति ॥ ५ ॥

तेभ्यश्चत्वारि सहस्राणि ददाति शतमानांश्च तावतः ॥६॥

चत्वारि गोसहस्राणि (१)चत्वारि च सुवर्णरक्तिकाशतानि ऋत्विग्भ्यो ददाति॥६॥

अक्त्वाज्यशेषेण रशनां द्वादशारत्निं त्रयोदशारत्निं वा निदधाति ॥ ७ ॥

ब्रह्मौदनावसिक्ताज्यशेषेण ॥ ७ ॥

आदानकाले वाऽञ्जनम् ॥ ८ ॥

कार्यार्थत्वात् । एवं चाज्यशेषं स्थाप्यते । 'वा'शब्दोऽवधारणार्थः ॥ ८ ॥

निष्कं प्रतिमुञ्चन्वाचयति तेजोऽसीति ॥ ९ ॥

चतुःसौवर्णिकं (२)निष्कमाभरणविशेषं यजमाने प्रतिमुञ्चन्वाचयति "तेजोऽसि" ( वा० सं० २२।१ ) इत्यमुं मन्त्रम् ॥ ९ ॥

वाचं यच्छेति चाह ॥ १० ॥

'च'शब्दादनन्तरम् ॥ १० ॥

आ वरदानाद्वाग्यमनम् ॥ ११ ॥

(३)भवति ॥ ११ ॥

पत्न्य(४)श्चायन्त्यलङ्कृता निष्किण्यो महिषी वावाता परिवृक्ता पालागली सानुचर्यः शतेन शतेन ॥ १२ ॥

---

१. प्रत्यृत्विजं गवां सहस्रं सुवर्णरक्तिकाशतं च दद्यादित्यर्थः ।

२. वस्तुतस्तु 'निष्कः सुवर्णाश्चत्वारः' इति चतुःसुवर्णपरिमितं रौप्याभरणं रूप्यप्रकरणे पाठात्, शतमानमपि रौप्यमेव तस्य प्रकरणे पाठादिति प्राप्ते सौवर्णग्रहणम् ।

याज्ञवल्क्यः—द्वे कृष्णले रूप्यमाषो धरणं षोडशैव ते ।
शतमानं तु दशभिर्धरणैः पलमेव तु ॥
विंशाधिकशतत्रयकृष्णलपरिमितम् ।

३. दक्षिणादानपर्यन्तमित्यर्थः 'वरेण वाचं विसृजते' (श०ब्रा०१३।४।१।१०) इति श्रुतेः ।

४. पूर्वोक्तनिष्काभरणं धारयन्त्यः पत्न्यो यजमानसमीपे आगच्छन्ति । महिषी प्रथमपरिणीता स्त्री । द्वितीया वावाता वल्लभा । तृतीया परिवृक्ता अवल्लभा । चतुर्थी पालागली दूतपुत्री । अनुचरीणां शतेन–शतेन ताः पत्न्यः सानुचर्यो भवन्ति ।

"चतस्रो जाया उपक्लृप्ता भवन्ति" ( श० ब्रा० १३।४।१।८ ) इति प्रकृत्य श्रुतत्वात् । ताश्च सहानुचरीभिरायन्ति शतेन शतेन ॥ १२ ॥

ता विशेषयति —

**राजदुहितरः प्रथमायाः ॥ १३ ॥**

अनुचर्यः(१) ॥ १३ ॥

**राजन्यानां द्वितीयायाः ॥ १४ ॥**

पत्न्या राजन्यदुहितरोऽ(२)नुचर्यः ॥ १४ ॥

**सूतग्रामण्यां तृतीयायाः ॥ १५ ॥**

सूतः (३)सङ्करजातः, ग्रामणीर्महत्तरः । तयोर्दुहितरस्तृतीयाया अनुचर्यः ॥१५॥

**क्षात्रसंग्रहीतॄणां चतुर्थ्याः ॥ १६ ॥**

पत्न्याः अनुचर्यो भवन्ति । क्षत्ता प्रतीहारी दूतो वा, सङ्ग्रहीता च सारथिः ॥१६॥

**अग्न्याधेयवत्प्रविश्य हुतेऽग्निहोत्रेऽपरेण गार्हपत्यमुदक्शिराः संविशत्यूर्वन्तरे वावाताया ब्रह्मचारी ॥ १७ ॥**

'अग्न्याधेयवत्' इति पूर्वया द्वारा यजमानो, दक्षिणा पत्न्य इत्युक्तं भवति । हुतेऽग्निहोत्रे गार्हपत्यमपरेणोदक्शिराः संविशति यजमानो वावाताया ऊर्वन्तरे । ब्रह्मचारी भवति ॥ १७ ॥

**इतराश्चान्वक् ॥ १८ ॥**

इतराश्च पत्न्यो यजमानमनुसंविशन्ति ॥ १८ ॥

**प्रातराहुत्यां हुतायां पूर्णाहुत्यन्ते वरदानं ब्रह्मणे ॥१९॥**

प्रातराहुत्यन्ते पूर्णाहुत्यां हुतायां ब्रह्मणे वरं ददाति ॥ १९ ॥

**अध्वर्यवे च प्रातमुक्तं निष्कम् ॥ २० ॥**

'च'शब्दाद्ददाति ॥ २० ॥

---

१. महिष्या राजपुत्र्योऽनुचर्यो भवन्ति ।

२. क्षत्रियजातिमात्राणां दुहितरः ।

३. सूतोऽश्वपोषकः ।

पुरोडाशोऽग्नये पथिकृते ॥ २१ ॥

कर्तव्यः। स (१)चोपांशुर्भवति ॥ २१ ॥

शतमानं दक्षिणा सौवर्णम् ॥ २२ ॥

शतसंख्यामितं सुवर्णम्। तच्चावमया मात्रया मितं भवति। अवमा च मात्रा रक्तिका ॥ २२ ॥

हिरण्यपरिमाणेऽन्यत्रापि ॥ २३ ॥

हिरण्यपरिमाणे मृग्येऽन्यत्रापि दाक्षायणादौ शतमानमेव भवति। अपरे तु वर्णयन्ति—'शतमाने श्रूयमाणे सौवर्णो भवति न राजतम्' इति ॥ २३ ॥

पौष्णं चरुं निर्वपति वासःशतं दक्षिणा ॥ २४ ॥

तस्य च वाससां शतं दक्षिणा। अयमप्युपांश्वेव ॥ २४ ॥

देवस्य त्वेति रशनामादाय ब्रह्मन्नश्वं भन्त्स्यामीत्याह॥२५॥

ब्रह्मौदनाव्यशेषेण रशनामक्त्वाऽऽदानम् "तेन रशनामभ्यज्याादत्ते" इति श्रुतेः ॥ २५ ॥

तं बधानेति ब्रह्माऽनुज्ञातोऽभिधा असीति बध्नात्यश्वं त्रिरूपम् ॥ २६ ॥

रूपशब्दो वर्णवाची। त्रिवर्णमित्यर्थः। "त्रिरूप एवैषोऽश्वः स्यात्" ( श० ब्रा० १३।४।२।४ ) इति वचनात् ॥ २६ ॥

सर्वरूपं वा ॥ २७ ॥

'वा' विकल्पार्थः। "यस्मिन्त्सर्वाणि रूपाणि भवन्ति" ( श० ब्रा० ३।४।२।१ ) इति श्रुतेः ॥ २७ ॥

शीघ्रम् ॥ २८ ॥

प्रसिद्धमेव(२) ॥ २८ ॥

दक्षिणधुर्यसमम् ॥ २९ ॥

---

१. अथाग्नेयीमिष्टिं निर्वपति' इति प्रकृत्य "उपांशु हविषो याज्यानुवाक्ये" ( श० ब्रा० १३।४।१।१३ ) इत्युक्तत्वात्।

२. वेगवत्तरमिति यावत्।

दक्षिणेन धुर्येण तुल्यमित्यर्थः । अथवा यो दक्षिणस्यां धुरि असामान्येन, तत उत्कृष्टतर इत्यर्थः ॥ २९ ॥

## साहस्रम् ॥ ३० ॥

गोसहस्रार्ह(१)म् ॥ ३० ॥

## ललामम् ॥ ३१ ॥

नीलीपौण्ड्रकम् ॥ ३१ ॥

## कृत्तिकाञ्जि वा ॥ ३२ ॥

कृत्तिका शकटमिव यस्य ललाटे पौण्ड्राणि । अत्र येषां वर्णानामविरोधस्ते समुच्चीयन्ते । येषां विरोधस्ते आम्नानसामर्थ्यात् विकल्प्यन्ते ॥ ३२ ॥

## पूर्वकायकृष्णꣳ शुक्लापरम् ॥ ३३ ॥

"तस्य कृष्णः पूर्वार्धः, शुक्लोऽपरार्धः" (श०ब्रा० १३।४।२।४) इति श्रुतेः ॥३३॥

## कृष्णसारङ्गं वा ॥ ३४ ॥

कृष्णवर्णसहितान्यवर्णम् ॥ ३४ ॥

## स्थावरा अपो गत्वा प्रजापतये त्वेति प्रोक्षत्यश्वं प्रतिमन्त्रम् ॥ ३५ ॥

या न वहन्ति ता स्थावरा आपः, ता गत्वा "प्रजापतये त्वा०" (वा०सं० २२।५) इति प्रतिमन्त्रमश्वं प्रोक्षति ॥ ३५ ॥

## आयोगवमाह श्वानं चतुरक्षमभिमन्यस्वेति ॥ ३६ ॥

आयोगवः—सङ्करजातः, वैश्यायां शूद्रेण जातः, तमाह—'श्वानं चतुरक्षमभिमन्यस्व' इत्येवम् । चतुरक्षश्वाभावाद्यस्याक्षिसमीपे पौण्ड्राणि स गुणवृत्त्या चतुरक्षः ॥

## पुँश्चलूमेके ॥ ३७ ॥

'श्वानं चतुरक्षमभिमन्यस्व' इत्येवमाहुः । पुंश्चलू—स्त्रीलोलुप उच्यते ॥३७॥

## सिध्रकमुसलेनैनꣳ हन्ति ॥ ३८ ॥

स एवं प्रेषितस्सन् सिध्रकमुसलेनेनꣳ श्वानं हन्ति ॥ ३८ ॥

इति विंशेऽध्याये प्रथमा कण्डिका ॥

---

१. गवां सहस्रं मूल्यं योऽर्हति ।

२

## यो अर्वन्तमिति वाचयति ॥ १ ॥

"यो अर्वन्तम्" ( वा० सं० २२।५ ) इत्यमुं मन्त्रं वाचयति ॥ १ ॥

## वेतसकटेनाधोऽश्वं प्लावयति परो मर्त इति ॥ २ ॥

वेतसकटेनाश्वस्याधस्तात् प्लावयति—"परो मर्त" इत्यनेन मन्त्रेण ॥ २ ॥

## अग्निसमीपमानीयाऽग्नये स्वाहेति जुहोत्यनुवाकेन प्रतिमन्त्रम् ॥ ३ ॥

अग्निसमीपमानीयाश्वम् । अनुवाकेन जुहोति प्रतिमन्त्रम् "अग्नये स्वाहा" ( वा० सं० २२।६ ) इत्येव ॥ ३ ॥

## सहस्रं वावर्तम् ॥ ४ ॥

सहस्रं वाहुतीनां जुहोति अनुवाकमावर्त्यावर्त्य "सहस्रं जुहोति" ( श० ब्रा० १३।१।३।१ ) इति वचनात् ॥ ४ ॥

## आश्वस्रवणविरमणाद्वा ॥ ५ ॥

जुहोति । 'वा' (१)शब्दो विकल्पार्थः ॥ ५ ॥

## द्वादशकपालान्निर्वपति भिन्नतन्त्राञ्छतमानदक्षिणान्मध्यमस्य राजतः, सवित्रे प्रसवित्रे, सवित्रऽआसवित्रे, सवित्रे सत्यप्रसवायेति ॥ ६ ॥

कालैक्यात्तन्त्रैक्यं मा भूदिति 'भिन्नतन्त्रान्' इत्युक्तम् । मध्यमस्य राजतः शतमानो दक्षिणा, इतरयोः सौवर्णः ॥ ६ ॥

## प्रयाजेषु दक्षिणतो ब्राह्मणो यजमानस्य यज्ञदानयुक्ताः स्वयं कृतास्तिस्रो गाथा गायत्युत्तरमन्द्रायाम् ॥ ७ ॥

प्रयाजेषु तायमानेषु दक्षिणतो व्यवस्थितो ब्राह्मणः, ब्राह्मणग्रहणादृत्विग्व्यतिरिक्तः । यजमानस्य यज्ञदानयुक्ताः स्वयं कृता एव तिस्रो गाथा गायत्युत्तरमन्द्रायाम् ।

१. अथवा न सहस्रस्य नियमः किन्तु यावत्कालं क्लिन्नादश्वशरीरादुदकं स्रवति तावज्जुहोतीत्यर्थः ।

उत्तरमन्द्रा च गायनप्रसिद्धा। वीणासङ्गतं च गानम् "वीणागाथी" (श० ब्रा० १३।४।२।८) इति श्रुतेः ॥ ७ ॥

राजन्यो धृतिषु युद्धजपयुक्ताः ॥ ८ ॥

गाथा गायत्युत्तरमन्द्रायाम्। वीणागाथी स्वयंकृता युद्धजपयुक्ताः ॥ ८ ॥

अध्वर्युयजमानौ दक्षिणेऽश्वकर्णे जपतो विभूर्मात्रेति॥९॥

अमुं मन्त्रम् (वा० सं० २२।१९) ॥ ९ ॥

पशुवदुत्सर्जनं निरष्टेऽश्वशते ॥ १० ॥

'पशुवत्' इत्युत्तरपूर्वा दिग्लभ्यते। निरष्टे निरमणे वृद्धतयाऽश्वशते(१) ॥१०॥

देवा आशापाला इति रक्षिणोऽस्यादिशत्यनुचरीजातीयांस्तावतस्तावतः कवचिनिषङ्गिकलापिदण्डिनो यथासङ्ख्यम् ॥ ११ ॥

एवं हि श्रूयते—"राजपुत्राः कवचिनः शतम्" (श० ब्रा० १३।४।२।५) इत्येवमादि ॥ ११ ॥

वडवाभ्यो वारणम् ॥ १२ ॥

अश्वस्य ॥ १२ ॥

(२)प्रस्नेयाच्चोदकात् ॥ १३ ॥

इदानीं रक्षितॄणां वृत्तिमाह—

ब्राह्मणोऽश्वमेधेऽविद्वान्वृत्तिः स वः ॥ १४ ॥

अश्वमेधानभिज्ञो ब्राह्मणो वो वृत्तिः। तामेव हि प्रकृत्य श्रूयते—"स पानं करवाथ खादं निवपाथ" (श० ब्रा० १३।४।२। ७) इति ॥ १४ ॥

पक्वान्नं च सर्वेषु ॥ १५ ॥

---

१ अध्वर्युयजमानो अश्वशते शताश्वानां मध्ये चतुर्विंशतिवर्षवयस्काश्वे पशुवदुत्सर्जनं कुरुतः। कीदृशे ? निरष्टे अश्वस्य दन्तगतान्यष्टौ वयोव्यञ्जनानि, एकैकं त्रीणि-त्रीणि वर्षाणि अनुवर्तन्ते। तानि निर्गतान्यस्मादिति निरष्टम् अतीतचतुर्विंशतिवर्षमित्यर्थः।

२. प्रस्नेयात् स्नानार्हादित्यर्थः।

अश्वमेधविद्वत्स्वपि(१) ॥ १५ ॥

रथकारगृहवासाश्च ॥ १६ ॥

"रथकारकुल एव वो वसतिः" ( श० ब्रा० १३।४।२।१७ ) इति ॥ १६ ॥

अभिषेक्स्या भविष्यत समाप्नुवन्त इत्याह राजपुत्रान्॥१७॥

नेतरान् ॥ १७ ॥

दक्षिणतो वेदेर्हिरण्मयेषूपविशन्ति ॥ १८ ॥

सम्प्रत्यभावाद् भूतकालीना वेदिः ॥ १८ ॥

तेषां विशेषमाह—

अध्वर्युयजमानौ कूर्चयोः ॥ १९ ॥

सौवर्णयोः ॥ १९ ॥

फलकयोर्वा ॥ २० ॥

होतृब्रह्मोद्गातारः कशिपुषु ॥ २१ ॥

कशिपुशब्देन मसूरक उच्यते(२) ॥ २१ ॥

होतर्भूतान्याचक्ष्व भूतेष्विमं यजमानमध्यूहेति ॥ २२ ॥

इति विंशेऽध्याये द्वितीया कण्डिका ॥



३

पारिप्लवं प्रेष्यति ॥ १ ॥

पारिप्लवमृग्द्वन्द्वमाख्यानम् ॥ १ ॥

तस्मिञ्छस्यमाने—

हवै होतरिति प्रतिगृह्णाति तदन्ते प्रेष्यति वीणागणगिनो राजर्षिभिर्यजमानं सङ्गायतेति ॥ २ ॥

---

१. अश्वमेधवेदितृब्राह्मणानामपि गृहे यत्पक्वान्नं तद् गृण्हीध्वम् "अथ यत्किंच जनपदे कृतान्नं सर्वं वः" ( श० ब्रा० १३।४।२।१७ ) इति श्रुतेः ।

२. मृद्वासनमित्यर्थः ।

वीणागणगिन उपसमेता भवन्ति "तानध्वर्युः सम्प्रेष्यति" ( श० ब्रा० १३।४।३।२ ) इति श्रुतेः ॥ २ ॥

## दक्षिणाग्नौ जुहोति हिङ्काराय स्वाहेति प्रक्रमान् ॥३॥

"हिङ्काराय स्वाहा" ( वा० सं० २२।७ ) इत्येभिर्मन्त्रैः प्रतिमन्त्रं प्रक्रमसंज्ञकान् होमान् दक्षिणाग्नौ जुहोति ॥ ३ ॥

## आहवनीयेऽस्तमिते चतस्रो धृतीरिह रन्तिरिति ॥४॥

'जुहोति' इत्यनुवर्तते । 'चतस्र' इति ग्रहणं मन्त्रविवेकार्थम् । आहवनीयग्रहणमधिकृतदक्षिणाऽग्निव्युदासार्थम् ॥ ४ ॥

## वावातासम्वेशनसावित्र्युत्तरमन्द्रागानपारिप्लवधृतीः सम्वत्सरम्(१) ॥ ५ ॥

वावातासम्वेशनसावित्रीणां चान्द्रमसः सम्वत्सरः । तेन हि सर्वत्र व्यवहारः । पारिप्लवधृतीनां तु सावनः(२) । एवं हि श्रूयते पारिप्लवं प्रकृत्य "षड्त्रिंशतं दशाहानाचष्टे" ( श० ब्रा० १३।४।३।१५ ) इति । धृतिषु च "षोडश नवतीरेता वाऽ अश्वस्य बन्धनम्" ( श० ब्रा० १३।१६।२ ) इति । इयं च संख्या सावन एव संवत्सरे घटते न चान्द्रमस इति ॥ ५ ॥

## अर्धमासमासत्रैमास्यषण्मास्यानि चैके ॥ ६ ॥

वावातासंवेशनादीनि कुर्वन्ति शाखान्तरात् । अस्मिंश्च पक्षे मासाविरोधेनोपक्रमः कार्यः ॥ ६॥

## वीणागाथिभ्यां पृथक् शते ददाति ॥ ७ ॥

शतं शतं ददातीत्यर्थः ॥ ७ ॥

## राजर्षिभिः सङ्गायनमा दक्षिणीयायाः ॥ ८ ॥

कर्तव्यः ॥ ८ ॥

## दीक्षान्ते देवैरौपवसथ्यात् ॥ ९ ॥

---

१. सम्वत्सरपर्यन्तं प्रत्यहं भवन्ति । संवत्सरश्चोत्सर्गदिवसादारभ्य गणनीयो न ब्रह्मौदनदिवसादिति देवयाज्ञिकः ।

२. तत्साहचर्याद्वावातासम्वेशनसावित्र्युत्तरमन्द्रागानानामपि सावन एव संवत्सरः । न ह्येकः शब्दो विधेयभेदेन अर्थभेदमाश्रयते । तस्मात्सावन एव सर्वत्रेति स्पष्टं देवयाज्ञिके ।

"दीक्षणीयायां संस्थितायां सायं वाचि विसृष्टायाम्" (श० ब्रा० १३।४।४।२ ) इति प्रकृत्याह—"देवैरिमं यजमानं सञ्ज्ञायत" इति ॥ ९ ॥

## पश्वादौ प्रजापतिना सुत्यासु ॥ १० ॥

सुत्यासु पश्वादौ 'प्रजापतिनेमं यजमानं सञ्ज्ञायत' इति प्रैषः ॥ १० ॥

## अन्ते च ॥ ११ ॥

एवमेव प्रेषणम् । 'अन्त' ग्रहणेनोदवसानीयान्त उच्यते । "उदवसानीयाया-मन्ततः संस्थितायाम्" (श० ब्रा० १३।४।४।४) इति श्रुतेः । एवमेवाहरहः परिहृतास्वेव वसतीवरीष्वपि । एतदप्यन्तग्रहणेन सूचितम् ॥ ११ ॥

## अश्वापदीज्या चरुभिः सावित्र्यन्ते ॥ १२ ॥

तत्कालता मा भूदिति 'सावित्र्यन्त' ग्रहणम् ॥ १२ ॥

## पौष्णः स्नामे ॥ १३ ॥

स्नामः—सिंहाणक उच्यते ॥ १३ ॥

## सौर्योऽक्ष्यामये ॥ १४ ॥

अक्षिरोगे ॥ १४ ॥

## वारुणोऽप्सु मृते ॥ १५ ॥

'यवमयो भवति' इत्युक्तमेव ॥ १५ ॥

## भूमिकपालो वैश्वानरोऽरिष्टचामये ॥ १६ ॥

अरिष्टरोगे द्रोण्यामये(१) ॥ १६ ॥

## लोष्टकपालं जातूकर्ण्यो भेदात् ॥ १७ ॥

एवं हि श्रूयते—"वैश्वानरं द्वादशकपालं भूमिकपालं पुरोडाशमनुनिर्वपेत्" ( श० ब्रा० १३।३।८।३ ) इति । तत्पुनरनुपपन्नम्, येनात्र वैश्वानरो द्वादशकपालोऽनूद्यते—यो वैश्वानरो द्वादशकपालः स भूमिकपालः कर्तव्य इति । द्वादशकपालताया

---

१. द्रोण्यामयो ह्यक्षताऽऽमय उच्यते । रिष्टिः आयुधं तत्कृत आमयो रिष्टचामयः न रिष्ट्यामयः अरिष्टचामय इति व्युत्पत्तेः । कपालस्थाने चास्य भूमिरेव भवति ।

भूमिकपालतायाश्चासम्भवात्। लोष्टकपालत्वे च भूमिकपालतानुपपत्तिरेव। 'तस्माद्-भूमिकपाल एवं इति सम्प्रदायः(१) ॥ १७ ॥

## नाशे तन्त्रेण द्यावापृथिव्यः पयो वायव्यं सौर्यः ॥१८॥

'तन्त्र' शब्दस्तन्त्रैक्यार्थ इति केचित्। तत्पुनरनुपपन्नम्, कालाद्यभेदादिना प्राप्तत्वात्। तस्माद्वैश्वदेविकमत्र तन्त्रं यथा स्यादिति। ननु च वैश्वदेविकप्रकृतित्वेन प्राप्नोत्येव तत्। नेत्युच्यते। वायव्यसौर्याभ्यां न हि नवप्रयाजतादिविधिरुच्यते। अतस्तत्प्राप्त्यर्थं 'तन्त्रेण' इति वचनम् ॥ १८ ॥

## अन्यत्रापि ॥ १९ ॥

अन्यस्मिन्नपि नष्टे द्रव्ये इयमिष्टिर्भवति। "स यद्यस्याप्यन्यन्नश्येदेतयैव यजेत" ( श० ब्रा० १३।३।८।६ ) इति। 'अस्य' इति च ग्रहणात्प्रकरणाद्बहिर्न भवति ॥१९॥

## प्रजाते वायव्यम् ॥ २० ॥

"यद्यश्वो वडवां स्कन्देद्वायव्यं पयोऽनुनिर्वपेत्" ( श० ब्रा० १३।३।८।१ ) इति वचनात् ॥ २० ॥

इति विंशेऽध्याये तृतीया कण्डिका ॥



४

मृतादर्शनयोः—
मृते चाऽदर्शने च।

## अन्यस्य रशनादानादि करोत्यश्वयुक्तम् ॥ १ ॥

रशनादानाद्यन्यस्याश्वयुक्तं कर्तव्यम्। अश्वहनन तु न भवति, अश्वयोगाभावात्। "अग्नये स्वाहा" इति चानुवाकेन होमः। प्रक्रमहोमधृतिहोमावपीति चेत्। न, अश्वसम्बन्धात्। अश्वसम्बन्धो हि भवति, "हिङ्काराय स्वाहा" इत्येवमादिप्रक्रमाणां धृतिहोमानामपि "षोडश नवतीरेता वा अश्वस्य बन्धनम्" ( श० ब्रा० १३।१। ६।२ ) इति। अन्यस्य रशनादानादि करोतीत्यर्थः। प्राप्तत्वादवाच्यमेतदिति चेत्?

---

१. वस्तुतस्तु लोष्टकपालत्वे भूमिकपालत्वमपि सिद्ध्यति। तदाह—लोष्टा एव कपालानि यस्यासौ। कुतः ? 'भेदात्' कपालेषु संख्यायोगेन भेदोपदेशात्। न चासौ भूमिकपालत्वे सम्भवति। तस्माल्लोष्टानि मृत्खण्डानि कपालस्थाने उपधेयानि। एवं सति उभयानुग्रहो भवति। लोष्टानां भेदाद् द्वादशकपालता, भूमिकपालता चेति।

स्यात्, प्रायश्चित्तव्युदासार्थत्वात्। तत्कुतः? "अन्यमानीय प्रोक्षेयुः सैव तत्र प्रायश्चित्तिः" ( श० ब्रा० १३।३।८।६ ) इति वचनात्॥ १॥

**पश्वालम्भनाद्याऽऽध्वरदीक्षणीयायाः कृत्वा चत्वार्यौद्ग्रभणानि जुहोत्याध्वरिकाणि॥ २॥**

पश्वालम्भनं च पौर्णमास्यामेव। तदाद्यध्वरदीक्षणीयान्तं च। यत्कारणं द्वादशाहचोदकानुग्रहेण षष्ठ्यामाग्निके च सप्तम्यां निर्वपति इति भवति॥ २॥

**काय स्वाहेति चाश्वमेधिकानि त्रीणि॥ ३॥**

'औद्ग्रभणानि जुहोति' इति वर्तते॥ ३॥

**कृष्णाजिनदीक्षाऽतः॥ ४॥**

(१)अतोऽनन्तरं कृष्णाजिनदीक्षा॥ ४॥

**अध्वरदीक्षणीयायाश्चत्वारि त्रीणि त्रीणि चाश्वमेधिकानि॥**

अध्वरदीक्षणीयाया आग्नावैष्णवस्य चत्वार्यौद्ग्रभणानि त्रीणि त्रीणि चाश्वमेधिकानि (२) जुहुयात्परिपाट्या॥ ५॥

**कृष्णाजिनान्तमन्वहं प्राकृतव्रतोऽकृतत्वात्॥ ६॥**

कृष्णाजिनान्तमन्वहं कर्तव्यम्(३) सप्ताहं दीक्षणीयाप्रचारे प्राकृतमेव व्रतं भवति। कुत एतत्? अकृतत्वाद्दीक्षासंस्कारस्य। दण्डान्तेन हि दीक्षितो भवति॥ ६॥

**आग्निके च सप्तम्यां निर्वपति॥ ७॥**

आग्निके च हविषी सप्तम्यामिष्ट्यां निर्वपति। ते च "वैश्वानरो" "घृते चरुरादित्येभ्य" ( का० श्रौ० १६।४।२८, २९ ) इति॥ ७॥

---

१. अत औद्ग्रभणहोमानन्तरं दीक्षणीयाशेषं समाप्य कृष्णाजिनदीक्षा तत्रोपवेशनान्ता कर्तव्या।

२. "सप्ताहं प्रचरन्ति" ( श० ब्रा० १३।१।७।२ ) इति श्रुतेः सप्ताहं दीक्षणीया कार्या। तत्र प्रत्यहं कर्तव्यमाह—अध्वरदीक्षणीयायाश्चत्वारि चत्वार्यौद्ग्रभणानि 'आकूत्यै प्रयुज०' इत्यादीनि त्रीणि त्रीणि चाश्वमेधिकानि 'कायस्वाहा' इति कण्डिकापठितानि प्रत्यहमन्यान्यन्यानि पाठक्रमेण। एवं सप्त-सप्त प्रत्यहं हूयन्ते। 'काय स्वाहा' इति कण्डिकायां सप्त त्रिकाणि पठितानि तन्मध्ये सप्तसु अहःसु क्रमेणैकैकं त्रिकं हूयते। तत्र द्वितीयत्रिके स्वाहाकाराद्यं मन्त्रत्रयं 'स्वाहाधिमाधीताय' इत्यादि।

३. कृष्णाजिनोपवेशनान्तं कर्म प्रत्यहं षट्स्वपि दीक्षणीयासु भवति।

अभ्यञ्जनप्रभृति करोति ॥ ८ ॥

इहाभ्यञ्जनविधानात्पूर्वं न भवति, इति गम्यते ॥ ८ ॥

षडाग्निकानि चतुःस्थाने ॥ ९ ॥

चतुर्णामौदुम्भणानामाध्वरिकाणां स्थाने षडाग्निकानि जुहुयात् त्रीणि चाश्वमेधिकानि ॥ ९ ॥

दशमं विश्वो देवस्येति ॥ १० ॥

जुहोति ॥ १० ॥

कृष्णाजिनाद्यासमिदाधानात्कृत्वाऽऽब्रह्मन्निति जपति ॥ ११ ॥

उत्सर्गकाल एके ॥ १२ ॥

"आब्रह्मन्" इति जपमिच्छन्ति । ततश्च विकल्पः ॥ १२ ॥

दीक्षा द्वादशोपसदश्च ॥ १३ ॥

किमर्थमिदमुच्यते ? अत्र हि पक्षे महाव्रतमुत्तमं भवति । अहीनानां च व्रतवतां सर्वजिद्दीक्षात्वमुक्तं, तन्मा भूदिति द्वादशदीक्षाग्रहणम् । श्रूयते चात्र—"द्वादश दीक्षा द्वादशोपसदस्तिस्रः सुत्याः" ( श० ब्रा० १३।५।४।१ ) इति ॥ १३ ॥

नित्योदकं देवयजनं पुरस्तात् ॥ १४ ॥

नित्यं सर्वदा स्थायि उदकं यत्र तद्देवयजनमध्यवसेयम् ॥ १४ ॥

आद्योऽग्निर्द्विगुणस्त्रिगुण एकविंशतिविधो वा ॥ १५ ॥

शाखान्तराद्विकल्पः ॥ १५ ॥

एकादशिनीवदेकविंशतिर्यूपाः ॥ १६ ॥

'भवन्ति' इति शेषः । 'एकादशिनीवत्' इति किमर्थमुच्यते ? प्राप्तत्वादेव, "द्वे त्वेवैते एकादशिन्यावालभेत" ( श० ब्रा० १३।५।१।१३ ) इति मा भूत्तद्वत्क्रियाव्यत्यासेन च मानार्थम् 'एकादशिनी' इति ॥ १६ ॥

रज्जुदालो मध्ये ॥ १७ ॥

भवति ॥ १७ ॥

अभितः पैतुदारवौ ॥ १८ ॥

भवतः ॥ १८ ॥

षट् षट् बैल्वखादिरपालाशाः ॥ १९ ॥

यूपा भवन्ति ॥ १९ ॥

त्रयस्त्रयोऽभितः ॥ २० ॥

"त्रय इत्यात्" ( श० ब्रा० १३।४।४।५ ) इति वचनात् ॥ २० ॥

प्रतियूपमग्नीषोमीयाः ॥ २१ ॥

पशवो नियुज्यन्ते । ते च दक्षिणयूपादारभ्य वचनसामर्थ्यात् । अतश्च 'एकादशिनीवत्' उक्तेऽपि सर्वेषामद्यैवोच्छ्रयणम् ॥ २१ ॥

प्रातरग्निष्टोमः ॥ २२ ॥

भवति ॥ २२ ॥

एकादशिन्यौ सवनीयाः पशवो भवन्ति ॥ २३ ॥

"द्वे त्वेवैते एकादशिन्यावालभेत" ( श० ब्रा० १३।५।१।३ ) इति श्रुतेः ॥ २३ ॥

तत्र च—

मध्यम आग्नेयौ ॥ २४ ॥

'नियुज्येते' शेषा व्यत्यासेन ॥ २४ ॥

उत्तरयोश्च ॥ २५ ॥

अह्नोरेकादशिन्यावालभेत ॥ २५ ॥

उत्तमे गावो बहुरूपाः ॥ २६ ॥

आलभ्यन्ते ॥ २६ ॥

विजयमध्याद्धोतुः प्राची दिक् दक्षिणा ब्रह्मणोऽध्वर्योः प्रतीच्युद्गातुरुदीची ॥ २७ ॥

विजयमध्यात्प्राच्यान्दिशि यदुत्पन्नं द्रव्यं तद्धोतुर्दीयते दक्षिणा ब्रह्मणः प्रतीच्यध्वर्योरुदीच्युद्गातुः ॥ २७ ॥

तृतीयं तृतीयमन्वहं ददाति भूमिपुरुषब्राह्मणस्ववर्जम्॥२८॥

आद्यर्त्विक्प्रतिपुरुषाणां च तत एव चोदकानुरूपो विभागः। "अथातो दक्षिणानाम्" (श० ब्रा० १३।५।४।२४) इति प्रकृत्य सर्वमेवैतदेवं श्रूयत इति। ब्राह्मणस्वं यद्दण्डादुत्पन्नं तन्न देयम्। तस्य हि ब्राह्मणेष्वेव विनियोगः स्मृतौ विहित इति ॥२८॥

तृतीयसवन उक्थ्यं गृहीत्वाऽऽग्निमारुतकाले त्रैधं विगृह्णाति ॥ २९ ॥

तच्चमसाननुहोमभक्षौ ॥ ३० ॥

आग्निमारुतचमसाननु होमभक्षौ भवतः ॥ ३० ॥

वसतीवरीर्गृहीत्वा गृहीत्वा प्रतिदिशꣳ समासिच्य परिहरति ॥ ३१ ॥

प्रतिदिशं वसतीवरीर्गृहीत्वा गृहीत्वा समासिच्य परिहरति। स चायं मध्यमस्य धर्मो वचनात्। ततश्च सर्वमेधे आश्वमेधिके मध्यमेऽहनि वर्तमाने प्रतिदिशं 'वसतीवरि'ग्रहणं प्रवर्तते ॥ ३१ ॥

आज्यसक्तुधानालाजानामेकैकं जुहोति प्राणाय स्वाहेति प्रतिमन्त्रꣳ सर्वरात्रमावर्तम् ॥ ३२ ॥

आज्यादीनामेकैकेन द्रव्येण होममभिनिर्वर्तयति "प्राणाय स्वाहा" इत्येभिर्मन्त्रैः प्रतिमन्त्रम् आवर्त्यावर्त्य सर्वरात्रम्। अत्र च रात्रेः प्रति द्रव्यं विभागः प्रहरमेकमाज्येन, द्वितीयं सक्तुभिः, तृतीयं धानाभिः, चतुर्थं लाजैः। इह च कर्मपरिमाणानवगमात्कालपरिमाणेन कर्मपरिमाणपरिच्छेदः। न ह्यत्र कर्मपरिमाणं श्रूयते। यथा शतरुद्रिये सन्ततहोमेऽपि सति "षष्टिश्च ह वै त्रीणि च शतान्येतच्छतरुद्रियमथ त्रिꣳशदथ पञ्चत्रिꣳशत्" (श० ब्रा० ९।१।१।४३) इति। नैवमिह वचनं भवति। तेन यावन्तो होमाः प्रहरेण निवर्त्यन्ते, तावन्ति प्रतिद्रव्यं चतुर्मुष्टिकानि ग्राह्याणि। दर्विहोमानां पौर्णमासधर्मत्वेन आज्यस्य तूपांशुयाजविध्यन्तत्वेन परिमाणमेव।

केचित्त्वाज्यस्य पूर्णाहुतिकं विध्यन्तमिच्छन्ति। तदनुपपन्नम्, सक्त्वादिमध्ये आम्नानात्तस्य होमस्य। ततश्च दर्विहोमोऽयमुपांशुयाजविध्यन्तग्राहक इति। अतश्च ध्रौवाच्चतुरवत्तेन होमः। इह च 'एकस्मै स्वाहा' 'द्वाभ्याꣳ स्वाहा' इत्येवमादौ 'त्रिभ्यः स्वाहा' 'चतुर्भ्यः स्वाहा' 'पञ्चभ्यः स्वाहा' इत्येवमादिः लुप्तः स्वाध्यायो द्रष्टव्यः। एवं ह्यत्र श्रूयते—"अनुपूर्वं जुहोति" इति, "एकोत्तरा जुहोति" इति तथा "नैकशतमत्येति" (श० ब्रा० १३।२।१।५,६) इति ॥ ३२ ॥

## व्युष्ट्या इति व्युष्टायाम् ॥ ३३ ॥

रजन्यां जुहोति । तच्च—लाजैरेवेति सम्प्रदायः ॥ ३३ ॥

## स्वर्गायेत्युदिते ॥ ३४ ॥

जुहोति । पूर्णाहुतिवत्संस्कारपूर्वकमाज्येन । युक्तरूपता पुनरुभयोराज्येन । अत्र च कर्मविरचना अनस्तमिते आदित्ये आज्यभागान्तं कर्तव्यम्, तत आज्यादिभिर्होमः । विरोधाच्चापररात्रिकं कर्म, प्रतिप्रस्थाता करोति । अध्वर्युर्हि अन्नहोमेष व्यावृत्त इति । ननु वैपरीत्यं कस्मान्न भवति । न, अध्वर्युकर्तृकताया अपररात्रिकेऽन्यत्र चरितार्थत्वात् । अन्नहोमेषु त्वचरितार्थतेति । तस्मादध्वर्युरेवान्नहोमेषु । तथा च लिङ्गम् "अध्वर्युरन्नहोमाञ्जुहोति" ( श० ब्रा० १३।५।१।४ ) इति । विधिरेवायमित्यपरे ॥ ३४ ॥

इति विंशेऽध्याये चतुर्थी कण्डिका ॥



५

## प्रातरुक्थ्यः ॥ १ ॥

'भवति' इति सूत्रशेषः ॥ १ ॥

## महिमानौ गृह्णाति सौवर्णेन पूर्वं हिरण्यगर्भ इति, द्वितीयं राजतेन यः प्राणत इति ॥ २ ॥

"महिमानौ" ( श० ब्रा० १३।२।११।१ ) इति ग्रहयोर्नाम । महिमा नौ ग्रहौ गृह्णातीति सामानाधिकरण्यात् ॥ २ ॥

## बहिष्पवमानाय सर्पणमश्वमालभ्य ॥ ३ ॥

बहिष्पवमानं च वाचनिकमत्र अहर्गणे सदसि विहितत्वात् ॥ ३ ॥

## वडवा दर्शयत्यभिरसति तत्स्तोत्रम् ॥ ४ ॥

अश्वस्य वडवा दर्शयति । दर्शनेन यद्धिङ्करोति तदेव स्तोत्रम् ॥ ४ ॥

## स्तुवीरन्वा ॥ ५ ॥

उद्गातार इति विकल्पः । शास्त्रस्य तुल्यत्वात् ॥ ५ ॥

## शतमानं ददाति ॥ ६ ॥

स्तोत्रदक्षिणा इति उद्गातृभ्यः ॥ ६ ॥

## अश्वेनाक्रमयन्त्यास्तावम् ॥ ७ ॥

आस्तावप्रदेशमश्वेनाक्रमयन्ति ॥ ७ ॥

## ऐकादशिनानुपाकृत्याश्वादींश्च ॥ ८ ॥

'उपाकरोति' इति शेषः ॥ ८ ॥

## होतरश्वमभिष्टुहीति प्रेष्यति ॥ ९ ॥

प्रैषार्थश्च "तमेकादशभिर्होताऽभिष्टौति यदक्रन्दः प्रथमं जायमान" ( श० ब्रा० १३।५।१।१६,१७ ) इति ॥ ९ ॥

## युनक्त्येनं युञ्जन्ति ब्रध्नमिति ॥ १० ॥

एनमश्वं रथे "युञ्जन्ति ब्रध्नम्" ( वा० सं० २३।५ ) इत्यनेन मन्त्रेण ॥ १० ॥

## इतरांश्च युञ्जन्त्यस्येति ॥ ११ ॥

त्रीनश्वान्युनक्ति ॥ ११ ॥

## अश्वाः सौवर्णालङ्काराः ॥ १२ ॥

भवन्ति ॥ १२ ॥

## रथश्च ॥ १३ ॥

सौवर्णालङ्कारः ॥ १३ ॥

## अपो यात्वाऽवगाढेषु वाचयति यद्वात इति ॥ १४ ॥

अपः प्रति यात्वाऽवतीर्णेष्वश्वेषु "यद्वात" ( वा० सं० २३।७ ) इत्यमुं मन्त्रं वाचयति ॥ १४ ॥

## आयाय विमुक्तमश्वं महिषीवावाता परिवृक्ताऽऽज्येनाभ्यञ्जन्ति पूर्वकायमध्यापरकायान् यथादेशं वसवस्त्वेति प्रतिमन्त्रम् ॥ १५ ॥

एत्य विमुक्तमश्वं महिष्याद्याः पत्न्योऽभ्यञ्जन्ति पूर्वकायमध्यापरकायान् यथादेशं इति। महिषी पूर्वकायं, मध्यं वावाता, अपरकायं परिवृक्ता। "वसवस्त्वा" (वा० सं० २३।८) इत्येभिर्मन्त्रैः प्रतिमन्त्रम् ॥ १५ ॥

**अभ्र(ऽ)श्यमानान्मणीन्सौवर्णानेकशतमेकशतं केसरपुच्छेष्वावयन्ति भूर्भुवःस्वरिति प्रतिमहाव्याहृति ॥ १६ ॥**

अभ्र(ऽ)शमानान् इति यथा न पतन्ति सौवर्णान्मणीन्केसरयोः पुच्छे च प्रवयन्ति। "भूः" इति महिषी, "भुवः" इति वावाता, "स्वः" इति परिवृक्ता ॥ १६ ॥

**अनुचर्यश्च तूष्णीमेकेषाम् ॥ १७ ॥**

आवयन्ति। एकेषां त्विति विकल्पः ॥ १७ ॥

**अश्वाय रात्रिहुतशेषं प्रयच्छति लाजी३ञ्छाची३निति ॥**

अनेन मन्त्रेण (वा० सं० २३।८) ॥ १८ ॥

**अप्स्ववहरणमखादति ॥ १९ ॥**

अखादत्यश्वे अप्स्ववहरणम्। सा चेयं प्रतिपत्तिः ॥ १९ ॥

**ब्रह्मा पृच्छति होतारं यूपमभितः कः स्विदेकाकीति ॥ २० ॥**

"यूपमभितो वदतः" (श० ब्रा० १३।२।६।९) इति वचनात् ॥ २० ॥

**सूर्य इत्याचष्टे ॥ २१ ॥**

होता ॥ २१ ॥

**होता ब्रह्माणं का स्विदासीदिति ॥ २२ ॥**

'पृच्छति' इत्यनुवर्तते ॥ २२ ॥

**द्यौरिति प्रत्याह ॥ २३ ॥**

ब्रह्मा ॥ २३ ॥

इति विंशेऽध्याये पञ्चमी कण्डिका ॥



६

पशूपाकरणान्ते चाश्वमेधिकमभिहितमश्वाभिष्टवादि । इदानीं प्राकृतानुवृत्त्यर्थमाह—

## अग्निमन्थनादि करोति ॥ १ ॥

## अग्निष्ठेऽश्वतूपरगोमृगान्नियुनक्ति ॥ २ ॥

यूपे ॥ २ ॥

## यथोक्तमश्वादौ देवताः ॥ ३ ॥

यथाऽश्वस्तूपरोऽध्याये ( वा० सं० २४।१ ) उक्तास्तथैव प्रतिपत्तव्याः । ब्राह्मणमेवेदमिति ॥ ३ ॥

## पर्यङ्ग्यानश्वे ॥ ४ ॥

'नियुनक्ति' इति अनुवर्तते ॥ ४ ॥

## पञ्चदश पञ्चदश रोहितादीन्त्सौर्यान्तानितरेषु ॥ ५ ॥

इतरेषु यूपेषु पञ्चदश रोहितादीन् सौर्यान्तान्नियुनक्ति । यूपोच्छ्रयणक्रमेण प्रवृत्तेः ॥ ५ ॥

## कपिञ्जलादीन्पृषतान्तांस्त्रयोदश त्रयोदश यूपान्तरेषु ॥

"त्रयोदश त्रयोदशारण्यानाकाशेष्वालभते" ( श० ब्रा० १३।५।१।१५ ) इति वचनात् । तांश्चाकाशोत्पत्तिक्रमेण । अपरे तु दक्षिणत आरभ्येच्छन्ति ॥ ६ ॥

## अश्वप्रोक्षणमद्भ्यस्त्वा वायुष्ट्वेति ॥ ७ ॥

"आध्वरिकं यजुरनुद्रुत्याश्वमेधिकं यजुः प्रतिपद्यते" ( श० ब्रा० १३।२।७।१ ) इति समुच्चयश्रवणात् ॥ ७ ॥

## उपगृह्णात्यपाम्पेरुरग्निः पशुरिति ॥ ८ ॥

मन्त्रद्वयेनाश्वस्य मुखे ॥ ८ ॥

## कपिञ्जलादीनुत्सृजन्ति पर्यग्निकृतान् ॥ ९ ॥

देवतामुद्दिश्योद्दिश्य नियोगक्रमेणोत्सर्गः ॥ ९ ॥

## हिरण्यवासोधीवासेष्वश्वसंज्ञपनम् ॥ १० ॥

वासोऽधिवासᳪ हिरण्यमित्यश्वायोपस्तृणन्ति" ( श० ब्रा० १३।२।८।१ ) इति वचनात्। तृणमपि प्रवर्तत एव, अदृष्टार्थत्वात्॥ १०॥

परिपशव्ये हुत्वा प्राणाय स्वाहेति तिस्रोऽपराः॥ ११॥

आहुतीर्जुहोति॥ ११॥

वाचयति पत्नीर्नयन्नमस्तेऽम्ब इति॥ १२॥

मन्त्रसमुच्चयः॥ १२॥

अश्वं त्रिस्त्रिः परियन्ति पितृवन्मध्ये गणानां प्रियाणां निधीनामिति॥ १३॥

"गणानान्त्वा" इति त्रिः प्रदक्षिणम्। "प्रियाणाम्" इति त्रिरप्रदक्षिणम्। "निधीनान्त्वा" इति च प्रदक्षिणम्। "वसो मम" इति च सर्वत्रानुषङ्गः, तुल्ययोगात्॥१३॥

प्रक्षालितेषु महिष्यश्वमुपसंविशत्याहमजानीति॥ १४॥

प्रक्षालितेषु पशुषु महिषी अश्वमुपसंविशति "आहमजानि" ( वा० सं० २३। १९ ) इत्यनेन मन्त्रेण। "निष्ठितेषु पान्नेजनेषु महिषीमश्वायोपनिपादयन्ति" ( श० ब्रा० १३।५।२।२ ) इति वचनात्॥ १४॥

अधीवासेन प्रच्छादयति स्वर्गे लोकऽइति॥ १५॥

अश्वमहिष्योरुपरि वासो ददाति "स्वर्गे लोके" ( वा० सं० २३।२० ) इत्यनेन मन्त्रेण॥ १५॥

अश्वशिश्नमुपस्थे कुरुते वृषा वाजीति॥ १६॥

"निरायत्याश्वस्य शिश्नं महिष्युपस्थे निधत्ते" ( श० ब्रा० १३।५।२।२ ) इति वचनात्। 'महिष्युपस्थ' इति वचने न समासोऽयम्। कुत एतत्? षष्ठ्यश्रवणात्। ननु समासलक्षणेन लुप्ता षष्ठी। नैतदेवम्—अश्रुतां षष्ठीं कल्पयित्वा लोपो व्यावर्णयितव्यः। महिष्या एव पुनः कर्तृत्वे एष दोषो न भवति॥ १६॥

उत्सक्थ्या इत्यश्वं यजमानोऽभिमन्त्रयते॥ १७॥

अध्वर्युर्मा भूदिति 'यजमान' ग्रहणम्॥ १७॥

अध्वर्युब्रह्मोद्गातृहोतृक्षत्तारः कुमारीपत्नीभिः संवदन्ते यकासकाविति दशर्चस्य द्वाभ्यां द्वाभ्याᳪ हये हयेऽसावित्यामन्त्र्यामन्त्र्य॥ १८॥

अध्वर्य्वादयः कुमारीपत्नीभिर्यथासंख्येन सम्वदन्ते "यकासकौ" ( वा० सं० २३।२२ ) इति दशर्चस्य 'द्वाभ्यां द्वाभ्यामृग्भ्यां हये हयेऽसौ' इति पूर्वतरमामन्त्र्यामन्त्र्य ॥ १८ ॥

सानुचर्यः प्रत्याहुः ॥ १९ ॥

अनुचर्य एकेषाम् ॥ २० ॥

अतश्च विकल्पः ॥ २० ॥

महिषीमुत्थाप्य पुरुषा दधिक्राव्ण इत्याहुः ॥ २१ ॥

उत्थापनं च पत्न्या अनुचरीकर्तृकम् । "उत्थापयन्ति महिषीं ततस्ता यथेतं प्रतिपरायन्ति" ( श० ब्रा० १३।५।२।९ ) इति श्रुतेः । "अथेतरे सुरभिमतीमृचमन्ततोऽन्वाहुः" ( श० ब्रा० १३।५।२।९ ) इति ॥ २१ ॥

इति विंशेऽध्याये षष्ठी कण्डिका ॥

७

तिस्रः पत्न्योऽसिपथान्कल्पयन्त्यश्वस्य सूचीभिर्लौहराजतसौवर्णीभिर्मणिसंख्याभिर्गायत्रीत्रिष्टुबिति द्वाभ्यां द्वाभ्याम् ॥ १ ॥

महिष्याद्यास्तिस्रः पत्न्योऽसिमार्गान्कल्पयन्ति । अश्वस्य सूचीभिर्मणिसंख्याभिरेकशतेनैकशतेन । ताश्च लौहराजतसौवर्ण्यो भवन्ति । "गायत्रीत्रिष्टुप्" ( वा० सं० २३।३३ ) इति द्वाभ्यां द्वाभ्यामृग्भ्याम् ॥ १ ॥

रजतसुवर्णसीसाभिर्वा मन्त्राम्नानात् ॥ २ ॥

'वा'शब्दः पक्षव्यावृत्तौ । न लौहराजतसौवर्ण्यो भवन्ति राजतसुवर्णसीसाख्या भवन्ति । कुत एतत् ? मन्त्राम्नानात् । मन्त्रे हि 'रजताहरिणीः सीसा' ( वा० सं० २३।३७ ) इति च दृश्यते । तेन लोहशब्दस्य ताम्रमात्रविषयत्वात् मन्त्रवर्णेन व्यवस्थापनं युक्तमिति सीसादिमय्यो भवन्ति ॥ २ ॥

सौवर्णासिरश्वः ॥ ३ ॥

भवति ॥ ३ ॥

लौहाः पर्यङ्ग्याणाम् ॥ ४ ॥

असयो भवन्ति ॥ ४ ॥

## आयसा इतरेषाम् ॥ ५ ॥

इतरेषां पशूनामायसा असयो भवन्ति ॥ ५ ॥

## अश्वं विशास्त्यनुवाकेन कस्त्वा च्छ्यतीति ॥ ६ ॥

विशसनमवदानकालीनम्। विशसनशब्दस्य तत्र दृष्टार्थत्वात्। "विशास्ति पशुमन्यः" ( का० श्रौ० ६।७।१ ) इति। वपाकालीनं वा तत्रापि हि विशसनशब्दो भवति। शसिर्हिंसार्थः। तत्रापि हि हिंसा विद्यत इति। प्राथम्याच्च वपाकालीनमेव ॥६॥

## मेदोऽस्योद्धरन्ति वपार्थे ॥ ७ ॥

अस्याऽश्वस्य वपाकार्ये मेदो गृह्यते। कार्यपत्त्या चात्र धर्मप्रवृत्तिः ॥ ७ ॥

## लोहितं चास्य श्रपयन्ति ॥ ८ ॥

'अस्य' इत्यश्वस्य ॥ ८ ॥

## प्राजापत्यवपानामुत्तरतः श्रपणं होमो हविषश्च ॥ ९ ॥

आहवनीयस्योत्तरतः श्रपणं होमश्च। तथा हविषः ॥ ९ ॥

## प्राग्वपाहोमाद्धोताध्वर्यू च सदसि संवदेते चतसृभिः कः स्विदेकाकीति पूर्ववत् ॥ १० ॥

वपाहोमात्पूर्वं स्वाहाकृत्युत्तरकालं होताऽध्वर्युश्च सदसि सम्वदेते—"कः स्विदेकाकी" ( वा० सं० २३।४५ ) इति चतसृभिर्ऋग्भिः। 'पूर्ववत्' इति उक्तिप्रत्युक्त्या। "शृतासु वपासु स्वाहाकृतिभिश्चरित्वा प्रत्यञ्चः प्रतिपरेत्य सदसि ब्रह्मोद्यं वदन्ति पूर्वया द्वारा प्रपद्य यथा धिष्ण्यं न्युपविशन्ति" "स होताऽध्वर्युं पृच्छति" ( श० ब्रा० १३। ५।२।११,१२ ) इति श्रुतेः। यदत्र सूत्रे नाभिहितं तच्चशब्देन लभ्यते 'प्रत्यञ्चः प्रतिपरेत्य' एवमादि ॥ १० ॥

## ब्रह्मोद्गातारौ च पृच्छामि त्वेति ॥ ११ ॥

'च'शब्दाच्चतसृभिर्ऋग्भिरुक्तिप्रत्युक्त्या ॥ ११ ॥

## पुनः पूर्वावपरेणोत्तरवेदिं का स्विदासीदिति ॥ १२ ॥

सम्वदेते। 'पूर्वौ' इति होताध्वर्यू ॥ १२ ॥

## उत्तरौ च कत्यस्येति ॥ १३ ॥

'च'शब्दात्संवदेते चतसृभिरेव ॥ १३ ॥

## यजमानोऽध्वर्युं पृच्छामि त्वेति ॥ १४ ॥

## इयं वेदिरित्यध्वर्युः ॥ १५ ॥

प्रत्याह ॥ १५ ॥

## सर्वहुतेन महिम्ना चरति यस्तेऽहन्निति जुहोति ॥ १६ ॥

'महिम्ना' इति ग्रहस्य संज्ञा ॥ १६ ॥

## अत्र वा ग्रहणम् ॥ १७ ॥

"उदिते ब्रह्मोद्य" इति प्रकृत्य "अध्वर्युर्हिरण्मयेन पात्रेण प्राजापत्यं महिमानं ग्रहं गृह्णाति" (श० ब्रा० १३।५।२।२३) इति श्रुतेः। ततश्चात्रैव ग्रहणम्। पूर्वं सामान्यश्रुतेरध्यवसितम् ॥ १७ ॥

## वपाभिश्चरति ॥ १८ ॥

वपाप्रचारं करोतीत्यर्थः ॥ १८ ॥

अत्र कुल्वतूपररोहितादिभिर्गुणशब्दैश्चोदितानां पशूनां द्रव्यं प्रति सन्देहः किं जातीयाः पशव इति। जातिशब्देन चोपलक्षणं प्रकृतौ कृतमिहापि तद्वदेव कर्तव्यमिति। अत इदमुच्यते—अन्वयाच्छागा एत इति। ततश्च तच्छब्देनोपलक्षणमित्येवं प्राप्त आह—

## छागोस्रमेषाः पश्वभिधानाद्यथालिङ्गम् ॥ १९ ॥

'छागोस्रमेषा' एते पशवो यथालिङ्गम्। येन येन लिङ्गेन यो यः पशुर्लिङ्ग्यते अवगम्यते स स प्रत्येतव्यो न सर्वे छागा इति। तेन रोहितलिङ्गेन गौर्ग्रहीतव्यः। तूपरत्वेन छागः, कुल्वलिङ्गेन मेषः। कुत एतत्? पश्वभिधानात्। एते हि विशिष्टजातिव्यवच्छिन्नद्रव्यगतगुणाभिधायकाः, न द्रव्यमात्रगतगुणाभिधायका इति। ततश्चोस्रादिशब्दैरुपलक्षणं कर्तव्यमिति। यदि रोहितादयः शब्दाः पश्वभिधायकाः ततस्तैरेवोपलक्षणं युक्तं नोस्रादिभिरिति। एवं च विधिशब्दस्य 'मन्त्रत्वे भावः' इति न्यायानुग्रहो भवति। कोऽसौ न्याय इति चेत्? मन्त्रस्य ह्यभिहितार्थप्रकाशकत्वमुदितम्। अभिधानश्च रोहितादिभिरिति। एवं प्राप्त उच्यते। न, एतद्युक्तम् ॥ १९ ॥

कस्मात्?

## गुणवचनाच्चोदनाशब्दस्य ॥ २० ॥

यस्माद् गुणवचनाश्चोदनाशब्दाः। न च प्रकृतौ गुणशब्देनोपलक्षणं कृतम्। नन्विदानीमेवोक्तं यथालिङ्गं पश्वभिधायका रोहितादयः शब्दाः, इदानीं गुणवचना इति विरुद्धमुच्यते। नैतद्विरुद्धं, रोहितादिशब्दा हि स्वार्थमभिधाय तद्वति द्रव्यविशेषे

वर्त्तन्ते न शुक्लशब्दादिवद् द्रव्यमात्रे । कुत एतत् ? गोद्रव्य एव प्रयोगात् प्रत्ययाच्च । तेन गुणवचनत्वेऽपि सति द्रव्याभिधायकत्वमविरुद्धम् । यथा कलभकिसोरवर्करादयः शब्दा वयोविशेषवचना अपि सन्तो विशिष्टजातिव्यवच्छिन्नद्रव्यगतं वयोऽभिदधति, एवञ्च सति छागोस्रमेषशब्दैरेवोपलक्षणं युक्तमिति । ननु च रोहितादिशब्दानां जात्यभिधायकत्वे गोऽव्यजशब्दैरप्युपलक्षणं प्राप्नोति । तेऽपि हि तज्जात्युपलक्षणसामर्थ्ययुक्ता इति । ततः किम् ? छागोस्रमेषशब्दानामुपलक्षणसामर्थ्यमुपनीयते । एतैरेवोपलक्षणमिति न नियोगतः प्राप्नोति ॥ २० ॥

अत्रोच्यते—

## प्रकृतौ चावचनात् ॥ २१ ॥

प्रकृतौ 'अग्निषोमीयं पशुमालभेत' इति चोदनायां छागशब्देनोपलक्षणं दृष्टम् । तथा 'गौरनूबन्ध्यः' इति चोदनायामुस्रशब्देन शाखान्तरे । तथा काठके सौत्रामण्यामृषभेण सह विकल्परूपता पठ्यते मेषस्य, तत्र च मेषशब्देनोपलक्षणं दृष्टम् । तेनेह चिन्त्यते—तज्जातीयद्रव्याणि किं तैरेव शब्दैरुपलक्षणं क्रियताम्, उत शब्दान्तरैरिति । तैरेवेति युक्तरूपतरम् । ते ह्यन्यत्र द्रव्याणामुपलक्षणं कुर्वाणा दृष्टाः, इहापि च तज्जातीयान्येव द्रव्याणीति । तस्मात्तैरेवोपलक्षणमिति । अत आचार्येण साधूक्तं 'छागोस्रमेषाः पश्वभिधानात्' इति । अपि चैवं क्रियमाणे वैदिकमेवोपलक्षणं भवति, इतरथा लौकिकं स्यात् । तस्माच्छागोस्रमेषशब्दैरेवोपलक्षणम् । अपि च निगमेष्वेवं द्रव्येषु छागोस्रमेषशब्दाः प्रयुक्ता दृश्यन्ते । न च निगमकारस्य कश्चित्प्रतारणीयः । अतस्तत्स्मरणमपि समूलत्वादविरोधाच्च प्रमाणमेवेति ॥ २१ ॥

## एकविंशतिप्रदानानेकेऽन्वक्चातुर्मास्यदेवताः पितृत्रैयम्बकपुनरुक्तवर्जम् ॥ २२ ॥

चातुर्मास्यदेवतानां हुत्वा हुत्वा देवतानाम् इति । "एकविꣳशतिं चातुर्मास्यदेवता अनुद्रुत्यैकविꣳशतिधा कृत्वा प्रचरेयुः" ( श० ब्रा० १३।५।३।४ ) इति श्रुतेः ॥२२॥

## ऐन्द्राग्नवैश्वदेवकायानेके ॥ २३ ॥

क्रमेणैन्द्राग्नस्य वपाꣳहुत्वा इतरासां होमः । एवमपि हि श्रूयते "ऐन्द्राग्नस्य वपायाꣳहुतायां तदन्वितरा जुहुयुः" इति । तथा "वैश्वदेवस्य वपायाꣳ हुतायां" तथा "कायस्य वपायाꣳहुतायां तदन्वितरा जुहुयुः" ( श० ब्रा० १३।५।१,२,३ ) इति ॥ २३ ॥

## देवतातन्त्रेण तु ॥ २४ ॥

अत्र सह प्रक्षेपे याः समानदेवतास्तासां तन्त्रेणोच्चारणं, सकृत्प्रयोगादेव कार्यसिद्धेः ॥ २४ ॥

न्यवस्थितास्वपि तन्त्रेण प्राप्त आह—

## न कालभेदात् ॥ २५ ॥

भिन्नो हि तत्र कालः देवतान्तरव्यवधानात् ॥ २५ ॥

## वपान्ते द्वितीयेन पूर्ववद्यस्ते रात्राविति जुहोति ॥२६॥

वपाहोमान्ते द्वितीयेन महिम्ना चरति "यस्ते रात्रौ" ( वा० सं० २३।४ ) इति जुहोति । पूर्ववच्छब्देन सर्वहोमो लभ्यते ॥ २६ ॥

## शूलेऽश्वशेषश्रपणम् ॥ २७ ॥

'कर्तव्यम्' इति शेषः । शूलस्य चापूर्वत्वात्प्रोक्षणं न भवति ॥ २७ ॥

## सर्पणप्रभृत्यापश्वासादनात् कृत्वा ॥ २८ ॥

इति विंशेऽध्याये सप्तमी कण्डिका ।



८

## लोहितमवद्यति गोमृगकण्ठाश्वशफयोरयस्मये चरौ ॥१॥

अश्वस्य लोहितमवद्यति गोमृगकण्ठेऽश्वशफे अयस्मये चरौ ॥ १ ॥

## वेतसशाखासु प्राजापत्यानाम् ॥ २ ॥

'अवद्यति' इत्यनुवर्तते । प्राजापत्यानां वेतसशाखास्ववद्यति, 'वेतसकटे प्राजापत्यान्त्सञ्चिनोति' इति वचनात् ॥ २ ॥

## अश्वस्य वा ॥ ३ ॥

वेतसशाखास्ववद्यति, नान्येषां पशूनाम् । एवं हि श्रूयते—"प्लक्षशाखास्वन्येषां पशूनामवद्यन्ति, वेतसशाखास्वश्वस्य" ( श० ब्रा० १३।५।२।८ ) इति । यत्तु शाखान्तरीयं वचनं "वेतसकटे प्राजापत्यान्त्सञ्चिनोति" इति । तदनेन विशेषे स्थाप्यते । अश्वोऽपि हि प्राजापत्य एवेति ॥ ३ ॥

## स्विष्टकृद्वनस्पत्यन्तरे शूल्यꣳ हुत्वा देवताऽश्वाङ्गेभ्यो जुहोत्यमुष्मै स्वाहेति प्रति देवतꣳ शादप्रभृतित्वगन्तेभ्यः॥

स्विष्टकृद्वनस्पत्यन्तरे शूल्यं हुत्वा, शूले अर्पितं शूल्यं तद्धुत्वा जुहोतित्वाचास्योपविष्टहोमः। "प्राजापत्योऽश्वः" इति च प्रजापतेर्देवतात्वम्। 'देवताभ्योऽश्वाङ्गेभ्यश्च जुहोति शादप्रभृतित्वगन्तेभ्यः' 'अमुष्मै स्वाहा' इति चतुर्गृहीतमाज्यम्। "आज्यमवदाना कृत्वा प्रत्याख्यायं देवताभ्य आहुतीर्जुहोति" ( श० ब्रा० १३।३।४।१ ) इति वचनात् ॥ ४ ॥

## विमुखाच्च परेभ्यः ॥ ५ ॥

विमुखोऽध्येतृप्रसिद्धः "उग्रश्च भीमश्च" ( वा० सं० ३।५७ ) इत्ययम्। ततः परं ये देवताविशेषास्तेभ्यश्च जुहोति "अग्निं हृदयेन" ( वा० सं० ३९।८ ) इत्येवमादिभ्यः ॥ ५ ॥

## मानो मित्र इति च प्रत्यृचमनुवाकाभ्याम् ॥ ६ ॥

जुहोति ॥ ६ ॥

## अन्त्यां द्यावापृथिवीयाम् ॥ ७ ॥

"द्यावापृथिव्यामुत्तमामाहुतिं जुहोति" (श०ब्रा०१३।३।४।१) इति वचनात्॥७॥

## स्विष्टकृदन्तेऽग्निभ्यः स्विष्टकृद्भ्यः स्वाहेति लोहितं जुहोति यथावत्तम् ॥ ८ ॥

यस्मिन् यस्मिन्नवत्तन्तेनैव जुहोति, मा भूज्जुह्वा होम इति 'यथावत्त, ग्रहणम् ॥ ८ ॥

## अश्वशफेन वाऽनुयाजान्ते ॥ ९ ॥

जुहोति। 'वा' शब्दो विकल्पार्थः(१) ॥ ९ ॥

## अयस्मयेन पत्नीसंयाजान्ते ॥ १० ॥

जुहोति ॥ १० ॥

## इमानुकमिति च द्विपदाः ॥ ११ ॥

"द्विपदा उत्तमा जुहोति" ( श० ब्रा० १३।३।६।५ ) इति वचनात् ॥ ११ ॥

## अतिरात्र उत्तमः ॥ १२ ॥

---

१. प्रथमाहुतिं स्विष्टकृदनन्तरमेव हुत्वाऽनुयाजान्तेऽश्वशफाहुतिंजुहोति इति विकल्पः।

उत्तममहरतिरात्रसंस्थं भवति। ननु चाहीनत्वादतिरात्रः प्राप्त एव। किमर्थं पुनरुच्यते? गवादीनां नाम्ना स्वसंस्था मा भूवन्निति पुनरुच्यते ॥ १२ ॥

## सर्वस्तोमो ज्योतिर्गौरायुरभिजिद्विश्वजिन्महाव्रतमप्तोर्यामो वा ॥ १३ ॥

एते चाहर्विशेषा भवन्ति। अप्तोर्यामो वेति ॥ १३ ॥

अप्तोर्यामे विशेषमाह—

## आप्तोर्यामे तिरोऽह्नीयेभ्यो रात्रिपर्याय उत्तमः ॥ १४ ॥

तिरोऽह्नीयेभ्योऽवसितेभ्य उत्तमो रात्रिपर्यायश्चतुःस्तोत्रो भवति ॥ १४ ॥

## अग्निष्ठे प्राजापत्यौ च ॥ १५ ॥

प्राजापत्यौ उत्तमाहःसंयोगेन। उत्तममहः प्रकृत्य हि श्रूयते—"चतुर्विं॰शतिं त्वेवैतान् गव्यानालभेत" ( श० ब्रा० १३।५।३।११ ) इति वचनात्। एवं चान्यत्राप्तोर्यामस्यातिरात्रिका एव क्रतुपशवस्तद्विकारत्वात् ॥ १५ ॥

## अवभृथेष्टयन्तेऽप्सु मग्नस्य पिङ्गलखलतिविक्लिधशुक्लस्य मूर्धनि जुहोति जुम्बकाय स्वाहेति ॥ १६ ॥

अवभृथान्तेऽप्सु मग्नस्य पिङ्गलस्य खलतेः। खलतिः-खल्वाटः, विक्लिधो दन्तुरः, शुक्लः-अतिगौरस्तस्य मूर्धनि जुहोति "जुम्बकाय स्वाहा" ( वा० सं० २५।९ ) इति ॥ १६ ॥

## उत्क्रान्ते यजमाने पापकृतोऽभ्यवयन्त्यचरित्वा व्रतानि ॥

अवभृथादुत्तीर्णे यजमाने पापकृतोऽभ्यवयन्ति अचरित्वा व्रतानि। प्रक्रान्तप्रायश्चित्तस्य चैतद्भवति। 'अचरित्वा व्रतानि' इत्युक्तत्वात्। 'पापकृत्' ग्रहणेन च ब्रह्महा उच्यते ॥ १७ ॥

## अश्वमेधपूताख्यास्ते ॥ १८ ॥

'अश्वमेधपूता' इत्याख्यास्तेषाम्। पूता भवन्तीत्यर्थः। अपि च 'अश्वमेधावभृथे स्नात्वा पूता भवन्ति' इति स्मृतेः ॥ १८ ॥

## नानाऽवभृथानि वा ॥ १९ ॥

भवन्ति। 'प्रत्यहमवभृथेन चरन्ति' इति वचनात् ॥ १९ ॥

## कुम्भोपमारणान्तं पूर्वयोः ॥ २० ॥

अह्नोर्भवति ॥ २० ॥

कुत एतत् ?

## शेषे दीक्षाव्रताभावात् ॥ २१ ॥

कर्मशेषे दीक्षाव्रतस्याभावात् । 'अवभृथस्नानेन उन्मुक्तदीक्षो भवति' इत्यभिप्रायः(१) ॥ २१ ॥

## सर्वं वा श्रुतेः ॥ २२ ॥

सर्वं वा स्नानाद्यपि भवति । 'प्रत्यहमवभृथेन चरन्ति' इति श्रुतेः । यदुक्तं 'स्नानेनोन्मुक्तदीक्ष' इति, तन्न, वचनसामर्थ्यात् । सर्वावभृथान्त उन्मुक्तदीक्षो भवति । साभ्यासो ह्यवभृथोऽवभृथकार्ये वर्तते । यथा—'सप्ताहं दीक्षणीयया चरति' इति साभ्यासा दीक्षणीया दीक्षणीयाकार्ये वर्तते ॥ २२ ॥

## एकविंशतिरनूबन्ध्याः ॥ २३ ॥

'भवन्ति' इति शेषः । अभ्यस्तरूपमिदमेकं कर्म प्रकृतावेव, दृष्टत्वात् ॥ २३ ॥

## उदवसानीयान्ते भार्या ददाति यथासंवादं सानुचरीः॥२४॥

"उदवसानीयायां संस्थितायां चतस्रश्च जायाः कुमारीं पञ्चमीं चत्वारि च शतान्यनुचरीणां यथा समुदितं दक्षिणां ददाति" ( श० ब्रा० १३।५।४।२७ ) इति श्रुतेः ॥ २४ ॥

## कुमारीं पालागलीं चाध्वर्यवे ॥ २५ ॥

कुमारी यजमानदुहिता । एतेऽध्वर्यवे ददाति ॥ २५ ॥

## अनुचरीर्वा फलाधिकारादितरासाम् ॥ २६ ॥

'वा' शब्दः पक्षव्यावृत्तौ । न भार्या ददाति अनुचरीरेव दद्यात् । कुत एतत् ? फलाधिकाराद्भार्याणां यजमानतुल्या एवैता इति । मध्यमकं हि यजमानस्य पत्नीनां च द्रव्यं साधारणत्वाद्भोत्सर्गः सहैव भवति नान्यथेति । तत्कथं तर्हि वेदवाक्यं नेयम् ? चतस्रश्च जाया यजमानश्च चत्वारि च शतान्यनुचरीणां कुमारीं पञ्चमीं यथासंवादं दक्षिणां ददाति ॥ २६ ॥

---

१. यदि च प्रत्यहं स्नानान्तं क्रियेत ततो दीक्षोन्मोकः स्यात् । तथा चादीक्षितेनाऽह्नद्वयं कृतं स्यात्, स हि तदिष्यते । अतः कुम्भोपमारणान्तमेव कर्तव्यं तृतीयेऽह्नि स्नानान्तमिति ।

**अनारभ्यत्वाच्च ॥ २७ ॥**

अपि च यथा पत्न्यो यजमानदानेऽसमर्थाः एवं यजमानोऽपि पत्नीनाम्। तस्मादनारभ्योऽयमर्थः ॥ २७ ॥

**द्वादशाहमाग्नेयः पुरोडाशः ॥ २८ ॥**

गृहेषु कर्तव्यः । 'आग्नेय' इति न्यायसूत्रम् ॥ २८ ॥

**ब्रह्मौदनो वा ॥ २९ ॥**

"द्वादश ब्रह्मौदनानुत्थाय निर्वपति द्वादशभिर्वेष्टिभिर्यजत" ( श० ब्रा० १३।३।६।६ ) इति श्रुतेः ॥ २९ ॥

**प्रत्यृतुपशूनालभते षट् षड्वसन्ताद्याग्नेयानैन्द्रान्पार्जन्यान्मारुतान्वा मैत्रावरुणानैन्द्रावैष्णवानैन्द्राबार्हस्पत्यान् ॥ ३० ॥**

एवमपि हि श्रूयते ॥ ३० ॥

इति विंशेऽध्यायेऽष्टमी कण्डिका ॥

इति ककर्भाष्यसहिते कात्यायनश्रौतसूत्रे
विंशतितमोऽध्यायः समाप्तः ।

अश्वमेधः समाप्तः ।

# एकविंशोऽध्यायः ।

## पुरुषमेधः

१

**पुरुषमेधस्त्रयोविꣳशतिदीक्षोऽतिष्ठाकामस्य ॥ १ ॥**

'पुरुषमेध' इति कर्मणो नामधेयम् । स च पञ्चरात्रः स्यात् । "स वाऽ एष पुरुषमेधः पञ्चरात्रो यज्ञक्रतुर्भवति" (श० ब्रा० १३।६।१।७) इति श्रुतेः । त्रयोविंशतिदीक्षः । तस्य त्रयोविꣳशतिर्दीक्षा" (श० ब्रा० १३।६।१।२) इति वचनात् । 'अतिष्ठाकामस्य' इति । सर्वाणि भूतान्यतीत्य तिष्ठत इति 'अतिष्ठ' इत्युच्यते तत्कामस्य ॥ १ ॥

**ब्राह्मणराजन्ययोः ॥ २ ॥**

भवति, न वैश्यस्य ॥ २ ॥

**अग्निष्टोमावन्तरेणातिरात्र उक्थ्यपक्षः ॥ ३ ॥**

पञ्चरात्रस्याद्यन्तयोरग्निष्टोमो मध्येऽतिरात्रः तमभित उक्थ्यौ । संस्थामात्रविधानाच्च सर्वे एतेऽपूर्वाः । अतश्च द्वादशाहिको विध्यन्तः प्रत्येकम् ॥ ३ ॥

**यूपैकादशिनी भवति ॥ ४ ॥**

अत्र ॥ ४ ॥

**तावन्तोऽग्नीषोमीयाः ॥ ५ ॥**

"एकादशाग्नीषोमीयाः पशव उपवसथे" (श० ब्रा० १३।६।१।४) इति श्रुतेः । ते च मध्यमे यूपे नियुज्यन्ते । न ह्यत्राश्वमेधवत्प्रतियूपश्रवणम् ॥ ५ ॥

**पशूनुपाकरिष्यन्नतिरात्रे देवसवितरिति प्रत्यृचं तिस्रो जुहोति ॥ ६ ॥**

"स वै पशूनुपाकरिष्यन्" इति प्रकृत्य "एतास्तिस्रः सावित्रीराहुतीर्जुहोति" (श० ब्रा० १३।६।२।९) इति श्रवणात् ॥ ६ ॥

**ऐकादशिनानुपाकृत्य ब्राह्मणादींश्च ॥ ७ ॥**

'च'शब्दादुपाकरोति। "ब्रह्मणे ब्राह्मणम्" इति चैते ब्राह्मणादयः ॥ ७ ॥

नियोजनकालेऽष्टाचत्वारिंशतमाद्यानग्निष्ठे ॥ ८ ॥

'नियुनक्ति' इति शेषः ॥ ८ ॥

इतरेष्वेकादशैकादश ॥ ९ ॥

इतरेषु एकादशैकादश नियुनक्ति ॥ ९ ॥

द्वितीयोच्छ्रिते शेषान् ॥ १० ॥

अन्ते मा भूदिति 'द्वितीयोच्छ्रित'ग्रहणम् ॥ १० ॥

नियुक्तान् ब्रह्माऽभिष्टौति होतृवदनुवाकेन सहस्रशीर्षेति ॥

'होतृवत्' इति शस्त्रवदभिष्टवः ॥ ११ ॥

कपिञ्जलादिवदुत्सृजन्ति ब्राह्मणादीन् ॥ १२ ॥

पर्यग्निकृतानुत्सृजन्तीत्यर्थः ॥ १२ ॥

स्विष्टकृद्वनस्पत्यन्तरे पुरुषदेवताभ्यो जुहोति ॥ १३ ॥

आज्येन ॥ १३ ॥

सपुरुषमश्वमेधवद्दक्षिणा ॥ १४ ॥

राज्ञः ॥ १४ ॥

सर्वस्वं ब्राह्मणस्य ॥ १५ ॥

"अथ यदि ब्राह्मणो यजेत सर्ववेदसं दद्यात्" ( श० ब्रा० १३।६।२।१९ ) इति श्रुतेः ॥ १५ ॥

प्रतिदेवतं तिस्रस्तिस्रोनूबन्ध्याः पञ्चोत्तमायाम् ॥ १६ ॥

तिस्रो मैत्रावरुण्यः, तिस्रो वैश्वदेव्यः, पञ्च बार्हस्पत्यः ॥ १६ ॥

त्रैधातव्यन्ते समारोह्यात्मन्नग्नी सूर्यमुपस्थायाद्भ्यः सम्भृत इत्यनुवाकेनानपेक्षमाणोऽरण्यं गत्वा न प्रत्येयात् ॥ १७ ॥

त्रैधातव्यन्ते आत्मन्नग्नी समारोह्य "अद्भ्यः सम्भृतः०" ( वा० सं० ३१।१७ ) इत्यनुवाकेन सूर्यमुपस्थायारण्यमियात्, अपुनर्गृहाय। ततश्चाश्रमान्तरप्राप्तिरियमिति।

यच्च स्मृतिषूच्यते—

प्राजापत्यां निरूप्येष्टिं सर्ववेदसदक्षिणाम् ।
आत्मन्यग्नी समारोप्य ब्राह्मणः प्रव्रजेद् गृहात् ॥ ( म० स्मृ० ६।३८ )

इति । सा चेयं पुरुषमेधाख्या सर्वस्वदक्षिणा प्राजापत्येष्टिस्तां निरूप्य पारिव्रज्यं ब्राह्मणस्य । एवं च "यावज्जीवमग्निहोत्रं जुहुयात्" इति श्रुतिरनया श्रुत्या विकल्पते । अथ स्मार्त्तेष्टिः प्राजापत्या स्यात्तदानीं स्मृत्या श्रुतिर्बाधिता स्यात् । न चैतदिष्यते । पुरुषमेधः कथं प्राजापत्येष्टिरिति चेत् ? सन्ति ह्यत्र प्राजापत्याः पशवस्तदुपलक्षिता प्राजापत्येत्युक्ता ॥ १७ ॥

## ग्रामे वा विवत्सन्नरण्योः ॥ १८ ॥

"यद्यु ग्रामे विवत्सेदरण्योरग्नी समारोह्योत्तरनारायणेनैवादित्यमुपस्थाय गृहेषु प्रत्यवस्येत्" ( श० ब्रा० १३।६।२।२० ) इति ॥ १८ ॥

इत्येकविंशेऽध्याये प्रथमा कण्डिका ।

२

सर्वमेधः

## सर्वमेधः सर्वकामस्य ॥ १ ॥

'सर्वमेध' इति कर्मनामधेयम्, विध्यर्थवादमन्त्रत्वासम्भवात् । स सर्वकामस्य भवति ॥ १ ॥

## दशरात्रः ॥ २ ॥

उपक्रमात्तत्सिद्धेर्दशरात्रग्रहणं न कर्तव्यम् । क्रियते च । तत्किमर्थम् ? "अग्निष्टुत्त्रय उक्थ्याः" ( का० श्रौ० २१।२।४ ) इति वक्ष्यति । तत्रेन्द्रस्तुदादिभ्योधिका उक्थ्या मा भूविन्निति इन्द्रस्तुदादय एवोक्थ्याः ॥ २ ॥

## अग्निरुत्तमः ॥ ३ ॥

एकशतविधोऽग्निरत्र ॥ ३ ॥

## अग्निष्टुत्त्रय उक्थ्या इन्द्रस्तुत्सूर्यस्तुद्वैश्वदेवस्तुद्व्रतं वाजपेयोऽप्तोर्यामः सर्वमस्मिन्नालभते ॥ ४ ॥

अस्मिन्नग्नीषोमे सर्वमालभ्यते। "तस्मिन्त्सर्वान्मेध्यानालभते" ( श० ब्रा० १३।७।१।९ ) इति श्रुतेः। अशक्यार्थोपदेश इति चेत् ? न हि निरवग्रहः सर्वालम्भः शक्यते कर्तुम्। एवं चेद्येषामेवोपलम्भो दृष्टस्तेषां सर्वतोच्यते। ते च "पुरुषोऽश्वो गौरविरज" इति। अपि चान्ते सर्वशब्दो दृश्यते—"पुरुषोऽश्वो गौरविरज" इति प्रकृत्य "एतावन्तो वै सर्वे पशवः" ( श० ब्रा० ६।२।१।१५ ) इति। तस्मात् सर्वशब्देन पञ्चपश्वालम्भ उच्यते। अतिरात्रविकारत्वाच्चाग्नीषोमस्य तत्स्तोमायनदेवताभ्य आलभ्यन्त एकैकस्यै देवतायै पञ्च पञ्च पशव आलभ्यन्ते, विभागाभावात्। लिङ्गाच्च— 'अवपाकानां त्वचो जुहोति' ( का० श्रौ० २१।२।५ ) इति। यदि पञ्चैते पशव एते स्युः, ततः 'अवपाकानां त्वचो जुहोति' इति बहुवचनमुपपन्नम्। तस्मात्प्रतिदैवतं पञ्च पञ्च पशवः। सर्वे चैते यूपे नियुज्यन्ते। स्तोमायनं ह्येतदिति सर्वत्र चात्र स्तोमायनम्। न ह्येकादशिनी विहृता सम्भवति। न चैन्द्राग्नः क्वचित्प्रत्यक्षविधानात् ॥ ४ ॥

## अवपाकानां त्वचो जुहोति ॥ ५ ॥

अवपाकानां वपावर्जितानां त्वचो जुहोति। पुरुषाश्चावपाकाः ॥ ५ ॥

अग्नीषोम एवायमपरो विशेषः—

## ओषधिवनस्पतीनाᳪं संव्रश्चम् ॥ ६ ॥

'प्रकिरति' इति शेषः। संव्रश्चः—कूट उच्यते(१) ॥ ६ ॥

## अन्नमन्नं जुहोति वपान्ते ॥ ७ ॥

## तृतीयसवने च हुतेषु हविःषु ॥ ८ ॥

अयं च सर्वान्नैर्दर्विहोमः पूर्वतरमोषधिवनस्पतिसंव्रश्चं प्रकीर्य कर्तव्यः। एवमपि हि श्रूयते—"संव्रश्चमोषधिवनस्पतीनां प्रकिरन्ति शुष्काणां चार्द्राणां चान्नमन्नं जुहोति" ( श० ब्रा० १३।७।१।९ ) इति ॥ ८ ॥

## आश्वमेधिकं मध्यमं व्रतस्थाने ॥ ९ ॥

इदमपरं विकल्परूपतयोच्यते। व्रतस्थाने आश्वमेधिकं मध्यममहर्भवति ॥ ९ ॥

## पौरुषमेधिकं वाजपेयस्य ॥ १० ॥

मध्यममहर्भवति। अत्र चाश्वमेधिकार्थं यूपानामेकविंशतिर्भवति। मध्यमस्य तज्जात्यनुग्रहे तु बहूनामह्नां विरोधस्तस्मात्खादिरो भवति। प्रमाणं त्वविरोधाद्भवत्येव वाजपेयिकपक्षे सप्तदशारत्निता ॥ १० ॥

---

१. संव्रश्चमिति णमुलन्तमेतत्। छित्वा छित्वा खण्डानि ओषधिवनस्पतीनामाहवनीये प्रकिरतीत्यर्थः।

## त्रिणवत्रयस्त्रिꣳशा उक्थ्यौ ॥ ११ ॥

त्रिणवत्रयस्त्रि?शौ क्रतू उक्थ्यसंस्थौ भवतः। तौ च पूर्वस्तोमसम्बन्धिनौ, तत्र दृष्टत्वात् ॥ ११ ॥

## अतिरात्रो विश्वजित् ॥ १२ ॥

भवति। "विश्वजित् सर्वपृष्ठोऽतिरात्रो दशममहर्भवति" (श०ब्रा०१३।७।१।१२) इति श्रुतेः ॥ १२ ॥

## पुरुषमेधवद्दक्षिणा सभूमि ॥ १३ ॥

इत्येकविंशेऽध्याये द्वितीया कण्डिका।

पितृमेधः

३

सर्वमेध उक्तः। इदानीमवसरप्राप्तः पितृमेधोऽनुविधीयते—

## पितृमेधः संवत्सराऽस्मृतौ ॥ १ ॥

'पितृमेध' इति कर्मणो नामधेयम्। स च संवत्सराऽस्मृतौ भवति। यदा न स्मर्यन्ते संवत्सराः मृतस्य। "यत्र समा नानु चन स्मरेयुः" (श० ब्रा० १३।८।१।२) इति श्रुतेः ॥ १ ॥

## अयुग्मेषु वा ॥ २ ॥

"अयुग्मेषु संवत्सरेषु कुर्यात्" (श० ब्रा० १३।८।१।३) इति श्रुतेः। अतश्च विकल्पोयम् ॥ २ ॥

## एकनक्षत्रे ॥ ३ ॥

"एकनक्षत्रꣳ हि पितृणाम्" (१३।८।१।३) इति। एकनक्षत्रं च–यत्रैका तारका चित्रास्वातिरेवतीत्यादि यथा ॥ ३ ॥

## अमावास्यायाम् ॥ ४ ॥

'वा' इति समार्थ्याद्द्रष्टव्यम्। समुच्चयः कस्मान्न भवति एकनक्षत्रेऽमावास्यायां च ? नैतदेवम्। अमावास्यायामेकनक्षत्रसंस्तवश्रवणात्। "अमावास्यायाममावास्या वाऽ एकनक्षत्रम्" (श० ब्रा० १३।८।१।३) इति। तच्च समुच्चये न घटते ॥ ४ ॥

निदाघशरन्माघेषु ॥ ५ ॥

निदाघः—ग्रीष्मः । शरद्—शरदेव । माघोऽपि माघ एव । एवं हि श्रूयते—"निदाघे वा नि नोऽघं धीयाता" इति, "शरदि कुर्यात्स्वधा वै शरत्स्वधो वै पितृणामन्नं" "माघे वा मा नोऽघं भूत्" ( श० ब्रा० १३।८।१।४ ) इति च ॥ ५ ॥

यावन्तो ध्रुविष्यन्तः स्युस्तावतः कुम्भानादाय छत्राणि चापरिमितानि ॥ ६ ॥

ध्रुविष्यन्तः पुत्रपौत्राः । वक्ष्यति हि—'अमात्या धून्वतस्त्रिस्त्रिः परिक्रामन्ति' ( का० श्रौ० २१।३।७ ) ॥ ६ ॥

शरीराणि ग्रामसमीपमाहृत्य कुम्भेन तल्पे कृत्वाहतपक्षेण परितत्यायसेषु वाद्यमानेषु वीणायां चोद्धतायाममात्यास्त्रिस्त्रिः परिक्रामन्त्युत्तरीयैरुपवाजनैर्वोपवाजयन्तः ॥७॥

कुम्भेन शरीराणि ग्रामसमीपमाहृत्याहतस्य वाससः पक्षेण परितत्य आयसेषु वादित्रेषु वाद्यमानेषु उद्धतायां वीणायां च वाद्यमानायाम् अमात्या उत्तरीयैः उपवाजनैर्वोपवाजयन्तः त्रिस्त्रिः परिक्रामन्ति ॥ ७ ॥

स्त्रियो वा ॥ ८ ॥

परिक्रामन्ति । 'वा' इति विकल्पः ॥ ८ ॥

पूर्वरात्रमध्यापररात्रेषु च ॥ ९ ॥

'च' शब्दात्परिक्रामन्ति ॥ ९ ॥

विफल्फान्नमहरेतत् ॥ १० ॥

फल्फ वृद्धौ । बह्वन्नमेतदहर्भवति ॥ १० ॥

नृत्यगीतवादित्रवच्च ॥ ११ ॥

भवति ॥ ११ ॥

अन्नमस्मा उपसंहरन्त्येके ॥ १२ ॥

अस्मा अस्थिकुम्भाय एकेऽन्नोपहारं कुर्वन्ति ॥ १२ ॥

उपव्युषसꣳ सशरीरा दक्षिणा गच्छन्ति ॥ १३ ॥

उषसि विगच्छन्त्यां सह शरीरेण दक्षिणा गच्छन्ति ॥ १३ ॥

यथाकुर्वतोऽभ्युदियात्सूर्यः ॥ १४ ॥

तथा यत्न आस्थेयः ॥ १४ ॥

कक्षेऽवतापिनि ॥ १५ ॥

श्मशानं कर्तव्यम्। कक्षः—गहनप्रदेशः। अवतापी यस्मिन्नुपरि स्थितः सूर्यस्तपति, न पार्श्वस्थः ॥ १५ ॥

ऊषर उदक्प्रवणे समे वा ॥ १६ ॥

दक्षिणाप्रवण एके ॥ १७ ॥

अदर्शनाद् ग्रामात् ॥ १८ ॥

आरात्पथः ॥ १९ ॥

दूरात्पथ इति ॥ १९ ॥

न्यग्रोधाश्वत्थतिल्वकहरिद्रुस्फूर्जकबिभीदकपापनामभ्यश्च॥

दूरात्करोति ॥ २० ॥

चितिवच्च ॥ २१ ॥

देशो भवति। तद्गुणयुक्त इत्यर्थः ॥ २१ ॥

शंवति कंवति वा ॥ २२ ॥

'शम्' इति सुखनीयः प्रदेशः, 'कम्' इति रमणीयः, तत्र करोति। 'वा'शब्दो विकल्पार्थः ॥ २२ ॥

चित्रं पश्चात् ॥ २३ ॥

चित्रमनेकप्रकारं वनं यस्य प्रदेशस्य सोऽङ्गीकर्तव्यः ॥ २३ ॥

तदभाव उदकमुत्तरतो वा ॥ २४ ॥

प्रदेशस्य, भवति ॥ २४ ॥

कषूवीरिणवति ॥ २५ ॥

'कषू' शब्देन क्रुहसार उच्यते। वीरिणानि तृणानि, तद्वति प्रदेशे करोति॥२५॥

**ग्रामतस्तेजनीमुच्छ्रित्य न न्यस्येद्गृहेषूच्छ्रयेत् ॥ २६ ॥**

"तां न न्यस्येद् धृत्वा वेनामूढ्वा वा गृहेषूच्छ्रयेत्" ( श० ब्रा० १३।८।३।१२) इति श्रुतेः ॥ २६ ॥

**दिक्स्रक्ति पुरुषमात्रं मिमीते ॥ २७ ॥**

तच्छ्मशानं दिक्स्रक्ति पुरुषमात्रं मेयम् ॥ २७ ॥

**उत्तरतः पृथु पश्चाच्च ॥ २८ ॥**

कर्तव्यम् ॥ २८ ॥

**विहृत्य स्रक्तिषु शङ्कूनाहन्ति ॥ २९ ॥**

'विहृत्य' इति मित्वा कोणेषु शङ्कूनाहन्ति ॥ २९ ॥

**पालाशं पुरस्ताच्छामीलवारणदेहशङ्कूनन्याखु ॥३०॥**

स्रक्तिषु अप्रदक्षिणम ॥ ३० ॥

**देहशङ्कुर्वृत्रशङ्कुः ॥ ३१ ॥**

वृत्रः पाषाणः । "वृत्रशङ्कुं दक्षिणतः" (श० ब्रा० १३।८।४।१) इति श्रुतेः॥३१॥

**अपसलविसृष्टया रज्ज्वा परितत्यापेतो यन्त्विति पलाश-शाखया व्युदूहति ॥ ३२ ॥**

अपसलविसृष्टा—अप्रदक्षिणवलिता, तया परितत्य "अपेतो यन्तु" इत्यनेन मन्त्रेण पलाशशाखया व्युदूहति मितप्रदेशम् ॥ ३२ ॥

**दक्षिणा शाखां निरस्य परिश्रिद्भिः परिश्रयति पूर्ववद-परिमिताभिः ॥ ३३ ॥**

गार्हपत्य( चिति ) परिश्रिदपेक्षया इहापरिमितत्वम् । एवं हि श्रूयते—"यजुषा ताः परिश्रयति तूष्णीमिमाः" ( श० ब्रा० १३॥८।२।२ ) इति । यजुषा च परिश्रयणं गार्हपत्यपरिश्रिताम् ॥ ३३ ॥

**औदुम्बरसीर उत्तरतो वा षड्गवे युज्यमाने युङ्क्तेति सम्प्रेष्य सविता त इति जपति ॥ ३४ ॥**

'प्रेषितेन ग्रोजनमौदुम्बरसीरेभ्यः षड्भिर्बलीवर्द्दैर्युज्यमाने 'सविता ते' इति जपति । सम्प्रेषणजपौ याजमानौ ॥ ३४ ॥

इत्येकविंशेऽध्याये तृतीया कण्डिका ॥

४

अनुरज्जु चतस्रः सीताः कृषति वायुः पुनात्विति प्रतिमन्त्रम् ॥ १ ॥

उत्तरतः प्रतीचीं प्रथमाम् ॥ २ ॥

"अग्नेर्भ्राजसा सूर्यस्य वर्चसा" इति चात्र 'कृषामि' इत्यध्याहारः साकाङ्क्षत्वात् ॥ २ ॥

अपरिमिता मध्ये तूष्णीम् ॥ ३ ॥

सीताः कृषति ॥ ३ ॥

अनडुहो विमुच्य विमुच्यन्तामिति दक्षिणा सीरं निरस्याश्वत्थे व इति सर्वौषधं वपति ॥ ४ ॥

कृष्टे ॥ ४ ॥

सविता त इति शरीराणि निवपति मध्ये ॥ ५ ॥

"सविता ते" इत्यनेन मन्त्रेण कृष्टमध्ये शरीराणि निवपति ॥ ५ ॥

तूष्णीमन्यः कुम्भमाक्ष्णोति दक्षिणाऽनवानन्तसृत्वा ॥ ६ ॥

अन्यः-अध्वर्युव्यतिरिक्तः तूष्णीमनवानं दक्षिणा गत्वा कुम्भमाक्ष्णोति क्षिपतीत्यर्थः । भिनत्ति इत्यपरे ॥ ६ ॥

प्रत्यागते परं मृत्यविति जपति ॥ ७ ॥

प्रत्यागते चेप्सरि "परं मृत्यो" इति जपति ॥ ७ ॥

शं वात इति यथाङ्गं कल्पयित्वेष्टकां निदधाति मध्ये तूष्णीम् ॥ ८ ॥

"अथैनं यथाङ्गं कल्पयति" ( श० ब्रा० १३।८।३५ ) इति श्रुतेः। 'तूष्णीम्' इति लौकिकवागुच्चारणप्रतिषेधः ॥ ८ ॥

प्रतिदिशमन्तेषु पराचीस्तिस्रस्तिस्रोऽलक्षणाः पादमात्रीः॥

'पराचीः' इति नाभ्यात्मम् ॥ ९ ॥

प्रदरात्पुरीषमाहृत्य परिकृष्य वा सर्वतोऽपुरस्तात् ॥१०॥

पुरीषं प्रक्षिपति श्मशाने ॥ १० ॥

शर्करा अनग्निचितः ॥ ११ ॥

शर्करा इष्टका भवन्ति ॥ ११ ॥

ऊर्ध्वप्रमाणमास्यं ब्राह्मणस्य ॥ १२ ॥

श्मशानं भवति। ततश्च परिश्रितस्तावत्प्रमाणा भवन्ति ॥ १२ ॥

उरः क्षत्रियस्य ॥ १३ ॥

प्रमाणम् ॥ १३ ॥

ऊर्ध्वबाहु वा ॥ १४ ॥

'वा' इति विकल्पः ॥ १४ ॥

ऊरू वैश्यस्य ॥ १५ ॥

उपस्थः स्त्रियाः ॥ १६ ॥

जानु शूद्रस्य ॥ १७ ॥

प्रमाणम् ॥ १७ ॥

सर्वेषां वाऽधोजानु ॥ १८ ॥

प्रमाणम्। 'वा' शब्दो विकल्पार्थः ॥ १८ ॥

अवकाभिः कुशैश्च प्रच्छाद्य ॥ १९ ॥

परिकृष्टं चेद्यवान्वपेत् ॥ २० ॥

यदि परिकृष्ट–पुरीषं ततश्च तत्र यवानां वापः प्रतिक्रमेण ॥ २० ॥

दक्षिणतः कुटिले कर्षूं खात्वा क्षीरोदकाभ्यां पूरयन्ति सप्तोत्तरतः प्राचीरुदकस्य ॥ २१ ॥

कर्षूं न्पूरयन्ति ॥ २१ ॥

त्रींस्त्रीनावपन्त्यश्मनः ॥ २२ ॥

अमात्याः कर्षुषु ॥ २२ ॥

अध्यधिगच्छन्त्यश्मन्वतीरिति ॥ २३ ॥

अनेन मन्त्रेण कर्षुषु ॥ २३ ॥

अपाघमित्यपामार्गैरपमृजते ॥ २४ ॥

"अपाघम्" इत्यनेन मन्त्रेण अपामार्गैरात्मानममात्या अपमृजन्ति ॥ २४ ॥

सुमित्रिया न इति स्नात्वाऽहतवाससोऽनडुत्पुच्छमन्वारभ्यानड्वाहमित्युद्वयमित्यागच्छन्ति ॥ २५ ॥

"सुमित्रिया न" इति स्नात्वा अहतानि वासांसि परिधाय "अनड्वाहम्" इत्यनेन मन्त्रेणानडुत्पुच्छमन्वारभ्य "उद्वयम्" इत्यागच्छन्ति ॥ २५ ॥

ग्रामश्मशानान्तरे मर्यादालोष्टं निदधातीमं जीवेभ्य इत्यनेन मन्त्रेण ॥ २६ ॥

अनेन मन्त्रेण "मर्यादाया एव लोष्टमाहृत्य" (श० ब्रा० १३।८।४।१२) इति वचनात् ॥ २६ ॥

अञ्जनाभ्यञ्जने कृत्वौपासनं परिस्तीर्य वारणान्परिधीन्परिधाय वारणेन स्रुवेणैकामाहुतिं जुहोत्यग्न आयूंषि आयुष्मानग्न इति ॥ २७ ॥

अञ्जनमक्ष्णोः, अभ्यञ्जनं च पादयोः कृत्वा औपासनं परिस्तीर्य वारणान्परिधीन्परिधाय परिधानोपदेशाच्चत्वारः परिधयः। वारणेन स्रुवेणैकामाहुतिं जुहोति "अग्नऽ आयूंषि" "आयुष्मानग्न" इति द्वाभ्यामृग्भ्याम्। औपासनश्चात्र कर्तृसम्बन्धी न प्रेतसम्बन्धी। तेन ह्यसौ विहितकर्मानुष्ठानसाधनभावायाहित इति तत्परिधीनां च संस्कारो न भवति, अपूर्वत्वात् ॥ २७ ॥

## अथैषां परिदां वदति परीमे गामनेषतेति ॥ २८ ॥

'अथ' शब्दो मङ्गलार्थः। पित्र्यं कर्म निवृत्तमिति। आनन्तर्यार्थमित्यपरे। ततश्चानन्तरमर्थलक्षणमपि न कर्तव्यम्। परिदावादश्च यजमानविषयोऽमात्यविषयश्च। तेन 'एषाम्' इत्युक्तम् ॥ २८ ॥

## अद्वारेणौपासनं निरस्यति क्रव्यादमिति ॥ २९ ॥

अनेन मन्त्रेण। औपासनश्च यस्मिन्नाहुतिर्हुता स एव ग्रहीतव्यो न प्रेतौपासनः। तस्यैकदेशं निरस्यति। स एव ह्यानन्तर्यात्सम्बध्यते। तदेकदेशं निरस्यति। तथा च मन्त्रवर्णः—"इहैवायमितरो जातवेदा देवेभ्यो हव्यं वहतु प्रजानन्" इति। जपमन्त्र एतदभिधीयते—एकदेशो निरस्तः। एकदेशे इतरशब्दो वर्तत इति ॥ २९ ॥

## इहैवायमिति जपति ॥ ३० ॥

## आसन्दी सोपधाना दक्षिणानड्वान्यवाँश्च सर्वं पुराणं भूयसीश्चेच्छन् ॥ ३१ ॥

भूयसीश्च इच्छन् ॥ ३१ ॥

इत्येकविंशेऽध्याये चतुर्थी कण्डिका ॥

इति कर्कभाष्यसहिते कात्यायनश्रौत्रसूत्रे
एकविंशतितमोऽध्यायः समाप्तः।



# द्वाविंशोऽध्यायः

## एकाहाः

## १

### अथैकाहाः ॥ १ ॥

उक्तान्याधानादीन्यध्वर्युवेदविहितानि पितृमेधान्तानि कर्माणि । इदानीं छान्दोग्यवेदविहितान्येकाहादीनि सत्त्राणि व्याचिख्यासुराचार्य इदमाह–अथैकाहा इति । तत्रायम् 'अथ'शब्दोऽधिकारान्तरप्रज्ञप्त्यर्थः । वेदान्तरविहितानि कर्माणि व्याख्यातुमधिक्रियन्ते । अधिकारान्तरप्रज्ञप्तेः किं प्रयोजनमिति चेत् ? इह चोदकपरिप्राप्ताङ्गपदार्थव्यतिरेकेणोद्गातुः कर्तृत्वं यथा स्यादिति । कुत एतदिति चेत् ? उद्गातृवेदसमधीतत्वात्समाख्ययोद्गातुरेव कर्तृत्वमिति । ननु च सर्व एवैते उद्भिदादय उद्गातृवेदसमधीताः ? सत्यमेवं, प्रधानेषु न समाख्यया कर्तृत्वम्, 'उद्भिदा यजेत पशुकामः' इति सर्वं प्रत्युपदेशात् । अङ्गेषु त्वपूर्वेषु समाख्यया कर्तृत्वमिष्यते । यानि पुनश्चोदकप्राप्तानि तान्यपि गृहीतकर्तृकाण्येवेति । (१)एकाहाः 'व्याख्यास्यन्त' इति सूत्रशेषः । एकाहैश्चोपलक्षणमहीनसत्त्राणामपि ॥ १ ॥

### अवचनेऽग्निष्टोमः ॥ २ ॥

संस्थान्तरस्यावचनेऽग्निष्टोमो भवति । न्यायसूत्रमेतत् । प्राथम्यादविरोधान्नित्यत्वाच्चाग्निष्टोम एव भवति ॥ २ ॥

### भूर्धेनुदक्षिणः ॥ ३ ॥

भूर्नामा एकाहस्स धेनुदक्षिणो भवति । तद्दक्षिणासंयोगेन धेनुविधानात्सकलस्य दाक्षिण्यस्य निवर्तिका धेनुः । अत्र च दक्षिणाभिमन्त्रणमन्त्रो विपरिणम्यते ॥ ३ ॥

### ज्योतिः ॥ ४ ॥

ज्योतिर्नाम एकाहः, नात्र कश्चिद्विशेषः ॥ ४ ॥

### गो आयुषी उक्थ्यौ ॥ ५ ॥

एको गौः अपर आयुः । तावुक्थ्यसंस्थौ भवतः ॥ ५ ॥

---

१. एकसुत्याः क्रतव इत्यर्थः ।

## अभिजिद्विश्वजितौ ॥ ६ ॥

अपरावेकाहौ ॥ ६ ॥

## सहस्रमभिजितो दक्षिणा ॥ ७ ॥

ततश्च यत्सहस्रसंख्यासंयोगेन श्रूयते, तदत्र भवति। यथाश्वदाभ्यग्रहणम् तिस्रोऽनूबन्ध्यास्त्रैधातवी इति ॥ ७ ॥

## शताश्वं वा ॥ ८ ॥

शतमश्वानां यस्मिन्सहस्रे तच्छताश्वं सहस्रम्। तद्वाऽभिजिद्दक्षिणेति विकल्पः॥८॥

## सहस्रं सर्ववेदसं विश्वजितः ॥ ९ ॥

सहस्रसर्ववेदसयोर्विश्वजिति विकल्पः' सर्ववेदसपक्षे इदमुच्यते ॥ ९ ॥

## ज्येष्ठं पुत्रमपभज्य भूमिशूद्रवर्जं योगाविशेषात्सर्वेषाम् ॥

ज्येष्ठपुत्रस्य विभागं दत्त्वा भूमिशूद्रवर्जं ददाति। कुत एतत्? सर्वमनुष्याणां हि भूम्या योगोऽविशिष्टः धारणं(१) चङ्क्रमणद्वारेण। शूद्रस्य च शुश्रूषोपनतत्वेनेति ॥ १० ॥

## शूद्रदानं वा दर्शनाविरोधाभ्याम् ॥ ११ ॥

'वा'शब्दः पक्षव्यावृत्तौ। शूद्रस्य दानं भवति। दृश्यते हि शूद्रस्य दानं पुरुषमेधे "सपुरुषं प्राची दिग्घोतुः" (श० ब्रा० १३।६।२।१८) इति। न च विरोधो गर्भदासस्य। तस्माच्छूद्रो दीयत एव। अनेन च न्यानेन भूमेरप्येकदेशदाने नैव विरोधः। क्वचिच्च दृश्यते "सभूमि सपुरुषम्" ( श० ब्रा० १३।७।१।१३ ) इति ॥ ११ ॥

## द्रव्याभावात्तदन्तः ॥ १२ ॥

दक्षिणादानान्तो विश्वजिद्भवति। कुत एतत्? द्रव्याभावात्। सर्वस्वदाने सति द्रव्यमेव नास्ति इति तदन्तो विश्वजित् ॥ १२ ॥

## समाप्तिर्वा चोदितावभृथश्रुतेः ॥ १३ ॥

'वा'शब्दः पक्षव्यावृत्तौ। समाप्येत वा विश्वजित्। चोदितो ह्यसौ "विश्वजिता यजेत" इत्यपवर्गपर्यन्त आख्यातार्थः। अपि चावभृथश्रुतिर्भवति। "अवभृथादुदेत्य

---

१. भूमेस्तावद्धारणशयनासनचङ्क्रमणादिसम्बन्धः सर्वेषामविशिष्टः। यः शूद्रो धर्मार्थं सेवां कुरुते सोपि सर्वेषामविशिष्ट एव।

वत्सछविं परिदधाति" ( ला० सू० ८।२।१ ) इति वत्सच्छविपरिधानविधिपरे वाक्ये अवभृथं दर्शयति ॥ १३ ॥

## दीक्षासु चापदेशात् ॥ १४ ॥

दीक्षासु च क्रत्वभिनिर्वृत्त्यर्थं द्रव्यमपदिष्टम्(१)। अतस्तद्व्यतिरिक्तं सर्वस्वमिति॥१४॥

## न समत्वात् ॥ १५ ॥

नैतदेवं युक्तं 'विश्वजित्समाप्येत' इति। समं ह्येतदुभयं 'विश्वजिता यजेत' इति समाप्तिश्चोदिता, 'सर्वस्वञ्च ददाति' इति च सर्वस्वदानम्। अतो विरोधाद्विकल्प एव युक्तरूपः। एवं स्थिते पुनः आधीतेन व्याख्यायते। सममेतदिति चेत्? नैतत्समम्। 'विश्वजिता यजेत' इति पूर्वचोदना प्रधानचोदना च। 'सर्वस्वं ददाति' गुणचोदना पश्चात्कालत्वाच्चिनी च। तेन विरोधे सति अयमेवार्थो ग्रहीतुं न्याय्य इति। विकल्पश्च तुल्यत्वे भवति, न चेह तुल्यत्वमित्युक्तम् ॥ १५ ॥

विश्वजिति सहस्रसर्ववेदसयोर्विकल्प उक्तः। तत्र सन्देहः किं प्रागपि सहस्रात्सर्ववेदसं भवति, उतोर्ध्वं सहस्रादिति। किं तावत्प्राप्तम्? सूत्रेणैवोपक्रमः—

## परिमाणे सर्वमविशेषात् ॥ १६ ॥

सर्वस्वपरिमाणे मृग्ये यस्य यावत्स्वं तत्सर्वं गृह्यते। 'सर्वं वेदः सर्ववेदसम्' इति। तेन प्रागपि सहस्रात्सर्ववेदसं भवति ॥ १६ ॥

एवं प्राप्त आह—

## अधिकं वा प्रकृत्यनुग्रहात् ॥ १७ ॥

अधिकं वा सहस्रात्सर्ववेदसं ग्रहीतव्यम्। प्रकृत्य हि सर्ववेदसं सहस्रेणानुग्रहं दर्शयति—"कोऽर्हति मनुष्यः सर्ववेदसं दातुं, तस्मात्सहस्रं देयम्" इति। एतच्च सहस्रादधिके उपपद्यते नेतरथा ॥ १७ ॥

एवं तावदत्र सहस्राधिकं सर्ववेदसमित्युक्तम्। अन्यत्रापि प्रतिहर्त्रपच्छेदादौ सहस्राधिके प्राप्ते आह—

## नानित्यत्वात् ॥ १८ ॥

नैतदेवम्—सहस्रादधिकं सर्ववेदसमिति। न हि नित्ये कस्मिंश्चित्परिमाणविशेषे सर्ववेदसशब्दः प्रसिद्धः। यद्यस्य वेदः सर्वं तत्सर्वस्वमिति ॥ १८ ॥

## कर्मशब्दाच्च ॥ १९ ॥

---

१. "क्रत्वर्थमपदिश्यान्यस्मा०" ( का० श्रौ० ७।२।७ ) इति सूत्रेण।

अस्ति चायं लोके (१)व्यापारशब्दः सर्वमनेन दत्तमिति। तस्मात्प्रागपि सहस्रात्सर्वस्वमिति। विश्वजिति तु लिङ्गेन व्यवस्था ॥ १९ ॥

**अवभृथादुदेत्य रोहिण्यौ वत्सछव्यौ सकर्णपुच्छाऽवछाते परिदधाते ॥ २० ॥**

अवभृथादुत्थाय रौहिण्यौ वत्सछव्यौ सकर्णपुच्छावच्छिन्ने परिदधाते ॥ २० ॥

**द्वादशरात्रं परिवसत्युखावदभ्रिं बिभ्रत् ॥ २१ ॥**

उखावदिति वैणवीम् ॥ २१ ॥

**औदुम्बरीं वा ॥ २२ ॥**

**उष्णीषं च ॥ २३ ॥**

**तिस्रस्तिस्रः ॥ २४ ॥**

द्वादशरात्रस्य विभागः ॥ २४ ॥

**औदुम्बरे मूलफलभक्तः ॥ २५ ॥**

औदुम्बरबहुले देशे मूलफलभक्षस्तिस्रो रात्रीर्वसति ॥ २५ ॥

**निषादे ॥ २६ ॥**

निषादानां मध्ये अपरास्तिस्रो वसति ॥ २६ ॥

**जने ॥ २७ ॥**

तिस्रो रात्रीर्वसति ॥ २७ ॥

**समाने जने ॥ २८ ॥**

अपरास्तिस्रः ॥ २८ ॥

अप्रसिद्धत्वात्स्वयमेवाह—

**वैश्यो जनो राजन्यः समानजनः श्रुतेः ॥ २९ ॥**

**ग्राम्याभोजनं निषादानां मृन्मयापानं च ॥ ३० ॥**

---

१. कर्मशब्द इत्यर्थः।

(१)निषादानां मध्येऽवस्थितस्यैष नियमः ॥ ३० ॥

### संवत्सरं न याचेत् ॥ ३१ ॥

किञ्चिदपि ॥ ३१ ॥

### दीयमानं न प्रत्याचक्षीत ॥ ३२ ॥

संवत्सरमेव ॥ ३२ ॥

### यमाभ्यां वा यजेत पूर्वापराभ्याम् ॥ ३३ ॥

यमाभ्यां वा—अभिजिद्विश्वजिद्भ्यां यजते। तत्र पूर्वं कृत्वाऽपरः क्रियते। पौर्वापर्ये हि 'यम' शब्दो लोके दृष्टः ॥ ३३ ॥

एवं प्राप्त आह—

### युगपद्वा ॥ ३४ ॥

'वा' शब्दः पक्षव्यावृत्तौ। न पौर्वापर्येण, किं तर्हि ? युगपदेव। न हि कर्मणोः पौर्वापर्ये 'यम'शब्दो वर्त्तते। तस्मात्सहैव क्रिया। यत्तु लोके पौर्वापर्येऽपि 'यम'शब्दो दृश्यते, तत्रान्यथोपपद्यत इति ॥ ३४ ॥

यमयागपक्षे कर्म निरूप्यते—

### दक्षिणोत्तरे देवयजने ॥ ३५ ॥

भवतः ॥ ३५ ॥

तत्र च—

### दक्षिणमभिजितः ॥ ३६ ॥

भवति ॥ ३६ ॥

### पत्नीशालमुत्तरे ॥ ३७ ॥

देवयजने भवति ॥ ३७ ॥

### नानर्त्विजः ॥ ३८ ॥

नाना पृथक्पृथगृत्विजो भवन्ति, देशभेदात् ॥ ३८ ॥

---

१. तत्र वसता यजमानेन निषादानां सम्बन्धि यद्ग्राम्यं व्रीहियवादि तस्याभोजनम्। मृन्मयापानं च तत्र वसता मृन्मयपात्रेणोदकपानं न कर्तव्यमित्यर्थः।

## त एव वा प्रभूत्वात् ॥ ३९ ॥

त एव वा ऋत्विजो भवन्ति, न पृथक्त्वेन । प्रभवन्ति हि ते उभयोरपि देवयजनयोः । दक्षिणेऽध्वर्युराध्वर्यवं करोति । विरोधादुत्तरे प्रतिप्रस्थाता । उक्तमाचार्येण "वचनविरोधाभ्यामन्यः" ( का० श्रौ० १।८।३० ) इति । इह च युगपत्प्रवृत्तौ षोडशसंख्यैव ऋत्विग्विषया भवति । क्रतुद्वयाभिनिर्वृत्त्यर्थतया ब्रह्मा व्रियते, तथोद्गात्रादयः । तस्मात्तैरेव क्रतुद्वयमपि निर्वोढव्यमिति ॥ ३९ ॥

## बाहिर्वेदिकानि समानानि ॥ ४० ॥

बाहिर्वेदिकानि यान्यङ्गानि दीक्षणीयादीनि तानि समानानि भवन्ति, अगृह्यमाणविशेषत्वात् ॥ ४० ॥

## नानेतराणि ॥ ४१ ॥

यानि पुनरान्तर्वेदिकानि तानि पृथग्भवन्ति । यथा—अग्नीषोमीयादीनि । गृह्यते एव हि विशेषस्तत्र ॥ ४१ ॥

## कर्मसन्निपाते पूर्वं पूर्वमभिजितः ॥ ४२ ॥

कर्म भवति । यथा-"सयजमाना धिष्ण्यानुतिष्ठन्ते" ( का० श्रौ० ९।८।१२ ) इति ॥ ४२ ॥

## पृथक्सहस्रे दक्षिणा ॥ ४३ ॥

दक्षिणेऽपि 'देवयजने सहस्रमुत्तरेऽपि' इति सहस्रयुक्तं चोभयोर्भवति । 'त्रैधातवी तु बाहिर्वेदिकी' इति तन्त्रेण ॥ ४३ ॥

## सर्वजित्समहाव्रतः संवत्सरदीक्षः सप्ताहाभिषवस्तिस्र उपसदः षड् वा ॥ ४४ ॥

सर्वजिन्नामैकाहः स समहाव्रतो भवति । संवत्सरं दीक्षा भवन्ति । संवत्सरादूर्ध्वं सप्ताहेऽतीते सुत्या भवति । तत्र च तिस्र उपसदो भवन्ति चतस्रो दीक्षाः । षड् वा उपसदो भवन्ति एका दीक्षा ॥ ४४ ॥

## अग्निवद्वा दीक्षाः ॥ ४५ ॥

भवन्ति । उपसदां तु विकल्पः स्थित एव ॥ ४५ ॥

इति द्वाविंशेऽध्याये प्रथमा कण्डिका ॥

२

**शताश्वरथमध्वर्यवे ददात्यग्नौ चीयमाने ॥ १ ॥**

शतं गवामश्वरथं चैकमग्नौ चीयमाने अध्वर्यवे ददाति। तच्च प्राग्धिष्ण्य-चयनात्, 'चीयमान' इति श्रवणात्। तत्र च अश्वाहुतेः अपकर्षः क्रियते ॥ १ ॥

**उद्गात्रे व्रतकाले ॥ २ ॥**

शताश्वरथं ददाति ॥ २ ॥

**होत्रे शस्त्रकाले ॥ ३ ॥**

व्रतसमनन्तरं यच्छस्त्रं तत्काले होत्रे ददाति ॥ ३ ॥

**ततो ब्रह्मणे ॥ ४ ॥**

तत्समनन्तरमेव च ब्रह्मणे ददाति। 'शताश्वरथम्' इत्यनुवर्तते ॥ ४ ॥

**दक्षिणाकाले सर्वेभ्यः सहस्रम् ॥ ५ ॥**

ददाति। प्रकृतेभ्य एव मा भूदिति 'सर्व'ग्रहणम् ॥ ५ ॥

**साहस्राश्चत्वारः सहस्रदक्षिणाः ॥ ६ ॥**

'साहस्रा' इति चतुर्णामपि सामान्यसंज्ञा। सहस्रदक्षिणास्ते भवन्ति ॥ ६ ॥

तेषां च—

**तृतीय उक्थ्यः ॥ ७ ॥**

संस्थो भवति। ब्राह्मणे हि सर्वज्योतिस्तृतीय उक्थसंस्थः पठ्यते ॥ ७ ॥

संज्ञाविशेषमाह—

**ज्योतिर्विश्वज्योतिः सर्वज्योतिस्त्रिरात्रसम्मितः ॥ ८ ॥**

इति ॥ ८ ॥

**षट्साद्यःक्राः ॥ ९ ॥**

साद्यःक्रसंज्ञकाः षट् क्रतवो भवन्ति ॥ ९ ॥

**स्वर्गकामपशुकामभ्रातृव्यवतां प्रथमः ॥ १० ॥**

साद्यःक्राख्यः क्रतुर्भवति ॥ १० ॥

५४

रुक्मललाटोऽश्वः श्वेतो दक्षिणा ॥ ११ ॥

अश्वाभावे गौः ॥ १२ ॥

दक्षिणा भवति ॥ १२ ॥

तमुद्गात्रे ददाति ॥ १३ ॥

तमश्वं गां वा उद्गात्रे ददाति ॥ १३ ॥

प्राकृतस्यानिवृत्तिरुद्गातृयोगात् ॥ १४ ॥

प्राकृतस्य दक्षिणाजातस्य च न निवृत्तिः । कुत एतत् ? उद्गातृयोगादश्वस्य ॥१४॥

एवं प्राप्त आह—

निवृत्तिः क्रतुयोगात् ॥ १५ ॥

निवृत्तिः प्राकृतस्य भवति । कुत एतत् ? क्रतुना हि युज्यते च तस्य 'अश्वः श्वेतो दक्षिणा' इति । तेन यद्दक्षिणायुक्तं तन्निवर्तत इति ॥ १५ ॥

वचनादेकस्य ॥ १६ ॥

यत्तूक्तम् 'उद्गात्रे ददाति' इति तत्क्रतुयोगेऽपि वचनादित्यदोषः ॥ १६ ॥

दीर्घव्याधिप्रतिष्ठाकामान्नाद्यकामानां द्वितीयः ॥ १७ ॥

साद्यःक्रो भवति । एषामत्राधिकार इत्यर्थः ॥ १७ ॥

अश्वैकविंशा दक्षिणाऽश्वो वा ॥ १८ ॥

ततश्च विकल्पः ॥ १८ ॥

हीनस्यानुक्रीः ॥ १९ ॥

अनुक्रीर्नाम साद्यःक्रः, स हीनस्य भवति । यः कर्मणा हीन इव तस्यासौ भवति ॥ १९ ॥

साश्वं शतं दक्षिणाऽश्वो वा ॥ २० ॥

'वा' इति विकल्पः ॥ २० ॥

विश्वजिच्छिल्पः ॥ २१ ॥

विश्वजिच्छिल्पो नाम साद्यःक्रः ॥ २१ ॥

तत्र विशेषः—

## यथाद्रव्ये जनपदे यजेत तेषां यथोत्साहं दद्यात् ॥२२॥

दक्षिणाः। यद्यद्द्रव्यं यस्मिन्यस्मिन् जनपदे प्रायोवृत्त्या तेषां यथोत्साहं दानम् ॥ २२ ॥

तान्याचष्टे—

## आजानेयानपरजने ॥ २३ ॥

आजानेयानश्वानपरजने ददाति ॥ २३ ॥

## प्राच्येषु हस्तिनः ॥ २४ ॥

ददाति ॥ २४ ॥

## अश्वतरीरथानुदीच्येषु ॥ २५ ॥

वेसरोयुक्तान्रथानुदीच्येषु ददाति ॥ २५ ॥

## सर्वस्वं भर्तानिधिर्वा ॥ २६ ॥

दीयते ॥ २६ ॥

अप्रसिद्धत्वादुच्यते—

## (१)धेन्वनडुत्सीरधान्यपल्यदासमिथुनमहानसारोहण-विमितशयनानि ॥ २७ ॥

धेन्वादीनि दासमिथुनान्तानि प्रसिद्धानि। महानसोपयोगिकं द्रव्यं ताम्रचर्वादि महानसशब्देनोच्यते। आरोहणं च युग्यम्, विमितशयने प्रसिद्धे एव, विमितं गृहम् ॥ २७ ॥

इति द्वाविंशेऽध्याये द्वितीया कण्डिका ॥



---

१. धेनुः प्रसिद्धा, अनडुद् बलीवर्दः, सीरं हलम्, धान्यं व्रीह्यादि, 'पल्यं' पलादिमानार्हम्। पल्यः पलायनशीलः स चासौ दासश्च तयोर्मिथुनम् दासीदासौ, महानसं ताम्रचर्वादि गृहोपकरणम्, आरोहणं हस्त्यश्वादि, विमितं गृहम्, शयनं खट्वादि, एतानि दद्यादित्यर्थः।

## श्येनयागः

### ३

### श्येनोऽभिचरतः ॥ १ ॥

श्येनो नाम साद्यःक्रः पञ्चमः । सोऽभिचरतो भवति ॥ १ ॥

### यत्रौषधयो न जायेरंस्तद्देवयजनम् ॥ २ ॥

भवति ॥ २ ॥

### विदाहि वा ॥ ३ ॥

यत्र जाता ओषधयो दह्यन्ते अग्न्यादिना ॥ ३ ॥

### वृक्षस्तम्बच्छिन्नम् ॥ ४ ॥

यत्र वृक्षाः, स्तम्बाश्च च्छिन्नास्तद्वृक्षस्तम्बच्छिन्नम् ॥ ४ ॥

### वा निर्व्रस्कम् ॥ ५ ॥

वा निर्वृक्णमूला वृक्षा भवन्ति वा अनिर्वृक्णमूलाः । अपरे तु सूत्रद्वयमन्यथा वर्णयन्ति—वृक्षस्तम्बच्छिन्नं वा अच्छिन्नं वा, यदा छेदनं तदा निर्वृक्णमूला वृक्षा भवन्ति ॥ ५ ॥

### दक्षिणाप्रवणम् ॥ ६ ॥

देवयजनं भवति ॥ ६ ॥

### अचषालो यूपः स्फ्याग्रः ॥ ७ ॥

स्फ्यस्येवाग्रं भवति ॥ ७ ॥

### तैल्वको बाधको वा ॥ ८ ॥

यूपो भवति । (१)तिल्वकः प्रसिद्धः । बाधको यो गिरिमालक इति प्रसिद्धः ॥८॥

### इध्मो (२)बैभीदकः ॥ ९ ॥

भवति ॥ ९ ॥

---

१. तिल्वकः—विणिसः ।

२. बहेडकः ।

(१)शरमयं बर्हिः ॥ १० ॥

शरमयं च बर्हिर्भवति ॥ १० ॥

अधिषवणे शवनभ्ये ॥ ११ ॥

शवं येनाऽनसा ऊढं तन्नाभिसम्बन्धिनी अधिषवणे फलके ॥ ११ ॥

रथौ हविर्धाने ॥ १२ ॥

नानसी ॥ १२ ॥

लोहितः सवनीयोऽग्नये रुद्रवते ॥ १३ ॥

भवति ॥ १३ ॥

लोहितवाससो लोहितोष्णीषाः प्रचरन्त्यृत्विजः ॥ १४ ॥

लोहिते वाससी येषां ते लोहितवाससः लोहितोष्णीषाश्च प्रचरन्त्यृत्विजः(२)॥१४॥

निवीताः ॥ १५ ॥

कण्ठावसक्तयज्ञोपवीताः ॥ १५ ॥

उज्ज्यधन्वानः ॥ १६ ॥

उद्गता ज्या धनुषो येषां ते उज्ज्यधन्वानः । आरोपितधन्वान इत्यर्थः ॥ १६ ॥

कलापिनः ॥ १७ ॥

कलापशब्देन भस्त्रोच्यते । तद्वन्त इत्यर्थः ॥ १७ ॥

काणखोरकूटवण्डाहुतमिश्रा नव-नव दक्षिणा ददाति लिङ्गानाम् ॥ १८ ॥

काणाः—प्रसिद्धाः । खोरा—लङ्गाः । कूटाः—भग्नशृङ्गाः । वण्डाः—छिन्नपुच्छाः । हुतमिश्राः—श्वरगृहीतमिश्रा इत्यर्थः । 'नव काणान्नयति' 'नव खोरान्नयति' एवमादि श्रवणात् ॥ १८ ॥

पुरुषाणां वा दानाधिकारात् ॥ १९ ॥

---

१. शरकाण्डस्येति श्रीअनन्तः । मौञ्जं वासुदेवः ।

२. 'दीक्षणीमादिषु' इति शेषः ।

पुरुषाणां वा नवसङ्ख्यासम्बन्धः । प्रतिपुरुषं नव नव ददातीत्यर्थः ॥ १९ ॥

## प्राकृतस्य वा नयनं भेदेन ॥ २० ॥

प्राकृतस्य वा दक्षिणाजातस्य एतानि लिङ्गानि भवन्ति, तेषां च नयनं भेदेन । एवं प्रकृतिरनुगृहीता भवति । 'नव नव नयति' इति च यथाश्रुतम् ॥ २० ॥

## दक्षिणाकाले कण्टकैरेना विरुजेयुः ॥ २१ ॥

समाख्ययोद्गातारः ॥ २१ ॥

## उपतप्तास्वनुपतप्तानामाज्यम् ॥ २२ ॥

उपतप्तासु या अनुपतप्ताः तदीयमाज्यं भवति ॥ २२ ॥

## साद्यष्कधर्मा हिरण्यस्रग्वत् ॥ २३ ॥

'साद्यष्क'शब्देनात्र श्येनोऽभिधीयते । तस्य धर्मा लोहितोष्णीषादयः हिरण्यस्रग्वद्यस्योपयुक्तं तत्तस्य भवति ॥ २३ ॥

## एकत्रिके दक्षिणा षष्टिशतं षट् च ॥ २४ ॥

एकत्रिकः षष्ठः साद्यस्क्रः तत्र षट्षष्टिशतं दक्षिणा ॥ २४ ॥

## साद्यष्कधर्माः ॥ २५ ॥

'व्याख्यास्यन्ते' इति सूत्रशेषः ॥ २५ ॥

## दीक्षादि सद्यः सर्वं क्रियते ॥ २६ ॥

ऋजुः ॥ २६ ॥

## सह पशूनालभते ॥ २७ ॥

अग्नीषोमीयसवनीयानूबन्ध्यान् । सद्यस्त्वे च सति सौत्येऽहनि सर्वं कर्तव्यम् । तत्र च स्थानित्वात् सवनीयकाल एव पशूनामालम्भः तदीय एव स्थाने युक्त इति स्वस्थानं सवनीयो न जहाति अग्नीषोमीयस्तु स्वस्थानादुत्कालितः परतो गच्छति॥२७॥

## पुरोडाशो वाऽग्नीषोमीयस्थाने ॥ २८ ॥

"अग्नीषोमीयोऽतः पशुः" ( का० श्रौ० ८।७।२३ ) इत्यत्राऽग्नीषोमीयः पुरोडाशो वा भवति वा न वेति ॥ २८ ॥

## वपान्ते सुब्रह्मण्यानिवृत्तिः ॥ २९ ॥

वपान्ते या सुब्रह्मण्या सा न भवति ॥ २९ ॥

प्रतिदिशं वसन्त्यृत्विजः ॥ ३० ॥

अतश्च पूर्वस्मिन्नहनि ऋत्विग्वरणं कर्तव्यम् ॥ ३० ॥

पुरस्ताद्योजने होता ॥ ३१ ॥

'वसति' इति शेषः ॥ ३१ ॥

इतरे क्रोशप्रत्यवायेन क्रोशप्रत्यवायेन ॥ ३२ ॥

इतर उद्गात्रादयः पूर्वपूर्वपरिमाणापेक्षया क्रोशप्रत्यवायेन ॥ ३२ ॥

उद्गातोत्तरतः ॥ ३३ ॥

वसति त्रिभिः क्रोशैः ॥ ३३ ॥

अध्वर्युः पश्चाद् ब्रह्मा दक्षिणतः ॥ ३४ ॥

वसति ॥ ३४ ॥

चतुर्भिरश्वरथैः सक्षीरदृतिभिरावहन्त्येनान् ॥ ३५ ॥

होत्रादीन् ॥ ३५ ॥

यथाक्रोशमश्वाः ॥ ३६ ॥

यस्य यावन्तः क्रोशास्तस्य तावन्तोऽश्वा भवन्ति रथे ॥ ३६ ॥

ततो नवनीतमाज्यम् ॥ ३७ ॥

ततो दृतेर्यज्जातं नवनीतं तदाज्यं भवति ॥ ३७ ॥

सोमक्रयणस्त्रिवत्सः साण्डः ॥ ३८ ॥

त्रिवत्सः त्रिवर्षः ॥ ३८ ॥

वेदिरुर्वरा ॥ ३९ ॥

सस्यमालिनी भवति ॥ ३९ ॥

व्रीहीन्यवान्वा पक्वानध्यवस्यति ॥ ४० ॥

खल उत्तरवेदिः ॥ ४१ ॥

भवति ॥ ४१ ॥

## धान्यखलः प्रत्ययात् ॥ ४२ ॥

प्रयोगप्रत्ययौ तत्रैव भवतः ॥ ४२ ॥

## ये वेदिमभितस्तानुत्तरवेदिदेशे मृध्नन्ति ॥ ४३ ॥

धान्यखले सति सन्निधानात् वेदिमभितो ये सस्यविशेषास्तानुत्तरवेदिदेशे मृध्नन्ति(१) ॥ ४३ ॥

## पांसुखलो वा प्रत्ययाविशेषात् प्रकृत्यनुग्रहाच्च ॥ ४४ ॥

'वा' शब्दः पक्षान्तरपरिग्रहे। पांसु खले वोत्तरवेदिर्भवति। तत्रापि हि 'खल' शब्दप्रयोगप्रत्ययौ स्त एवेति। अपि चैवं प्रकृतिरनुगृहीता भवति ॥ ४४ ॥

## खलेवाली यूपो लाङ्गलेषा ॥ ४५ ॥

खले धारणं यया क्रियते सा खलेवाली यूपकार्ये भवति। सा च पूर्वमेव निहिता द्रष्टव्या ॥ ४५ ॥

## कलापी चषालार्थे ॥ ४६ ॥

कलापी च तृणपूलकः चषालार्थे भवति ॥ ४६ ॥

## निर्वृत्तग्रहणात् प्राकृतनिवृत्तिः ॥ ४७ ॥

'निर्वृत्ता हि खलेवाली यूपकार्ये विधीयते'।

अतश्च प्राकृतानां यूपधर्माणां निर्वृत्तिर्भवति। यूपशब्दो हि संस्कारनिमित्तः। छेदनादयश्च स्वर्ववगूहनपर्यन्ताः यूपस्वरूपप्रयुक्ताः, न कार्यप्रयुक्ताः। तस्मात्साधूक्तं 'निर्वृत्तग्रहणात्प्राकृतनिवृत्तिः' इति ॥ ४७ ॥

## आवेशादनिवृत्तिः ॥ ४८ ॥

स्यादेतदेवं यदि कार्यविशिष्टा धर्मा भवेयुः। न चैते कार्यविशिष्टाः। स्वरूपप्रयुक्ता एवैत इति। न हि यूपशब्द आकृतिवचनः। अलौकिकत्वात्संस्कारनिमित्तः। सत्सु संस्कारेषु प्रयोगात्(२) ॥ ४८ ॥

## उर्वरादि वा द्वितीयस्य सन्निधेः ॥ ४९ ॥

---

१. मर्दयन्ति स्तम्वेभ्यो विमोकार्थमनडुद्भिः परितो गच्छद्भिराक्रमयन्तीत्यर्थः।

२. पर्युक्षणप्रोक्षणादेरनिवृत्तिः निवृत्तिः न भवति। कुतः ? 'आवेशात्'। ते हि खलेवाल्या मप्यावेश्यन्ते विधीयन्ते।

उत्तरादिधर्मजातं द्वितीयस्य भवति। तत्सन्निधौ हि तत्पठ्यत इति। वा सर्वेषां भवति साद्यस्कान् प्रकृत्य श्रवणात्। यत्तु 'सन्निधानाद् द्वितीयस्य' इति, तत्रोच्यते 'अवश्यमेव पठ्यमानं कस्यचिदेव सन्निहितं भवति' इति॥ ४९॥

इति द्वात्रिंशेऽध्याये तृतीया कण्डिका॥

४

## व्रात्यस्तोमाश्चत्वारः॥ १॥

व्रात्यस्तोमसंज्ञकाश्चत्वारः क्रतवो भवन्ति। व्रात्याः प्रसिद्धा एव त्रिपुरुषं पतितसावित्रीकाः। प्रायश्चित्तार्थत्वाच्च लौकिकेऽग्नौ भवन्ति। न ह्येतैराधानं प्रयुज्यते, अतदङ्गत्वात्। तदुक्तमाचार्येण 'स्थपतीष्टिं' प्रकृत्य 'लौकिके' (का० श्रौ० १।१।१२,१४) इति॥ १॥

## द्वितीय उक्थ्यः॥ २॥

भवति॥ २॥

## व्रात्यगणस्य ये सम्पादयेयुस्ते प्रथमेन[1] यजेरन्॥ ३॥

सम्पादनं च गायननर्तकादीनाम्। तेषां प्रथमेऽधिकारः॥ ३॥

## द्वितीयेन निन्दिता[2] नृशंसाः॥ ४॥

नृशंसत्वेन ये निन्दितास्तेषां द्वितीयेऽधिकारः॥ ४॥

## तृतीयेन कनिष्ठाः॥ ५॥

कनिष्ठा लघवः॥ ५॥

## ज्येष्ठाश्चतुर्थेन॥ ६॥

अधिक्रियन्ते॥ ६॥

---

१. ये व्रात्या नृत्यगीतवाद्यशस्त्रधारणादौ स्वयं प्रवीणाः सन्तः उपदेष्टारो भूत्वा स्वां विद्यां व्रात्यसमूहस्य सम्पादयेयुः शिक्षेयुः पाठयेयुः ते प्रथमेन यजेरन्।

२. ये नृशंसा निन्दिता नृभिर्मनुष्यैरभिशंसनेन पापाख्यारोपणेन निन्दिताः गर्हिताः ज्ञातिभिर्बहिष्कृताः ते द्वितीयेन यजेरन्।

ज्येष्ठशब्दार्थमाह—

अपेतप्रजनना स्थविरास्तदाख्याः ॥ ७ ॥

तेषां यो नृशंसत्तमः स्याद् द्रव्यवत्तमो वाऽनूचानतमो वा तस्य गार्हपते दीक्षेरन् ॥ ८ ॥

स गृहपतिः कर्तव्य इत्यर्थः ॥ ८ ॥

तस्य भक्षमनुभक्षयन्त आसीरन् ॥ ९ ॥

तस्य गृहपतेर्भक्षमनु इतरे भक्षयन्ति । अतश्च गम्यते उभयसंस्कारोऽयं द्रव्यस्य पुरुषस्य च ॥ ९ ॥

व्रात्यधनानि भवन्ति ॥ १० ॥

वक्ष्यमाणानि ॥ १० ॥

तिर्यङ्नद्धमुष्णीषंप्रतोदः ॥ ११ ॥

प्रतोदः प्राजनः ॥ ११ ॥

ज्याह्रोडोऽयोग्यं धनुस्तदाख्यम् ॥ १२ ॥

ज्याह्रासेन यदयोग्यं धनुः तज्ज्याह्रोडाख्यम् ॥ १२ ॥

वासः कृष्णशं कद्रु ॥ १३ ॥

कृष्णमशितं येन तत्करणेन कृष्णशमित्युच्यते । कृष्णसूत्रोतमित्यर्थः । तत्कद्र्वाख्यम् ॥ १३ ॥

अकृष्णं कृष्णदशं वा तदाख्यम् ॥ १४ ॥

वा अकृष्णं कृष्णाभिर्दशाभिस्तद्वत् कद्र्वाख्यम् । उभयत्र हि कद्रुशब्दः प्रसिद्धः ॥ १४ ॥

फलकास्तीर्णो विपथः ॥ १५ ॥

फलकैरास्तीर्णो विपथः ! यो वर्त्मना न गच्छति ॥ १५ ॥

अश्वाश्वतराभ्यां कम्प्राभ्यां युक्तः स्यादित्येके ॥ १६ ॥

एके आचार्याः कम्प्राश्वाश्वतरयुक्तं रथमिच्छन्ति । एकग्रहणं विकल्पार्थम् ॥१६॥

निष्को राजतः ॥ १७ ॥

निष्क आभरणविशेषः । स राजतो भवति ॥ १७ ॥

अजिने पार्श्वसहिते कृष्णवलक्षे आविके ॥ १८ ॥

आविके चर्मणी पार्श्वसंलग्ने । कृष्णसितवती ॥ १८ ॥

तद्गृहपतेः ॥ १९ ॥

धनम् ॥ १९ ॥

एवमेवाजिनानीतरेषाम् ॥ २० ॥

इतरेषां व्रात्यानामेवमेवाजिनानि भवन्ति ॥ २० ॥

दामतूषाणि वलूकान्तानि द्विचूडान्याविकानि वासांसि लोहितान्तानि कृष्णान्तानि वा तदाख्यानि ॥ २१ ॥

दामतूषाणि द्विचूडानि लोहितान्तानि कृष्णान्तानि वा वलूकान्तानीत्याख्यानि ॥ २१ ॥

दामनी द्वे द्वे ॥ २२ ॥

उपानहौ च कर्णिन्यौ कृष्णे स्यातामित्येके ॥ २३ ॥

एके अकृष्णे इति(१) ॥ २३ ॥

मागधदेशीयाय ब्रह्मबन्धवे दक्षिणाकाले व्रात्यधनानि दद्युः ॥ २४ ॥

सर्व एव व्रात्याः मगधदेशनिवासी यः स ब्रह्मबन्धुभिर्जायते स मागधदेशीयब्रह्मबन्धुः तस्मै दद्युः । अपरे तु मागधं गेयमाहुः । तत्र यो देशीयः ईषदसमाप्तौ देशीय इत्युच्यते तस्मै दद्युः ॥ २४ ॥

अविरतेभ्यो वा व्रात्यचरणात् ॥ २५ ॥

अथवा—ये व्रात्यचरणादविरतास्तेभ्यो दद्युः ॥ २५ ॥

---

१. एकैकस्य वस्त्रस्य द्वे द्वे दामनी द्वे द्वे दशे स्याताम् । उपानहौ च कर्णिन्यौ कर्णौ कर्णाकारौ चर्मावयवौ स्तो ययोः ।

एवं हि श्रूयते—

तेष्वेव मृजाना यन्तीति श्रुतेः(१) ॥ २६ ॥

तेष्वेव व्रात्येषु मृजाना आत्मानं शोधयन्ति इति ॥ २६ ॥

त्रयस्त्रिꣳशतं त्रयस्त्रिꣳशतं दक्षिणा दद्युः ॥ २७ ॥

एकैकाः(२) ॥ २७ ॥

द्विगुणा गृहपतिरित्येके ॥ २८ ॥

एके आचार्या गृहपतिः 'द्विगुणा ददाति' इतीच्छन्ति ॥ २८ ॥

व्रात्यस्तोमेनेष्ट्वा व्रात्यभावाद्विरमेयुः ॥ २९ ॥

'विरमतिः' उपरम उच्यते ॥ २९ ॥

व्यवहार्या भवन्ति ॥ ३० ॥

अतः परम् ॥ ३० ॥

अग्निष्टुत् ब्रह्मवर्चसवीर्यान्नाद्यप्रतिष्ठाकामानां यश्चापूत इव मन्येत ॥ ३१ ॥

'अग्निष्टुत्' नामैकाहः । स वीर्यान्नाद्यब्रह्मवर्चसप्रतिष्ठाकामानां भवति । 'यश्चापूत इव मन्येत' । यश्चात्मानं कर्मदोषादपूतमिव मन्यते ॥ ३१ ॥

यज्ञविभ्रष्टस्य च ॥ ३२ ॥

'अग्निष्टुद्' भवति ॥ ३२ ॥

यस्माद्वा विभ्रꣳशेरन् ॥ ३३ ॥

'स वा भवति' इति विकल्पः । प्रतिष्ठाकामानामग्निष्टुतं भेद इत्युक्तमेव ॥ ३३ ॥

इति द्वाविंशेऽध्याये चतुर्थी कण्डिका ॥

---

१. "यस्मा एनद्ददति । तस्मिन्नेव मृजाना यन्ति" ( ताण्ड्य० १७।१ ) ।

२. त्रयस्त्रिꣳशतं गा दक्षिणाः सर्वे व्रात्या दद्युः ।

५

छान्दोग्ये विशेषो यथाकामम् ॥ १ ॥

भवति ॥ १ ॥

सुब्रह्मण्याग्नेयी ॥ २ ॥

अत्राग्निष्टुत्सु सुब्रह्मण्याग्नेयी भवति ॥ २ ॥

एवं यथास्तुत् ॥ ३ ॥

इन्द्रस्तुतिः 'ऐन्द्री' सुब्रह्मण्या, सूर्यस्तुतिः 'सौरी'। इन्द्रस्तुदादयस्तु सार्वमेधिकाः ॥ ३ ॥

सर्वमेके ॥ ४ ॥

अपरे सर्वम् अग्निष्टुत्याग्नेयमिच्छन्ति। प्रकृतौ यत्रेन्द्रपदं तत्राग्निपदप्रयोग इति। एके तन्नेच्छन्ति, उक्तविशेषविधित्वात्। उक्तो हि विशेषविधिरत्र। "तस्याग्नेय्या ग्रहा भवन्त्याग्नेय्यः पुरोरुचः" ( श० ब्रा० १३।७।१।३ ) इत्येवं ग्रहदेवतास्थाने अग्निष्टुत्यग्निपदमूह्यते। पुरोरुचस्तु अस्याजराः संबन्धिन्यः। एवमिन्द्रस्तुदादिष्वपि उत्तरानुवाकपुरोरुचो भवन्ति ॥ ४ ॥

यथोत्साहं दद्यात् ॥ ५ ॥

अग्निष्टुति ॥ ५ ॥

आग्नेयानामनडुद्भिरण्याश्वाजानाम् ॥ ६ ॥

त्रिवृतश्चत्वारः ॥ ७ ॥

क्रतवो भवन्ति ॥ ७ ॥

अनिरुक्तप्रातःसवनः प्रथम ईप्सुयज्ञः ॥ ८ ॥

तस्य 'ईप्सुयज्ञ' इति विशेषसंज्ञा ॥ ८ ॥

ग्रामकामस्य वा ॥ ९ ॥

भवति ॥ ९ ॥

दक्षिणाश्वरथश्चतुर्युक् श्यावोऽन्यतमः ॥ १० ॥

श्यावः-श्यामवर्णः ॥ १० ॥

तेजोब्रह्मवर्चसपुरोधाकामस्य बृहस्पतिसवः ॥ ११ ॥

भवति । 'बृहस्पतिसव' इति विशेषसंज्ञाऽस्य ॥ ११ ॥

देवसूहवीꣳषि निर्वपति ॥ १२ ॥

अत्र ॥ १२ ॥

अतिग्राह्यवद् ग्रहं गृह्णाति बृहस्पते अति यदर्य इति ॥ १३ ॥

'अतिग्राह्यवत्' इति ग्रहणहोमकालौ लभ्येते ॥ १३ ॥

उपालम्भ्यो बार्हस्पत्यः ॥ १४ ॥

द्वितीयः सवनीयो भवति ॥ १४ ॥

निहितेषु नाराशꣳसेषु प्रातःसवनेऽनपाकुर्वन्नेकादश दक्षिणा व्यादिशति ॥ १५ ॥

नाराशꣳसचमसेषु प्रातःसवने स्थापितेषु अपृथक् कुर्वन्नेवैकादश दक्षिणा व्यादिशति ऋत्विग्भ्यः ॥ १५ ॥

अश्वद्वादशा माध्यन्दिने ॥ १६ ॥

एतस्मिन्नेव काले व्यादिशति ॥ १६ ॥

अपाकरोत्युभयीः ॥ १७ ॥

गोमण्डलात् । अत्र च 'अश्वाहुतेः' अपकर्षः 'दास्यन्' इत्युक्तत्वात् ॥ १७ ॥

एकादश तृतीयसवने ॥ १८ ॥

व्यादिशति । एतस्मिन्नेव काले तृतीयसवने व्यादिष्टानाम् ॥ १८ ॥

अनूबन्ध्यवपाहोमान्तेऽपाकरणम् ॥ १९ ॥

कर्तव्यम् ॥ १९ ॥

अतिक्रमणं च सर्वासाम् ॥ २० ॥

दक्षिणापथेन । 'च'शब्दात्तस्मिन्नेव काले ॥ २० ॥

एकादशैकादश वा शतानि स्युः ॥ २१ ॥

सहस्राणि वा ॥ २२ ॥

'वा' इति विकल्पः ॥ २२ ॥

अश्वस्त्वेव माध्यन्दिनोऽधिकः ॥ २३ ॥

भवति ॥ २३ ॥

वाजपेयवदाज्येनाभिषिच्यते कृष्णाजिने ॥ २४ ॥

'वाजपेयवत्' इति माहेन्द्रात्पूर्वम् ॥ २४ ॥

शुक्रामन्थिसंस्रवेण वा ॥ २५ ॥

अभिषिच्यते ॥ २५ ॥

अन्यतस्त्वभिवाद्यः ॥ २६ ॥

अन्यत एवाभिवाद्यो भवति ॥ २६ ॥

अप्रत्यवरोही स्यात् ॥ २७ ॥

अनभ्युत्थायीत्यर्थः, अभ्युत्थेयस्यापि ॥ २७ ॥

स्थपतिरित्येनं ब्रूयुः ॥ २८ ॥

जनाः ॥ २८ ॥

सराजानो ब्राह्मणा यं पुरस्कुर्वीरन्त्स एतेन यजेत ॥२९॥

बृहस्पतिसवेन ॥ २९ ॥

इषुः श्येनवदसद्यः ॥ ३० ॥

'समानमितरच्छ्येनेन' इति वचनात् । इयांस्तु विशेषः सद्यो न भवति ॥३०॥

इति द्वाविंशेऽध्याये पञ्चमी कण्डिका ॥

६

मरणकामस्य ॥ १ ॥

सर्वस्वारः कृतान्नदक्षिणः ॥ २ ॥

क्रतुर्भवति । तस्य च कृतान्नं दक्षिणा ॥ २ ॥

दीक्षाद्यवजिघ्रत्येव भक्षान् ॥ ३ ॥

न भक्षयति ॥ ३ ॥

अप्स्ववहरणमसोमानाम् ॥ ४ ॥

सोमवर्जितानामप्स्ववहरणम् ॥ ४ ॥

आर्भवे स्तूयमाने दक्षिणेनौदुम्बरीं कृष्णाजिने संविशति दक्षिणाशिराः प्रावृतः ॥ ५ ॥

'आर्भवम्' इति तृतीयसवनपवमानमुच्यते । तस्मिंस्तूयमाने दक्षिणेनौदुम्बरीं दक्षिणाशिराः प्रावृतः सं शति ॥ ५ ॥

तदेवं म्रियते ॥ ६ ॥

जीवेच्चेद्दैर्घश्रवसं स्वासु यज्ञायज्ञियस्थाने कुर्युः ॥ ७ ॥

जीवति चेत् दैर्घश्रवसं साम स्वासु स्तोत्रियासु यज्ञायज्ञियस्य स्थाने कार्यम् ॥७॥

मृते तदन्तमर्थाभावात् ॥ ८ ॥

मृते यजमाने तदन्तमेव कर्म भवति। कुत एतत्? अर्थाभावात्, कार्याभावादित्यर्थः ॥ ८ ॥

यजमानपात्रजींषहवींᳫंष्याहवनीये प्रास्य यथार्थं गच्छेयुः॥

अन्यत्रैवमेव हि दृष्टत्वात् "आसादनाद्याहवनीये" (का०श्रौ०२५।७।८) इति॥९॥

समाप्तिर्वोभयचोदनात् ॥ १० ॥

'वा'शब्दः पक्षव्यावृत्तौ। समाप्तिः कर्त्तव्या न यजमानपात्रजींषादीनां प्रतिपत्तिः। उभयं हि चोदितम्। 'सर्वस्वारेण यजेत' इति प्रारम्भः समाप्तिश्च। उपक्रमप्रभृत्यपवर्गपर्यन्तो ह्याख्यातार्थः ॥ १० ॥

समिष्टयजुरन्ते सं त्वा हिन्वन्तीति दार्वाहरणम् ॥११॥

समिष्टयजुष्षु हुतेषु "सं त्वा हिन्वन्ति" इत्यनेन मन्त्रेण आसन्द्यर्थं दार्वाहरणम् ॥ ११ ॥

सं त्वा ततक्षुरिति तक्षणम् ॥ १२ ॥

तस्यैव दारुणः ॥ १२ ॥

सं त्वा रिणन्तीति प्रक्षालनम् ॥ १३ ॥

आसन्द्याः ॥ १३ ॥

सं त्वा शिशन्तीत्यासन्दीविवानम् ॥ १४ ॥

कर्तव्यम् ॥ १४ ॥

आसन्द्यैनमवभृथं हृत्वाऽभ्युद्य सोमोपनहनेन प्रच्छाद्यानूबन्ध्यवपाहोमान्ते दक्षिणस्यां वेदिश्रोणौ सर्वकेशश्मश्रुलोमवपनम् ॥ १५ ॥

अभ्युक्षणं च स्नानकार्ये ॥ १५ ॥

मृताहिताग्न्यावृच्च ॥ १६ ॥

इतिकर्तव्यता ॥ १६ ॥

अनूबन्ध्यान्तेऽग्नीनाहृत्य वेदिमध्यमाग्नीध्राद्दक्षिणं दक्षिणाशिरसं चितावाहितमुद्गाता त्रिर्यामेन परिगायान्नाके सुपर्णमित्येतस्याम् ॥ १७ ॥

अनूबन्ध्यान्ते वेदिमध्यमग्नीनाहृत्य आग्नीध्राद्दक्षिणतो दक्षिणाशिरसं चितावाहितमुद्गाता त्रिर्यामेन साम्ना त्रिःपरिगायात्, 'नाके सुपर्णम्' इत्येतस्यामृचि। प्रस्तोतुः परिसामस्वधिकार इत्युद्गातृग्रहणम् ॥ १७ ॥

धूम गाक्षं त्वेषस्ते धूम ऋण्वतीति ॥ १८ ॥

परिगायात् ॥ १८ ॥

अग्निगाक्षमग्ने मृड महां३ असीत्यन्यतरेण ॥ १९ ॥

परिगायात् ॥ १९ ॥

उदवसानीयान्ते वा सर्वस्य समाप्तेः ॥ २० ॥

उदवसानीयान्ते वा वेदिमध्ये अग्न्याहरणादिकं कर्म कर्तव्यम्। कुत एतत् ? सर्वं ह्यत्र समाप्तं भवतीति। यत् पूर्वमुक्तं 'अनूबन्ध्यान्त' इति। तद्वपामार्जनान्ते केशश्मश्रुलोमवपनं विहितम्। ततश्चोच्यते—'अन्त्ये वेदिमध्यमग्नीनाहृत्य' इति।

प्रकृतत्वात् 'अनूबन्ध्यान्त' एवेति गम्यते। अस्तु तथेति चेत्। नान्तग्रहणस्य निरुपचरितवृत्त्या सर्वान्तप्रतिपत्तेः। तस्मात् 'उदवसानीयान्त' एव ॥ २० ॥

जीवेच्चेदेतेनैवारम्भेण मुमूर्षेत् ॥ २१ ॥

आरब्धत्वात् ॥ २१ ॥

जिजीविषेद्वा ॥ २२ ॥

जीवितुमपि चेदिच्छेदिति ॥ २२ ॥

ऋत्विगपोहनीयास्त्रयः ॥ २३ ॥

'ऋत्विगपोहनीया' इति सामान्यसंज्ञा ॥ २३ ॥

तत्रैकः—

सर्वस्तोमः ॥ २४ ॥

अहनी चोत्तमे छान्दोमिके पृथक् कृत्वा ॥ २५ ॥

क्रियेते। तन्त्रेण दृष्टत्वात्तयोः पृथग्ग्रहणम् ॥ २५ ॥

वाचस्तोमाश्चत्वारः ॥ २६ ॥

'वाचस्तोम' संज्ञकाश्चत्वारः क्रतवो भवन्ति ॥ २६ ॥

तत्र—

छान्दोग्ये विशेषः ॥ २७ ॥

पृष्ठ्यस्तोमास्त्रिवृत्पञ्चदशसप्तदशैकविंशत्रिणवत्रयस्त्रिंशाः ॥ २८ ॥

'पृष्ठ्यस्तोम' संज्ञकाः षट्क्रतवो भवन्ति त्रिवृदादयः ॥ २८ ॥

इति द्वाविंशेऽध्याये षष्ठी कण्डिका ॥

७

चातुर्मास्याः सोमास्त्रिषु पर्वस्थानेषु षार्ष्ठिकानि पृष्ठ्यो विहृत इति श्रुतेः ॥ १ ॥

चातुर्मास्याः सोमाः तत्र च त्रिपु पर्वस्थानेषु पाष्ठिकान्यहानि च भवन्ति 'पृष्ठ्यो विह्वतो भवति' इति श्रुतेः ॥ १ ॥

## वैश्वदेवस्थाने प्रथमम् ॥ २ ॥

पाष्ठिकमहर्भवति ॥ २ ॥

तच—

## अयूपम् ॥ ३ ॥

भवति ॥ ३ ॥

## उत्तरवेद्यकरणं च ॥ ४ ॥

तत्र च—

## परिधौ पशुनियोजनम् ॥ ५ ॥

## द्वितीये द्विदिवाख्यो द्व्यहः ॥ ६ ॥

द्वितीये पर्वस्थाने द्व्यहो भवति । 'द्विदिव' इत्याख्या तस्य ॥ ६ ॥

## अग्निष्टोमं प्रथममेके ॥ ७ ॥

यत्प्रथममहरुक्थ्यसंस्थं तदग्निष्टोमसंस्थमेके इच्छन्ति । एके उक्थ्यसंस्थम् । उक्थ्यस्य च संस्थामात्रान्यत्वं च धर्मास्तु तदीया एव ॥ ७ ॥

## तृतीये त्र्यहोऽतिरात्र उत्तमः ॥ ८ ॥

तृतीये पर्वस्थाने पाष्ठिकस्त्र्यहो भवति । तत्र चातिरात्र उत्तमो भवति ॥ ८ ॥

## अग्निष्टोमं प्रथममेके ॥ ९ ॥

एके षोडशिनमिच्छन्ति ॥ ९ ॥

## ज्योतिष्टोमः शुनासीरीयस्थाने ॥ १० ॥

भवति । पाष्ठिकान्यहानि द्वादशदीक्षोपसत्कानि भवन्त्यतिग्राह्यवन्ति । किं बहुना पृष्ठ्ये यद् दृष्टं तत्सर्वमत्र भवति ॥ १० ॥

## पञ्चसु सवनीया वैश्वदेववारुणमारुताग्नेयैन्द्राग्नाः ॥ ११ ॥

पञ्चस्वहःसु वैश्वदेवादयो यथासंख्येन सवनीयाः ॥ ११ ॥

षष्ठे चैकादशिनाः ॥ १२ ॥

भवन्ति ॥ १२ ॥

वायव्यः सप्तमे ॥ १३ ॥

सप्तमेऽहनि वायव्यः सवनीयः ॥ १३ ॥

पञ्चाशतं पञ्चाशतं प्रत्यहं ददात्युत्तमे द्वादशं शतम् ॥ १४ ॥

भवति । हिरण्यादेश्च निवृत्तिरत्र ॥ १४ ॥

वत्सा वा पञ्चाशतो यथर्तुजाः ॥ १५ ॥

'यथर्तुजा' इति यो यो यस्मिन् यस्मिन् ऋतौ जातः स तत्र तत्र दीयते ॥ १५ ॥

प्रतिपर्वावभृथाः ॥ १६ ॥

भवन्ति । पार्ष्ठिकानामेकोऽवभृथो दृष्टः स मा भूदिति 'प्रतिपर्व'ग्रहणम् । न्यायसूत्रमेतत् ॥ १६ ॥

पर्वान्तरेष्वहतं वस्ते ॥ १७ ॥

वासः ॥ १७ ॥

अस्त्र्युपायी ॥ १८ ॥

स्त्रियं नोपगच्छेत् ॥ १८ ॥

अमांसाशी ॥ १९ ॥

मांसं नाश्नीयात् ॥ १९ ॥

अनूबन्ध्या बार्हस्पत्यामैत्रावरुणीसौर्याश्विन्यो यथाऽवभृथम् ॥ २० ॥

भवति ॥ २० ॥

प्रतिकर्म सोमाः ॥ २१ ॥

'व्याख्यास्यन्ते' इति सूत्रशेषः ॥ २१ ॥

अग्न्याधेयपुनराधेयाग्निहोत्रदर्शपूर्णमासदाक्षायणाग्रयणाः ॥ २२ ॥

एता एव संज्ञा एतेषाम् ॥ २२ ॥

उक्थ्यं पशुबन्धमेके ॥ २३ ॥

पशुबन्धसोममेके उक्थ्यसंस्थमिच्छन्ति, एकेऽग्निष्टोमम् ॥ २३ ॥

इति द्वाविंशेऽध्याये सप्तमी कण्डिका ॥

८

प्रातः सवनीयायनु हवीꣳषि निर्वपति ॥ १ ॥

प्रतिकर्म सोमेषु विशेष उच्यते । प्रातःसवने सवनीयानतु हवींषि निर्वपति ॥१॥

तत्र च—

पयसी अग्निहोत्रयोः ॥ २ ॥

अग्निहोत्रसोमयोः 'पयसी' अनुनिरूप्येते ॥ २ ॥

अन्त्यदेवताऽनूबन्ध्याऽद्या सवनीया ॥ ३ ॥

तेषु कर्मसु याऽन्त्या देवता साऽनूबन्ध्यायां भवति, आद्या च सवनीया ॥३॥

एकदेवतेषूभयम् ॥ ४ ॥

यत्र पुनः कर्मण्येकैव देवता यथा अग्निहोत्रे पुनराधेये च तत्रोभयन्त दैवत्यं भवति ॥ ४ ॥

चातुर्मास्येषु चैके ॥ ५ ॥

चातुर्मास्यसोमेषु चैके निर्वापमिच्छन्ति । एके न । तत्र च मारुत्या न देश-भेदः, सोमाङ्गाभावात् । अतिप्रणीत एव यागः । पितृयज्ञे चैवमेव ॥ ५ ॥

सप्तदशाः पञ्च ॥ ६ ॥

'सप्तदश' संज्ञकाः पञ्च क्रतवो भवन्ति ॥ ६ ॥

तद्विशेषानाह—

उपहव्योऽनिरुक्तो ग्रामकामस्य ॥ ७ ॥

'उपहव्य' इति विशेषसंज्ञा । स ग्रामकामस्य भवति अनिरुक्तश्च ॥ ७ ॥

## अनृतं वाऽभिशस्यमानस्य ॥ ८ ॥

अलीकं योऽभिशस्यते तस्याप्युपहव्यो भवति ॥ ८ ॥

## श्यावोऽश्वो दक्षिणा तं ब्रह्मणे ददाति ॥ ९ ॥

## स्वर्गकामस्यर्तपेयः ॥ १० ॥

'ऋतपेय' इति विशेषसंज्ञा सप्तदशस्यैव । सं स्वर्गकामस्य भवति ॥ १० ॥

## दीक्षोपसदो द्वादश ॥ ११ ॥

"द्वादशदीक्षोपसदो भवन्ति" ( ताण्ड्य० १८।२ ) इति वचनात् ॥ ११ ॥

## तिस्र उपसदः ॥ १२ ॥

भवन्ति । "एकाहस्त्र्युपसत्कः" ( का० श्रौ० ८।२।३४ ) इति । शेषा नव-दीक्षाः । एवं दीक्षोपसदां द्वादशसंख्या भवति ॥ १२ ॥

## षड् वा ॥ १३ ॥

'वा' शब्दः पक्षव्यावृत्तौ । षडुपसदो भवन्ति षड्वा दीक्षाः । दीक्षोपसदां द्वादशसंख्या श्रूयते समविभागेनेति न्याय्यं 'समं स्यादश्रुतत्वात्' इति ॥ १३ ॥

## उभयत्र वा द्वादशता गुणत्वात् ॥ १४ ॥

'वा' शब्दः पक्षान्तरपरिग्रहे । न दीक्षोपसदः संख्यां प्रति श्रूयन्ते किं तर्हि? दीक्षोपसदः प्रति संख्या श्रूयते । कुत एतत् ? गुणत्वात् संख्यायाः । 'दीक्षोपसदो द्वादश भवन्ति' इत्यत्र संख्या दीक्षोपसदः प्रति विधीयते । गुणो हि संख्या । गुणस्य च प्रति-प्रधानमावृत्तिर्न्याय्या । तस्माद्दीक्षासूपसत्सु च द्वादशसंख्येति ॥ १४ ॥

## घृतं व्रतयति ॥ १५ ॥

यद् व्रतयति तद्घृतम् । ततश्च पयसो निवृत्तिः ॥ १५ ॥

तत्परिमाणमाह—

## चमसं पूर्णमङ्गुलिपर्वणा मौल्येन सर्वतः प्रमितमाद्यायामु-पसदि ॥ १६ ॥

अङ्गुलिपर्वणा मौल्येन सर्वतः प्रमितं चमसं घृतस्य पूर्णं व्रतयति प्रथमाया-मुपसदि ॥ १६ ॥

## द्वितीयेन द्वितीयायाम् ॥ १७ ॥

द्वितीयेन पर्वणा प्रमितं द्वितीयायामुपसदि ॥ १७ ॥

## तृतीयेन तृतीयायाम् ॥ १८ ॥

प्रमितम् ॥ १८ ॥

## भक्षयिष्यन्तः सत्यं ब्रूयुः ॥ १९ ॥

सोमान्भक्षयिष्यन्तः सत्यं वदेयुः । 'उष्णोऽग्निः' 'शीतमुदकम्' इत्येवमादि॥१९॥

## सदो वा स्रप्स्यन्तः ॥ २० ॥

सत्यं ब्रूयुः । 'वा' शब्दो विकल्पार्थः ॥ २० ॥

## सोमचमसो दक्षिणौदुम्बरः सगोत्राय ब्रह्मणे देयः ॥२१॥

औदुम्बरः सोमचमसो दक्षिणा । स सगोत्राय ब्रह्मणे देयः ॥ २१ ॥

## पूतभृतः सर्वार्थत्वात् ॥ २२ ॥

'पूतभृतः' सोमो गृह्यते । कुत एतत् ? सर्वार्थत्वात् । "अतो हि देवेभ्य उन्नयन्त्यतो मनुष्येभ्योऽतः पितृभ्यः" ( श० ब्रा० ४।४।१।१२ ) इति । मनुष्यार्थमिदमेवोन्नयनमित्यभिप्रायः ॥ २२ ॥

## अंशुचमसमेके तेन स यजेतेति श्रुतेः ॥ २३ ॥

सोमांऽशुचमसमेके इच्छन्ति । यत एवं श्रूयते—'तेन स यजेत' इति । एवं कैश्चिद्विकल्प इष्यते । तत्पुनर्नातीव युक्तरूपम् । अन्यार्थे यागे अन्यस्यान्यद्यागान्तरं विधीयत इत्यसमञ्जसम् । तस्मात्प्रथम एव पक्षः 'पूतभृतः सर्वार्थत्वात्' इति ।

ननु च 'तेन स यजेत' इति श्रुतिः कथं नेया । 'तेन स यजेत' तेन स जुहुयादित्यर्थः । 'यजति'शब्देन लक्षणया होमो विधीयते ॥ २३ ॥

## अश्ववत् ॥ २४ ॥

अधिकरणातिदेशोऽयं 'तमुद्गात्रे ददाति' इत्यस्य । यद्येवं तेनैवं गतार्थत्वादवाच्यमेतत् । लिङ्गोपन्यासार्थं पुनर्वचनम् ॥ २४ ॥

तदुच्यते—

## पशूपवादाच्च ॥ २५ ॥

इतरस्य सकलदाक्षिण्यस्य निवृत्तिः । येन पशूपवादो भवति । 'सत्यं वाऽऋतपेयोऽनृतं पशवोऽनृतं कुर्याद्य ऋतपेये पशून् दद्यात्' इति ॥ २५ ॥

## अनृतं वाऽभिशस्यमानस्य ॥ ८ ॥

अलीकं योऽभिशस्यते तस्याप्युपहव्यो भवति ॥ ८ ॥

## श्यावोऽश्वो दक्षिणा तं ब्रह्मणे ददाति ॥ ९ ॥

## स्वर्गकामस्यर्तपेयः ॥ १० ॥

'ऋतपेय' इति विशेषसंज्ञा सप्तदशस्यैव । स स्वर्गकामस्य भवति ॥ १० ॥

## दीक्षोपसदो द्वादश ॥ ११ ॥

"द्वादशदीक्षोपसदो भवन्ति" ( ताण्ड्य० १८।२ ) इति वचनात् ॥ ११ ॥

## तिस्र उपसदः ॥ १२ ॥

भवन्ति । "एकाहस्त्र्युपसत्कः" ( का० श्रौ० ८।२।२४ ) इति । शेषा नव-दीक्षाः । एवं दीक्षोपसदां द्वादशसंख्या भवति ॥ १२ ॥

## षड् वा ॥ १३ ॥

'वा' शब्दः पक्षव्यावृत्तौ । षडुपसदो भवन्ति षड्वा दीक्षाः । दीक्षोपसदां द्वादशसंख्या श्रूयते समविभागेनेति न्याय्यं 'समं स्यादश्रुतत्वात्' इति ॥ १३ ॥

## उभयत्र वा द्वादशता गुणत्वात् ॥ १४ ॥

'वा' शब्दः पक्षान्तरपरिग्रहे । न दीक्षोपसदः संख्यां प्रति श्रूयन्ते किं तर्हि? दीक्षोपसदः प्रति संख्या श्रूयते । कुत एतत् ? गुणत्वात् संख्यायाः । 'दीक्षोपसदो द्वादश भवन्ति' इत्यत्र संख्या दीक्षोपसदः प्रति विधीयते । गुणो हि संख्या । गुणस्य च प्रति-प्रधानमावृत्तिर्न्याय्या । तस्माद्दीक्षासूपसत्सु च द्वादशसंख्येति ॥ १४ ॥

## घृतं व्रतयति ॥ १५ ॥

यद् व्रतयति तद्घृतम् । ततश्च पयसो निवृत्तिः ॥ १५ ॥

तत्परिमाणमाह—

## चमसं पूर्णमङ्गुलिपर्वणा मौल्येन सर्वतः प्रमितमाद्यायामुपसदि ॥ १६ ॥

अङ्गुलिपर्वणा मौल्येन सर्वतः प्रमितं चमसं घृतस्य पूर्णं व्रतयति प्रथमाया-मुपसदि ॥ १६ ॥

## द्वितीयेन द्वितीयायाम् ॥ १७ ॥

द्वितीयेन पर्वणा प्रमितं द्वितीयायामुपसदि ॥ १७ ॥

## तृतीयेन तृतीयायाम् ॥ १८ ॥

प्रमितम् ॥ १८ ॥

## भक्षयिष्यन्तः सत्यं ब्रूयुः ॥ १९ ॥

सोमान्भक्षयिष्यन्तः सत्यं वदेयुः । 'उष्णोऽग्निः' 'शीतमुदकम्' इत्येवमादि ॥ १९ ॥

## सदो वा स्रप्स्यन्तः ॥ २० ॥

सत्यं ब्रूयुः । 'वा' शब्दो विकल्पार्थः ॥ २० ॥

## सोमचमसो दक्षिणौदुम्बरः सगोत्राय ब्रह्मणे देयः ॥ २१ ॥

औदुम्बरः सोमचमसो दक्षिणा । स सगोत्राय ब्रह्मणे देयः ॥ २१ ॥

## पूतभृतः सर्वार्थत्वात् ॥ २२ ॥

'पूतभृतः' सोमो गृह्यते । कुत एतत् ? सर्वार्थत्वात् । "अतो हि देवेभ्य उन्नयन्त्यतो मनुष्येभ्योऽतः पितृभ्यः" ( श० ब्रा० ४।४।१।१२ ) इति । मनुष्यार्थमिदमेवोन्नयनमित्यभिप्रायः ॥ २२ ॥

## अंशुचमसमेके तेन स यजेतेति श्रुतेः ॥ २३ ॥

सोमांशुचमसमेके इच्छन्ति । यत एवं श्रूयते—'तेन स यजेत' इति । एवं कैश्चिद्विकल्प इष्यते । तत्पुनर्नातीव युक्तरूपम् । अन्यार्थे यागे अन्यस्यान्यद्यागान्तरं विधीयत इत्यसमञ्जसम् । तस्मात्प्रथम एव पक्षः 'पूतभृतः सर्वार्थत्वात्' इति ।

ननु च 'तेन स यजेत' इति श्रुतिः कथं नेया । 'तेन स यजेत' तेन स जुहुयादित्यर्थः । 'यजति'शब्देन लक्षणया होमो विधीयते ॥ २३ ॥

## अश्ववत् ॥ २४ ॥

अधिकरणातिदेशोऽयं 'तमुद्गात्रे ददाति' इत्यस्य । यद्येवं तेनैव गतार्थत्वादवाच्यमेतत् । लिङ्गोपन्यासार्थं पुनर्वचनम् ॥ २४ ॥

तदुच्यते—

## पशूपवादाच्च ॥ २५ ॥

इतरस्य सकलदाक्षिण्यस्य निवृत्तिः । येन पशूपवादो भवति । 'सत्यं वाऽनृतपेयोऽनृतं पशवोऽनृतं कुर्याद्य ऋतपेये पशून् दद्यात्' इति ॥ २५ ॥

द्विनामोत्तरो बहुहिरण्यो दूणाशश्च ॥ २६ ॥

उत्तरः क्रतुः 'द्विनामा' बहुहिरण्यो 'दूणाश' इति च ॥ २६ ॥

इति द्वाविंशेऽध्यायेऽष्टमी कण्डिका ॥



९

दीक्षणीयायाᳲ हिरण्यं द्वादशमानं ददाति ॥ १ ॥

मानं च कृष्णलम् । लोके 'रक्तिका' इति यत्प्रसिद्धम् । इयं च दक्षिणा न क्रतुदक्षिणा, न चेष्टिदक्षिणाप्रतिप्रसवः । किं तर्हि ? अपूर्वत्वाद्दक्षिणान्तरमेव । ततश्च दक्षिणाधर्मो नात्र भवति । अन्ते च दानम् । भागन्तु दक्षिणेति ॥ १ ॥

उत्तरेषु च द्विगुणं पूर्वं पूर्वम् ॥ २ ॥

दीयते ॥ २ ॥

प्रायणीयातिथ्योपसत्सु पशुवपान्ते प्रतिसवनं निहितेषु सवनमुखीयेषूदयनीयायामनूबन्ध्यायामुदवसानीयायाᳲ स्रजं चोद्गात्रे ॥ ३ ॥

हिरण्मयीं स्रजम् ॥ ३ ॥

रुक्मᳲ होत्रे ॥ ४ ॥

अनडुच्छतं काले सर्वेभ्यः ॥ ५ ॥

इयं च क्रतुदक्षिणा ततश्च तद्धर्मो भवति 'सर्व'ग्रहणाच्च । इतरेषु हिरण्यादिदानेषु तत्कर्मयुक्ताः प्रतिपत्तव्याः ॥ ५ ॥

वैश्यपशुकामयोर्वैश्यस्तोमः ॥ ६ ॥

वैश्यस्यापशुकामस्यापि पशुकामस्य वा वैश्यस्य ॥ ६ ॥

सवनान्याशीर्वन्ति ॥ ७ ॥

भवन्ति ॥ ७ ॥

प्रातःसवने प्रतिदुहा श्रयणम् ॥ ८ ॥

दुग्धमात्रेण ॥ ८ ॥

श्रृतेन माध्यन्दिने ॥ ९ ॥

श्रयणम् ॥ ९ ॥

तृतीयसवने दध्ना, दक्षिणा वत्सतराः पञ्चवर्षाः पृश्नयः॥

पृश्नयो विचित्राः ॥ १० ॥

वत्सतर्यश्च त्रिहायण्योऽप्रवीताः पञ्चवर्षा राजीवपृश्नयो नवनीतपृश्नयोऽरुणाः पिशङ्ग्यः सारङ्ग्य इति ॥ ११ ॥

अप्रवीताः—अकामिताः। राजीवपृश्नयः—पद्मपृश्नयः। नवनीतपृश्नयो—नवनीतसदृशैश्चित्रैः। अरुणाः—कपिलाः। पिशङ्ग्यो—मांसवर्णाः। सारङ्ग्या—वर्णान्तरोपध्वस्ताः ॥ ११ ॥

उभयस्य सहस्रं द्वादशं वा शतम् ॥ १२ ॥

सहस्रपक्षे तद्युक्तं भवति ॥ १२ ॥

सोमातिपूतस्य तीव्रसुदुक्थ्यः ॥ १३ ॥

'सोमातिपूतः' तद्विरेचनः ॥ १३ ॥

अपरुद्धराजन्यस्य ॥ १४ ॥

भवति तीव्रसुत् ॥ १४ ॥

दीर्घव्याधिग्रामकामप्रजाकामपशुकामानां वा ॥ १५ ॥

एषां च 'तीव्रसुद्' भवति ॥ १५ ॥

पूर्ववत्सोमाः ॥ १६ ॥

श्रयणवन्तो भवन्तीत्यर्थः॥ १६ ॥

इति द्वाविंशेऽध्याये नवमी कण्डिका ॥

१०

धेनुशतमाशिरे दुहन्ति ॥ १ ॥

अत्र विशेषः ॥ १ ॥

तदेव दक्षिणा ॥ २ ॥

भवति ॥ २ ॥

अच्छावाकविग्रहेषु भक्षणम् ॥ ३ ॥

अवघ्राणमितरेषु ॥ ४ ॥

न भक्षणम् ॥ ४ ॥

तेष्वेवोन्नयनम् अभ्यभि सोमानुन्नयन्तीति श्रुतेः ॥ ५ ॥

अध्वर्यू चमसाध्वर्यवश्च सर्वे प्रतिगृणन्त्यच्छावाकाय ॥६॥

द्वन्द्वानां प्रथमो राड्राजन्यस्य राज्यकामस्य ॥ ७ ॥

द्वन्द्वानां यः प्रथमो राट्संज्ञकः स राजन्यस्य राज्यकामस्य क्रतुर्भवति ॥ ७ ॥

यथाशक्त्येकविंशतिवर्गान्दद्यात् ॥ ८ ॥

ऋषभ ऐन्द्रः परियज्ञः ॥ ९ ॥

'परि' शब्दसामर्थ्यादधस्ताच्चोपरिष्टाच्च भवति । यजनीयेषु ॥ ९ ॥

अन्नाद्यकामस्य विराट् ॥ १० ॥

विराडाख्यो द्वन्द्वसोमः सोन्नाद्यकामस्य भवति ॥ १० ॥

यथाशक्ति दशवर्गान्दद्यात् ॥ ११ ॥

अत्र ॥ ११ ॥

पशुराग्नेयः परियज्ञः ॥ १२ ॥

भवति ॥ १२ ॥

प्रजातिकामस्यौपसदः ॥ १३ ॥

औपसदो नाम द्वन्द्वः सोमः स प्रजाकामस्य भवति ॥ १३ ॥

दक्षिणचतुर्विंशं शतम् ॥ १४ ॥

पशुर्वैश्वदेवः परियज्ञः ॥ १५ ॥

भवति ॥ १५ ॥

बहु प्रतिगृह्य गरगीरिव यो मन्येत तस्य पुनस्तोम उक्थ्यः ॥ १६ ॥

बहु प्रतिगृह्य गरगृहीतमिव आत्मानं मन्यते तस्य 'पुनस्तोम'संज्ञक उक्थ्यसंस्थो भवति ॥ १६ ॥

दक्षिणा द्वादशमिथुना पुनर्वतां च यथाशक्ति ॥ १७ ॥

पशुकामयज्ञौ चतुष्टोमौ ॥ १८ ॥

चतुष्टोमसंज्ञकौ द्वौ यज्ञौ तौ पशुकामस्य भवतः ॥ १८ ॥

तयोश्च—

षोडश्युत्तरः पूर्वस्मिन्यथाशक्त्येकशफान्दद्यात् ॥ १९ ॥

उभयानुत्तरस्मिन् ॥ २० ॥

एकशफान् द्विशफांश्च ॥ २० ॥

उद्भिद्बलभिदौ चाहरतः संयुक्तौ ॥ २१ ॥

'च' शब्दात्पशुकामयज्ञौ ॥ २१ ॥

'आहरतः संयुक्तौ' इति कोऽस्यार्थः—

पूर्वेणेष्ट्वोत्तरेणावश्यम् ॥ २२ ॥

'यष्टव्यम्' इत्ययमर्थः ॥ २२ ॥

इषुरिष्टिरन्तरेणैनावाग्नेयः पुरोडाशः ॥ २३ ॥

उभौ उद्भिद्बलभिदौ अन्तरेण 'इषुरिष्टि'संज्ञा इष्टिर्भवति। आग्नेयः पुरोडाशः। 'आग्नेय' इति न्यायसंसूचनम् ॥ २३ ॥

अत्र विशेषः—

उद्वृढः प्रस्तरः ॥ २४ ॥

वृहू निष्कर्षे। ऊर्ध्वं निष्कृष्ट इत्यर्थः ॥ २४ ॥

बाणवन्तः परिधयः ॥ २५ ॥

'बाणवत्' शब्द इषौ हि दृष्टः। "द्वौ बाणवन्तौ सपत्नाधिव्याधिनौ हस्ते कृत्वोपोत्तिष्ठत्" ( श० ब्रा० १४।६।८।२ ) इति। एतच्च शरेपूपपद्यते। एतच्च शाखान्तरेऽपि पठ्यते। तस्माद् बाणा एव परिधय इति ॥ २५ ॥

अर्धमासं मासꣳ संवत्सरं वा ॥ २६ ॥

'इषुरिष्टिः' भवति ॥ २६ ॥

दक्षिणा गायत्री चतुर्विꣳशतिवर्गा यथाशक्ति ॥ २७ ॥

इयमेव 'गायत्री' इत्युच्यते ॥ २७ ॥

अपचितिकामस्यापचिती ॥ २८ ॥

द्वौ क्रतू तावपचितिकामस्य भवतः । 'अपचितिः' पूजोच्यते ॥ २८ ॥

राजयज्ञावित्येके ॥ २९ ॥

एके आचार्या मन्यन्ते 'राजयज्ञौ' एताविति । एके त्रैवर्णिकस्यापि ॥ २९ ॥

दक्षिणाऽश्वरथश्चतुर्युगुभयतः ॥ ३० ॥

उभयतश्चत्वार इत्यर्थः ॥ ३० ॥

काꣳस्यकवचः ॥ ३१ ॥

रथो भवति ॥ ३१ ॥

शतार्हा अश्वाः ॥ ३२ ॥

अश्वाः शतार्हा भवन्ति ॥ ३२ ॥

साग्निचित्यावग्नेस्तोमौ सर्वजिद्दीक्षौ ॥ ३३ ॥

'अग्नेस्तोम' संज्ञकौ क्रतू साग्निचित्यौ भवतः ॥ ३३ ॥

पूर्वः पक्ष्युत्तरो ज्योतिः ॥ ३४ ॥

पूर्वस्य 'पक्षी' इति विशेषसंज्ञा, उत्तरस्य च 'ज्योतिः' इति ॥ ३४ ॥

इति द्वाविंशेऽध्याये दशमी कण्डिका ॥



११

धान्याचितानि चत्वारि चत्वारि दक्षिणा ॥ १ ॥

अग्नेस्तोमयोर्धान्यस्य पूर्णान्यनांसि चत्वारि दक्षिणा ॥ १ ॥

पूर्वस्य षड्गवान्युत्तरस्य चतुर्गवानि ॥ २ ॥

पूर्वस्य पक्षिणः षड्गवानि भवन्ति । उत्तरस्य ज्योतिषश्चतुर्गवानि ॥ २ ॥

ऋषभगोसवौ ॥ ३ ॥

ऋषभश्च गोसवश्च ऋषभगोसवौ क्रतू भवतः ॥ ३ ॥

पूर्वो राज्ञः ॥ ४ ॥

पूर्व ऋषभसंज्ञको राज्ञः ॥ ४ ॥

दक्षिण ऋषभसहस्रं द्वादशं वा शतम् ॥ ५ ॥

विकल्पेन ॥ ५ ॥

उक्थ्यो गोसवोऽयुतदक्षिणः ॥ ६ ॥

'गोसव' संज्ञकः क्रतुरुक्थ्यसंस्थो भवति अयुतदक्षिणश्च ॥ ६ ॥

वैश्ययज्ञ इत्येके ॥ ७ ॥

मन्यन्ते । सर्वेषामित्यपरे ॥ ७ ॥

सराजानो विशो यं पुरस्कुर्वीरन्त्स एतेन यजेत ॥ ८ ॥

गोसवेन ॥ ८ ॥

स्थण्डिलेऽभिषिच्यते प्रतिदुह्याहवनीयस्य दक्षिणतः ॥९॥

स्थितः । आगन्तुत्वादन्ते ॥ ९ ॥

स्थपतिरित्येनं ब्रूयुः ॥ १० ॥

गोसवयाजिनं जनाः ॥ १० ॥

वैश्वस्तोमदक्षिणालिङ्गो मरुत्स्तोमो गणयज्ञो भ्रातृणाꣳ सखीनां वा ॥ ११ ॥

वैश्यस्तोमदक्षिणायां यानि यानि लिङ्गानि तान्यत्रापि भवन्ति । 'मरुत्स्तोम' इति च संज्ञा । भ्रातृणां सखीनां वा स भवति 'गणयज्ञः' ॥ ११ ॥

प्रजाकामपशुकामयोरैन्द्राग्नकुलायः कुलदक्षिणः॥१२॥

'ऐन्द्राग्नकुलाय' इति संज्ञा । गोकुलश्चास्य दक्षिणा ॥ १२ ॥

स च—

द्वियज्ञो भ्रात्रोः सख्योर्वा ॥ १३ ॥

इन्द्रस्तोमो राजयज्ञः सहस्रं दक्षिणा ॥ १४ ॥

सहस्रं चास्य दक्षिणा ॥ १४ ॥

उक्थ्यः ॥ १५ ॥

उक्थ्यसंस्थश्चासौ भवति ॥ १५ ॥

पुरोधाकामस्येन्द्राग्न्योस्तोमः ॥ १६ ॥

भवति । पौरोहित्यकामस्य ॥ १६ ॥

राजपुरोहितयोर्वा सह यजमानयोः ॥ १७ ॥

तं प्रकृत्य हि श्रूयते—'एतेन राजपुरोहितौ सायुज्यकामौ यजेयाताम्' ( ताण्ड्य० २९।१७ ) इति ॥ १७ ॥

पृथग्वा ॥ १८ ॥

सह । 'वा' इति विकल्पः ॥ १८ ॥

दक्षिणा गायत्रीसम्पन्ना ब्राह्मणस्य ॥ १९ ॥

यष्टुर्भवति ॥ १९ ॥

जगत्या राज्ञः ॥ २० ॥

जगत्यासम्पन्ना राज्ञः । सह पक्षे प्राकृतदक्षिणः ॥ २० ॥

विघनौ पशुकामस्य ॥ २१ ॥

'विघन' संज्ञकौ क्रतू पशुकामस्य भवतः ॥ २१ ॥

अभिचरतो वा ॥ २२ ॥

तौ भवतः ॥ २२ ॥

बृहतीसम्पन्नाः पशुकामस्य ॥ २३ ॥

दक्षिणाः ॥ २३ ॥

अभिचरतः प्रज्ञाताः ॥ २४ ॥

प्राकृताः ॥ २४ ॥

## सन्दंशवज्रावभिचरतः ॥ २५ ॥

सन्दंशश्च वज्रश्च तावभिचरतो भवतः ॥ २५ ॥

## षोडशी वज्रः ॥ २६ ॥

वज्रः षोडशिसंस्थो भवति ॥ २६ ॥

## शुण्ठाधी लोहाकर्णी षोडशिनः सोमक्रयणी ॥ २७ ॥

भवति ॥ २७ ॥

## अहर्गणेऽप्यविशेषात् ॥ २८ ॥

अहर्गणे गतेऽपि षोडशिनि उक्तलक्षणयैव सोमक्रयणी भवति। कुत एतत्? अविशेषात्। अहर्गणगतोऽपि षोडशी षोडश्येव। न च संस्थान्तरैर्विरोधोऽस्ति ॥२८॥

## विश्वजित्परिवासाश्च ॥ २९ ॥

अहर्गणगतेऽपि विश्वजिति परिवासा भवन्ति। तुल्यन्यायत्वात् ॥ २९ ॥

## न वा स्वसम्बन्धात् ॥ ३० ॥

न वाऽहर्गणगते विश्वजिति परिवासा भवन्ति। सर्वस्वदानसम्बन्धेन हि तेषां श्रवणमिति। अथवा 'स्वसम्बन्धात्' इति। विश्वजिद्याजिसम्बन्धात्। न चाहर्गणयाजी। तस्मान्न भवन्ति ॥ ३० ॥

## एकराजमेव पूर्वेणाभिचरेत् ॥ ३१ ॥

पूर्वेण सन्दंशेन राजानमेवैकमभिचरेत्, न जनपदम् ॥ ३१ ॥

## जनपदं वज्रेण ॥ ३२ ॥

## व्यत्यासं वैनौ प्रयुञ्जीत ॥ ३३ ॥

वज्रेण राजानं तज्जनपदं च सन्दंशेन ॥ ३३ ॥

## शमित्वा स्तृत्वा वा ज्योतिष्टोमेन यजेत शान्त्यर्थेन शान्त्यर्थेन ॥ ३४ ॥

अभिचारादुपशमं गत्वा मारयित्वा वा शत्रुं ज्योतिष्टोमेन शान्त्यर्थेन यजेत ॥ ३४ ॥

इति द्वाविंशेऽध्याये एकादशी कण्डिका ॥

इति कर्कभाष्यसहिते कात्यायनश्रौतसूत्रे

द्वाविंशतितमोऽध्यायः समाप्तः।



# त्रयोविंशोऽध्यायः

१

## द्वादशोपसत्का अहीना मासापवर्गाः ॥ १ ॥

ननु च द्वादशोपसत्कत्वं न वाच्यम, अन्वयात्तत्प्राप्तेः। अहीनात्मकस्य हि द्वादशाहस्य अहीनान्तरेषु सामान्याद्धर्मप्रवृत्तिरिष्यते। तेन द्वादशोपसत्कत्वं प्राप्तमेवात्रेति। अत्रोच्यते—"दीक्षाः सुत्योपसच्छेषेण" (का० श्रौ० २३।१।५) इति वक्ष्यति। जामदग्न्ये चतूरात्रे दीक्षाणां विंशतिरुक्ता (का० श्रौ० २३।२।१)। तत्र मासापवर्गत्वे सति किं जामदग्न्ये मासापवर्गता बाध्यताम्, उतोपसदां द्वादशत्वमिति तेन मासापवर्गताबाधनाय द्वादशोपसत्कत्वमुच्यते, वचनात्(१) मासापवर्गास्ते भवन्ति ॥ १ ॥

## दीक्षाः सुत्योपसच्छेषेण ॥ २ ॥

सौत्यान्यहानि परिगणय्य औपसदानि च शेषा दीक्षाः ॥ २ ॥

## द्व्यहप्रभृतयो द्वादशाहपर्यन्ताः ॥ ३ ॥

द्विरात्रप्रभृतयो द्वादशरात्रपयन्ता अहीनाः ॥ ३ ॥

## तत्राम्नानादतिरात्रांश्चैके ॥ ४ ॥

तन्मध्य आम्नानात् अतिरात्रांश्च एके अहीनधर्मकानिच्छन्ति(२) प्रायोवचनन्यायात्। यथा कितवमध्यस्थोऽकितवोऽपि कितव इवानुमीयते साहचर्यादेव। एके तन्नेच्छन्ति। धर्मप्राप्तिर्हि वचनाद्भवति। न चेह वचनमस्ति प्रत्यक्षम्, न चानुमानिकम्, न च नामधेयम्। तस्मान्नाहीनधर्मका अतिरात्राः। न च सन्निधावाम्नानमात्रेण धर्माणां प्रवृत्तिर्युक्ता ॥ ४ ॥

## दाशरात्रिकाण्यहानि द्व्यहादिष्वेकोच्चयेन तद्गुणदर्शनात्॥

द्वादशाहे यो दशरात्रस्तदीयान्यहानि भवन्ति द्विरात्रादिषु। कुत एतत्? तद्गुणदर्शनात्। तद्गुणा हि दृश्यन्ते द्विरात्रं प्रकृत्य "अपशव्यो वै द्विरात्र इत्याहुः द्वे ह्यत छन्दसी गायत्रं च त्रैष्टुभं (च) जगतीमन्तर्यन्ति जगत्यत्र न भवति" इति। त्रैष्टुभमेके (इति) वैखानसविधिपरे वाक्ये सिद्धं गायत्रं प्रथममहस्त्रैष्टुभं च द्वितीयं

---

१. मासेनापवर्गः समाप्तिः येषाम्। मासश्चात्र सावनस्त्रिंशद्दिनात्मकः।

२. अप्रप्राये पठितो यथाप्र्यः परिगण्यते तन्न्यायेनेत्यर्थः।

दर्शयति। यदि च दाशरात्रिकाण्यहानि द्व्यहादिषु तदैतदुपपद्यते। तथा त्रिकद्रुकविधिपरे वाक्ये पृष्ठ्यमवसितं दर्शयति लिङ्गमात्रमुपदिष्टम्। न्यायोऽभिधीयते। द्विरात्रादिष्वहर्गणेषु गुणत्वसामान्याद् द्वादशाहिको विध्यन्त इष्यते। तत्र च प्रायणीयोदयनीयावतिरात्रौ। सर्वत्र प्रत्यक्षो दशरात्र एव प्रवृत्तिधर्मः। अपि च द्विरात्रत्रिरात्र इति च रात्रिसामान्याद्दाशरात्रिकी विध्यन्तप्रवृत्तिर्युक्तेति तस्मात्साधूक्तमाचार्येण "दाशरात्रिकाण्यहानि द्व्यहादिषु" इति ॥ ५ ॥

सहस्रदक्षिणाः ॥ ६ ॥

द्विरात्रादयो भवन्ति ॥ ६ ॥

चतूरात्रादिष्वधिकम् ॥ ७ ॥

चतूरात्रादिषु तु सहस्राधिका दक्षिणा ॥ ७ ॥

प्राकृतं वा प्रत्यहम् ॥ ८ ॥

'वा' शब्दो विकल्पार्थः। प्राकृतं दक्षिणादानं द्विरात्रादिषु वा भवति ॥ ८ ॥

पौण्डरीकेऽयुतम् ॥ ९ ॥

दक्षिणा ॥ ९ ॥

समविभक्ताः प्रत्यहं ददाति ॥ १० ॥

प्रत्यहं समविभागेन दक्षिणादानम् ॥ १० ॥

अन्त्येऽहन्यधिकाः ॥ ११ ॥

विभागाधिकानामन्त्येऽहनि दानम् ॥ ११ ॥

त्रयोदशातिरात्राः ॥ १२ ॥

'व्याख्यायन्ते' इति सूत्रशेषः ॥ १२ ॥

तेषाम्—

चत्वारोऽषोडशिकाः प्रथमाः ॥ १३ ॥

षोडशिग्रहरहिताश्चत्वारः प्रथमाः ॥ १३ ॥

प्रजातिकामस्य नवसप्तदशः ॥ १४ ॥

भवति ॥ १४ ॥

ज्येष्ठस्य ज्यैष्ठिनेयस्यं विषुवान् ॥ १५ ॥

अतिरात्रो भवति ॥ १५ ॥

गौर्भ्रातृव्यवतः ॥ १६ ॥

स्वर्गकामस्यायुः ॥ १७ ॥

आमयाविनो वा ॥ १८ ॥

भवति ॥ १८ ॥

ज्योतिष्टोमविश्वजित्त्रिवृत्पञ्चदशसप्तदशैकविंशा यथा-संख्यमृद्धिपशुब्रह्मवर्चसवीर्यान्नाद्यप्रतिष्ठाकामानाम् ॥१९॥

भवन्ति ॥ १९ ॥

अप्तोर्यामः प्र प्रेव यस्मात्पशवो भ्रंशेरन् ॥ २० ॥

प्राप्ता इव यस्मात्पशवो भ्रश्यन्ते तस्य 'अप्तोर्यामो' भवति ॥ २० ॥

अभिजिद् भ्रातृव्यवतः ॥ २१ ॥

सर्वस्तोमो बुभूषतः ॥ २२ ॥

भूतिमिच्छतः 'सर्वस्तोमो' भवति ॥ २२ ॥

यूपैकादशिनी चास्मिन् ॥ २३ ॥

भवति ॥ २३ ॥

इति त्रयोविंशेऽध्याये प्रथमा कण्डिका ।



२

द्व्यहास्त्रयः ॥ १ ॥

भवन्ति ॥ १ ॥

अषोडशिकावतिरात्रा उत्तरयोः ॥ २ ॥

द्विरात्रयोः ॥ २ ॥

आङ्गिरसचैत्ररथकापिवनाः ॥ ३ ॥

एतेषामेव संज्ञाः ॥ ३ ॥

द्वितीयमुक्थ्यपूर्वमेके ॥ ४ ॥

द्वितीयं द्विरात्रमेके उक्थ्यपूर्वं कुर्वन्ति। पाष्ठिकस्याग्निष्टोमस्य स्थाने उक्थ्यं कुर्वन्ति। संस्थामात्रान्यत्वं, धर्मास्तु तदीया एव ॥ ४ ॥

प्रथमेन यजेत यः पौण्यो हीन इव स्यात् ॥ ५ ॥

पुण्याहः सन्पुण्यैर्न युज्यत इत्यर्थः ॥ ५ ॥

द्वितीयेन प्रजाकामः ॥ ६ ॥

तृतीयेन स्वर्गकामः पशुकामो वा ॥ ७ ॥

त्र्यहाः पञ्च ॥ ८ ॥

गर्गबैदछन्दोमान्तर्वसुपराकाः ॥ ९ ॥

द्वितीये त्रिवृतोऽतिरात्राः सर्वे राज्यकामस्य ॥ १० ॥

त्रिवृत्स्तोमयुक्ता अतिरात्राः राज्यकामस्य भवन्ति क्रतवः। तत्रापि संस्थान्यत्वमात्रम् ॥ १० ॥

अन्तर्वसुः पशुकामस्य ॥ ११ ॥

भवति ॥ ११ ॥

पराकः स्वर्गकामस्य ॥ १२ ॥

भवति ॥ १२ ॥

चतुरहाश्चत्वारः ॥ १३ ॥

अत्रिचतुर्वीरजामदग्नवासिष्ठसंसर्पविश्वामित्राः ॥ १४ ॥

संज्ञा एताः ॥ १४ ॥

जामदग्नो विंशतिदीक्षः पुष्टिकामस्य ॥ १५ ॥

भवति ॥ १५ ॥

तत्र च—

## उपसदः पुरोडाशिन्यः ॥ १६ ॥

"उपसदः पुरोडाशिन्यो भवन्ति" ( ताण्डय० २१।११ ) इति वचनात् ॥१६॥

## अनूपसदं जुहोति ॥ १७ ॥

उपसद्युपसदि पुरोडाशान् जुहोतीत्यर्थः ॥ १७ ॥

यदा चानूपसदं पुरोडाशहोमस्तदा चिन्त्यते। किमाज्यधर्मा भवन्ति, उत औषधधर्मा इति। किं तावत्प्राप्तम्। सूत्रेणैव पक्षः—

## आज्यधर्मास्थानापत्तेः ॥ १८ ॥

कार्यापत्तौ हि धर्मप्राप्तिर्युक्तेति ॥ १८ ॥

एवं प्राप्त आह—

## औषधधर्मा वा द्रव्यसामान्यात् ॥ १६ ॥

औषधधर्मा वा भवन्ति नाज्यधर्माः। सत्यामपि कार्यापत्तौ पुरोडाशद्रव्यं ह्यत्र पर्युपस्थापकं धर्माणाम्। कार्यापत्तिरिति कृत्वाऽभिहितमेतत्। न चेह कार्यापत्तिः॥१९॥

## अनुहोमाश्च पुरोडाशाः ॥ २० ॥

अनुहोमा हि पुरोडाशाः श्रूयन्त इति "अनूपसदं जुहोति" ( का० श्रौ० २३। २।१७ ) इति। उपसद्यागमनु जुहोतीत्यर्थः ॥ २० ॥

## प्रत्युपसदमेकोच्चयेन कपालान्येककपालप्रभृतीनामाग्नेयाश्विनवैष्णवसौम्यसावित्रधात्रमारुतबार्हस्पत्यमैत्रवारुणैन्द्रवैश्वदेवाः ॥ २१ ॥

एतद्देवत्याः पुरोडाशाः। तेषां चैकोच्चयेन कपालानि एकप्रभृतीनि भवन्ति। 'अनूपसदं जुहोति' इति च जुहोतिसंशब्दनाज्जुहोतय एते ॥ २१ ॥

इति त्रयोविंशेऽध्याये द्वितीया कण्डिका ॥

३

तेषाᳫं होमः ॥ १ ॥

अग्ने वेर्होत्रं वेरध्वरमा पितरं वैश्वानरमवसे करिन्द्राय देवेभ्यो जुहुता हविः स्वाहा ॥ २ ॥

देवावश्विनौ मधुकशयाद्येमं यज्ञं यजमानाय मिमिक्षत-मिन्द्राय देवेभ्यो जुहुता हविः स्वाहा ॥ ३ ॥

देव त्विष्ण उर्वद्यास्मिन्यज्ञे यजमानायाधि विक्रमस्वेन्द्राय देवेभ्यो जुहुता हविः स्वाहा ॥ ४ ॥

देव सोम रेतोधा अद्यास्मिन्यज्ञे यजमानायैधीन्द्राय देवेभ्यो जुहुता हविः स्वाहा ॥ ५ ॥

देव सवितः सुसावित्रमद्यास्मिन्यज्ञे यजमानायासुवस्वेन्द्राय देवेभ्यो जुहुता हविः स्वाहा ॥ ६ ॥

देव धातः सुधाताद्यास्मिन्यज्ञे यजमानायैधीन्द्राय देवेभ्यो जुहुता हविः स्वाहा ॥ ७ ॥

देवा ग्रावाणो मधुमतीमद्यास्मिन्यज्ञे यजमानाय वाचं वदतेन्द्राय देवेभ्यो जुहुता हविः स्वाहा ॥ ८ ॥

देव्यमनुमतेऽन्वद्येमं यज्ञं यजमानाय मन्यस्वेन्द्राय देवेभ्यो जुहुता हविः स्वाहा ॥ ९ ॥

देव्यदिते स्वादित्यमद्यास्मिन्यज्ञे यजमानायासुवस्वेन्द्राय देवेभ्यो जुहुता हविः स्वाहा ॥ १० ॥

देव्य आपो नंनम्यध्वमद्यास्मिन्यज्ञे यजमानायेन्द्राय देवेभ्यो जुहुता हविः स्वाहा ॥ ११ ॥

सदः सदः प्रजावानृभुजुषाण इन्द्राय देवेभ्यो जुहुता हविः स्वाहा ॥ १२ ॥

देव त्वष्टः सुरेतोधा अद्यास्मिन्यज्ञे यजमानायैधीन्द्राय देवेभ्यो जुहुता हविः स्वाहेति ॥ १३ ॥

इत्येवमादि निगदव्याख्यातम् ॥ १-१३ ॥

एतैः सुत्यान्ते द्वादशाहं यजते प्रतिलोममेकैकेन ॥ १४ ॥

एतद्धर्मकैः पुरोडाशैः सुत्यान्ते सुत्यासन्निधौ द्वादशाहानि यजेत प्रातिलोम्येन । 'यजेत' इति संशब्दनाच्च यजतय एते न जुहोतयः ॥ १४ ॥

इति त्रयोविंशेऽध्याये तृतीया कण्डिका ॥



४

पञ्चाहास्त्रयः ॥ १ ॥

भवन्ति ॥ १ ॥

देवानां प्रथमः ॥ २ ॥

प्रथमस्य 'देवपञ्चाह' इतीयं संज्ञा ॥ २ ॥

द्वितीयः पञ्चशारदीयः ॥ ३ ॥

द्वितीयस्य 'पञ्चशारदीय' इतीयं संज्ञा ॥ ३ ॥

तेन यक्ष्यमाणः पञ्चवर्षाण्याश्वयुजीशुक्लेषु चतुस्त्रिंशतं पशूनालभते मारुतान् ॥ ४ ॥

'तेन' इति पञ्चशारदीयोपलक्षणम् ॥ ४ ॥

वैश्यस्तोमदक्षिणालिङ्गान् ॥ ५ ॥

वैश्यस्तोमे दक्षिणायां यानि लिङ्गानि 'राजीवपृश्नय' इत्येवमादीनि तल्लिङ्गानालभते ॥ ५ ॥

उक्ष्णो वत्सतरीर्वर्णानुपूर्व्येण ॥ ६ ॥

प्रतिवर्षम् ॥ ६ ॥

अर्धा वत्सतर्यः ॥ ७ ॥

तेषां च पशूनामर्धा वत्सतर्यो भवन्ति ॥ ७ ॥

पर्यग्निकृतानुत्सृजन्त्युक्ष्णो वत्सतरीभिः संस्थापयन्ति ॥

'उक्ष्णां तदङ्गरीतिविधानम् । वत्सतरीभिः परिसमाप्तिः ॥ ८ ॥

एवं पञ्च वर्षाण्युक्ष्णो नियुञ्जन्ति ॥ ९ ॥

"तांश्चैवोक्ष्ण" ( ताण्ड्य० २१।१४ ) इति वचनात् तानेव । वत्सतर्यस्तु प्रतिवर्षं वर्णानुपूर्व्येणान्याश्चान्याश्च भवन्ति ॥ ९ ॥

षष्ठे सवनीया भवन्ति त्रयस्त्रयोऽन्वहमैन्द्रामारुताः ॥१०॥

षष्ठे वर्षे त एवोक्षाणः सवनीया भवन्त्यन्वहं त्रयस्त्रयः ॥ १० ॥

पञ्चोत्तमे ॥ ११ ॥

उत्तमेऽहनि पञ्च ॥ ११ ॥

यः कामयेत बहुः स्यामिति स एतेन यजेत ॥ १२ ॥

पञ्चशारदीयेन ॥ १२ ॥

पश्वापदि चरवः ॥ १३ ॥

एतेषामेव पशूनामापत्सु चरवो भवन्ति ॥ १३ ॥

अपोनप्त्रियोऽप्सु मृते ॥ १४ ॥

अप्सु मृते पशावपोनप्त्रियश्चरुर्भवति । अत्र चाऽपोनपाद्देवता न त्वपोनप्ता । तत्र यप्रत्ययसन्नियोगेन प्रातिपदिकव्युत्पत्त्या 'अपोनप्त्रिय' इति रूपं भवति । एतच्च तद्धित एव नानुवाचनादिषु ॥ १४ ॥

वायव्यः पलायिते ॥ १५ ॥

नष्टे वायव्यश्चरुर्भवति ॥ १५ ॥

बार्हस्पत्यः श्रवणकूटकाणश्चेत् ॥ १६ ॥

श्रवणो–व्याधिविशेषः । कूटो–भग्नशृङ्गः । काणः प्रसिद्धः । एषु बार्हस्पत्यश्चरुः ॥ १६ ॥

नैर्ऋतोऽवसन्ने ॥ १७ ॥

अन्ययूथीयैर्युध्यमानस्यावसाये चरुर्भवति ॥ १७ ॥

पुरोडाशाः परे ॥ १८ ॥

रुद्राभिमानेऽग्नये रुद्रवते ॥ १९ ॥

रुद्रायाभिमाने ज्वरगृहीते ॥ १९ ॥

स᳖ंशीर्णश्चेदेककपालो भौमः ॥ २० ॥

संशीर्णो विशीर्णः ॥ २० ॥

प्रासहा हृतश्चेदिन्द्राय प्रसह्वने ॥ २१ ॥

प्रासहा हृतः प्रसह्य हृतः ॥ २१ ॥

भोजनीयमृते प्राजापत्यो द्वादशकपालः ॥ २२ ॥

भोजनीयमृतोऽजीर्णमृतः ॥ २२ ॥

मृतं ब्राह्मणान्भोजयेत् ॥ २३ ॥

प्रोक्षितस्य हि मांसभक्षणमुचितमिति ॥ २३ ॥

अप्सु प्रासनम् ॥ २४ ॥

"दुष्टस्य हविषोऽप्स्ववहरणम्" ( का० श्रौ० २५।५।९ ) इति अप्सु प्रासनमुक्तम् ॥ २४ ॥

निधानं वाऽदुष्टत्वात् ॥ २५ ॥

निधानं वा भवति नाप्सु प्रासनम् । किं कारणम् ? अदुष्टत्वात् । शिष्टभक्ष प्रतिषिद्धं दुष्टं भवति । न चैषु दोषेषु शिष्टभक्षप्रतिषेधः । तस्मान्निधानमेव ॥ २५ ॥

इदमिदानीं विचार्यते-किमत्रैवेतानि नैमित्तिकानि, उतान्यत्रापीति । अत्राह—

अन्यत्रापि दोषसंयोगात् ॥ २६ ॥

अतोऽप्यन्यत्राप्येभिर्दोषैः पशुव्यापत्तौ एतानि नैमित्तिकानि भवन्ति । कुतः ? पशुव्यापत्त्युपदेशेन विहितत्वात् ॥ २६ ॥

एवं प्राप्त आह—

## न प्रकरणात् ॥ २७ ॥

पञ्चशारदीयव्यतिरेकेणैतानि नैमित्तिकानि न भवन्ति । कुतः ? पञ्चशारदीयं हि प्रकृत्य श्रुतत्वात् प्रकृतत्वाच्च विशेषावसानम् ॥ २७ ॥

## व्रतवानुत्तमः ॥ २८ ॥

उत्तमः पञ्चाहः व्रतवत्संज्ञको भवति ॥ २८ ॥

तत्राऽहान्याह—

## ज्योतिर्गौर्महाव्रतं गौरायुः ॥ २९ ॥

## अहीना व्रतवन्तः सर्वजिद्दीक्षाः ॥ ३० ॥

भवन्ति ये व्रतवन्तः ॥ ३० ॥

इति त्रयोविंशेऽध्याये चतुर्थी कण्डिका ।

५

## षडहास्त्रयः ॥ १ ॥

## ऋतूनां प्रथमः ॥ २ ॥

षष्ठीनिर्देशेऽपि सति संज्ञेषा । यथा गवामयनं शाक्यानामयनमिति च ॥ २ ॥

## द्वितीये बृहद्रथन्तरपृष्ठः पञ्चाहः पृष्ठ्यावलम्बाख्यः ॥ ३ ॥

द्वितीये षडहे पार्ष्ठिकः पञ्चाह उभयपृष्ठः पृष्ठ्यावलम्बाख्यो भवति । पृष्ठ्याव-लम्बाख्याया इह च प्रयोजनाभावादन्यार्थता । वक्ष्यति हि—"पृष्ठ्यावलम्बाश्चत्वा-रश्छन्दोमा" ( का० श्रौ० २३।५।३३ ) इति ॥ ३ ॥

## तृतीये त्रिभ्यस्त्रिकद्रुकाः ॥ ४ ॥

तृतीये षडहे त्रिभ्यः पार्ष्ठिकेभ्योऽवसितेभ्यस्त्रिकद्रुका भवन्ति ॥ ४ ॥

सप्त सप्ताहाः ॥ ५ ॥

चत्वारो व्रतोत्तमाः प्रथमाः ॥ ६ ॥

चतुर्णां महाव्रतमुत्तमं भवति ॥ ६ ॥

तृतीयः पशुकामस्य ॥ ७ ॥

भवति ॥ ७ ॥

इन्द्रस्य पञ्चमः ॥ ८ ॥

पञ्चम इन्द्रसप्ताहसंज्ञकः ॥ ८ ॥

तत्र—

द्वितीयप्रभृतिषडेकाहाः ॥ ९ ॥

भवन्ति ॥ ९ ॥

सर्वस्तोम उत्तमः ॥ १० ॥

जनकसप्तरात्रः ॥ ११ ॥

चतुर्भ्यो विश्वजिन्महाव्रतम् ॥ १२ ॥

चतुर्भ्यः पाष्ठिकेभ्योऽवसितेभ्यः परो 'विश्वजिन्महाव्रतं' च ॥ १२ ॥

उत्तमे षडहो बृहद्रथन्तरपृष्ठः पृष्ठ्यस्तोमाख्यः ॥ १३ ॥

उभयपृष्ठ्यस्य षडहस्य 'पृष्ठ्यस्तोम' इतीयमाख्या संव्यवहारार्था ॥ १३ ॥

विश्वजित्पशुकामस्य ॥ १४ ॥

विश्वजिदतिरात्रो भवति । पशुकामस्य चायम् ॥ १४ ॥

अष्टाहे षडहान्महाव्रतम् ॥ १५ ॥

अष्टाहे षडहादवसितान्महाव्रतं भवति । ततोऽतिरात्रः ॥ १५ ॥

नवरात्रे त्रिकद्रुकाः ॥ १६ ॥

षडहादेवावर्त्ताद्भवन्ति ॥ १६ ॥

द्वितीयं त्रिकद्रुकेभ्यः पृष्ठ्यावलम्बः ॥ १७ ॥

ततोऽतिरात्रः ॥ १७ ॥

दशरात्राश्चत्वारः ॥ १८ ॥

भवन्ति ॥ १८ ॥

प्रथमस्त्रिककुप् ॥ १९ ॥

प्रथमः 'त्रिककुप्' संज्ञको भवति ॥ १९ ॥

उक्थ्योऽग्निष्टोमपक्षस्त्रिरावृतः ॥ २० ॥

सर्वे चैतेऽपूर्वाः ॥ २० ॥

प्रतिष्ठाकामस्य ॥ २१ ॥

कौसुरुबिन्दः ॥ २२ ॥

'कौसुरुबिन्द' इति संज्ञा ॥ ॥ २२ ॥

तत्राहान्याह—

अग्निष्टोमास्त्रिवृतस्त्रयः ॥ २३ ॥

त्रिवृत्स्तोमयुक्ता 'अग्निष्टोमाः' त्रयो भवन्ति ॥ २३ ॥

पञ्चदशाश्चोक्थ्याः ॥ २४ ॥

त्रय एव ॥ २४ ॥

सप्तदशाश्च ॥ २५ ॥

'च'शब्दात्त्रय उक्थ्याः ॥ २५ ॥

एकविंशोऽतिरात्रः ॥ २६ ॥

योऽतिरात्रः स एकविंशस्तोमको भवति ॥ २६ ॥

पूर्दशरात्रोऽभिचर्यमाणस्य ॥ २७ ॥

'पूर्दशरात्र' इति संज्ञैषा, सोऽभिचर्यमाणस्य भवति ॥ २७ ॥

तत्राहान्याह—

उक्थ्योऽग्निष्टोमपक्षः ॥ २८ ॥

उक्थ्यस्योभयतोऽग्निष्टोमाविति ॥ २८ ॥

## गोपक्षोऽभिजित् ॥ २९ ॥

'अभिजित्' एकाहः । तस्य गौरुभयतो भवतीत्यर्थः ॥ २९ ॥

## आयुर्विश्वजित्पक्षः ॥ ३० ॥

आयुराख्यश्च—एकाहः तस्य विश्वजित्पक्षसंस्थानीयो भवति ॥ ३० ॥

## छन्दोमदशाहः पशुकामस्य ॥ ३१ ॥

'छन्दोमदशाह' इति संज्ञा । स पशुकामस्य भवति ॥ ३१ ॥

तत्राहान्याह—

## पृष्ठयावलम्बाश्चत्वारश्छन्दोमाः ॥ ३२ ॥

अतिरात्र उत्तमः ॥ ३२ ॥

## पौण्डरीकः सर्वर्द्धिकामस्य ॥ ३३ ॥

'पौण्डरीक' इति संज्ञा, स सर्वर्द्धिकामस्य भवति । सर्वामृद्धिं यः कामयते स सर्वर्द्धिकामः, तस्य पौण्डरीको भवति ॥ ३३ ॥

## दशरात्रोऽसत्रोत्थानः ॥ ३४ ॥

दशरात्रो भवति सत्रोत्थानवर्जितः ॥ ३४ ॥

## विश्वजिदतिरात्रः ॥ ३५ ॥

भवति ॥ ३५ ॥

## तुल्यमाध्वर्यवमतिरात्रेषु विश्वजिद्वर्जम् ॥ ३६ ॥

अहीनेषु येऽतिरात्रास्तेषु समानमाध्वर्यवं भवति । विश्वजितं वर्जयित्वा । को विशेषस्तत्रेति चेत् , सर्वमेधे श्रूयते—"विश्वजित्सर्वपृष्ठोऽतिरात्रो दशममहर्भवति" ( श० ब्रा० १३।७।१।१२ ) इति सर्वपृष्ठता विशेषः । तेनोच्यते 'विश्वजिद्वर्जम्' इति ॥ ३६ ॥

## यथोक्तमुत्तमो यथोक्तमुत्तमः ॥ ३७ ॥

उत्तमो द्वादशरात्रो यथोक्त एवति ॥ ३७ ॥

इति त्रयोविंशेऽध्याये पञ्चमी कण्डिका ॥

इति कर्कभाष्यसहिते कात्यायनश्रौतसूत्रे
त्रयोविंशतितमोऽध्यायः समाप्तः ॥

# चतुर्विंशोऽध्यायः

सत्राणि

१

उक्ता अहीनाः। इदानीं सत्राण्यभिधीयन्ते—

**द्वादशरात्रादीनि रात्रिसत्त्राणि ॥ १ ॥**

'रात्रिसत्त्राणि' इति नाम। तच्च द्वादशरात्रप्रभृतीनाम्। (१)पूर्वपदप्रधानोऽयं बहुव्रीहिः ॥ १ ॥

**एकोच्चयेन चत्वारिꣳशदन्तानि ॥ २ ॥**

एकोच्चयेनाह्नां चत्वारिंशदन्तानि रात्रिसत्त्राणि ॥ २ ॥

**यथोपदेशमहानि ॥ ३ ॥**

येन क्रमेण यान्यहान्युपदिश्यन्ते, तानि तथैव प्रतिपत्तव्यानि। किमर्थमिदमुच्यते? आवापिकानामन्यः क्रमः औपदेशिकानां तु उपदेशक्रम एव। अथवा 'यथोपदेशम्' इति ऐहिकानां नाम्नां धर्मप्रतिपत्त्यर्थम् ॥ ३ ॥

**आपूर्यमाणे दशरात्रः परः ॥ ४ ॥**

आपूर्यमाणे सत्रे दशरात्र आवापो भवति। स च भवन्परतो भवति न पूर्वः। षट् पार्ष्ठिकानि चत्वारि छान्दोमिकान्यहानि दशरात्र उच्यते ॥ ४ ॥

**प्रकृतिविहितेषु महाव्रतं दशरात्रादुत्तरमेकाहार्थे ॥ ५ ॥**

यानि प्रकृतिविहितानीत्याचार्येणाभिधीयन्ते, तत्रैकाहार्थे महाव्रतं भवति दशरात्रादुत्तरम् ॥ ५ ॥

**पुरस्तादन्यत् ॥ ६ ॥**

यदन्यदावापान्तरं व्याख्यास्यते तद्दशरात्रात्पूर्वं भवति ॥ ६ ॥

**षडहार्थेऽभिप्लवः ॥ ७ ॥**

---

१. द्वादशरात्रमादिर्येषाम्। तत्र द्वादशरात्रं द्वादशाह एव सत्रात्मकः। स च पूर्वमुक्त एव। ततो द्वादशरात्रादारभ्य एकैकाहवृद्ध्या चत्वारिंशद्रात्रान्तानि सत्राणि भवन्ति।

यत्र षड्भिरहोभिर्न पूर्यते सत्त्रम् तत्राभिप्लवः पूरणो भवति। अभिप्लवार्थश्चोक्तो गवामयने ॥ ७ ॥

तस्यादितः पञ्च पञ्चाहार्थे ॥ ८ ॥

तस्यैवाभिप्लवस्यादितः पञ्चाहानि गृह्यन्ते पञ्चाहार्थे ॥ ८ ॥

त्र्यहार्थे ज्योतिर्गौरायुरिति त्रिकद्रुकाः ॥ ९ ॥

'त्रिकद्रुका' इति ज्योतिरादीनां समुदितानां संज्ञा संव्यवहारार्था ॥ ९ ॥

व्रतं च यथोक्तं चतुरहार्थे ॥ १० ॥

'च' शब्दात्त्रिकद्रुकाश्च। यथोक्तग्रहणाच्च दशरात्रात्परं व्रतं भवति ॥ १० ॥

गोआयुषी द्व्यहार्थे ॥ ११ ॥

भवतः ॥ ११ ॥

अतिरात्रान्तरमावापस्थानम् ॥ १२ ॥

सत्रस्याद्यन्तयोरतिरात्रविधानात् ॥ १२ ॥

आवापसमवेतनामल्पमल्पं पूर्वम् ॥ १३ ॥

यत्रावापानां समवायेन सत्रं पूर्यते तत्र यद्यदल्पं तत्तत्पूर्वं भवति ॥ १३ ॥

द्वे त्रयोदशरात्रे ॥ १४ ॥

रात्रे भवतः ॥ १४ ॥

पृष्ठ्यात्सर्वस्तोमोऽतिरात्रः ॥ १५ ॥

पृष्ठ्यादवसितात्सर्वस्तोमसंज्ञकोऽतिरात्रो भवति। पूर्णमिदमेकम् ॥ १५ ॥

प्रकृतिविहितं द्वितीयम् ॥ १६ ॥

भवति। प्रकृतिविहितग्रहणाच्च व्रतं दशरात्रादुत्तरं भवति ॥ १६ ॥

सम्भार्यं तृतीयम् ॥ १७ ॥

तृतीयं त्रयोदशरात्रमहोभिः सम्भ्रियते ॥ १७ ॥

प्रायणीयाच्चतुर्विंशमहरभिजित्त्रयः स्वरसामानो त्रिषुवांस्त्रयः स्वरसामानो विश्वजिद्व्रतमुदयनीयोऽतिरात्रः ॥ १८ ॥

अत्र चतुर्विंशमहरादिषु गावामयनिकेषूद्ग्रात्रालम्भसवनान्तजपा भवन्ति गावामयनिकत्वादेव ॥ १८ ॥

**चतुर्दशरात्राणि त्रीणि ॥ १९ ॥**

तत्रैकस्मिन्—

**द्वौ पृष्ठ्यौ ॥ २० ॥**

भवतः ॥ २० ॥

**प्रतिलोमः परः ॥ २१ ॥**

भवति । प्रातिलोम्यं च त्रयस्त्रिंशारम्भणत्वेन ॥ २१ ॥

**मध्यमे त्रिकद्रुकाः पृष्ठ्यमभितः ॥ २२ ॥**

मध्यमे चतुर्दशरात्रे पृष्ठ्यमभितस्त्रिकद्रुका भवन्ति ॥ २२ ॥

**प्रतिलोमाः परे ॥ २३ ॥**

आयुर्गौर्ज्योतिरित्येवम् ॥ २३ ॥

**विवाहोदकतल्पसंशयितानामेतत् ॥ २४ ॥**

येषां विवाहे संशयो भवति किमस्माकं विवाहो भवति न भवतीति संशयः । तथा उदकपाने शयने च । तेषामेतत्सत्त्रं भवति ॥ २४ ॥

**प्रकृतिविहितं तृतीयम् ॥ २५ ॥**

प्रकृतिविहितग्रहणाद्द्वो आयुषी भवतः ॥ २५ ॥

**पञ्चदशरात्राणि चत्वारि ॥ २६ ॥**

भवन्ति ॥ २६ ॥

तत्र—

**उत्तरे प्रकृतिविहिते ॥ २७ ॥**

त्रिकद्रुकैः पूरणमित्येतदुक्तं भवति ॥ २७ ॥

**चतुर्दशरात्राभ्यां पूर्वे व्याख्याते ॥ २८ ॥**

पूर्वे पञ्चदशरात्रे चतुर्दशरात्राभ्यां व्याख्याते ॥ २८ ॥

इयांस्तु विशेषः—

पृष्ठ्ययोर्मध्ये महाव्रतम् ॥ २९ ॥

भवति ॥ २९ ॥

अतिरात्रादग्निष्टुद्द्वितीयस्य ॥ ३० ॥

अतिरात्रादवसितादग्निष्टुद् द्वितीयस्य भवति ॥ ३० ॥

स प्रायणीयस्तृतीयस्य ॥ ३१ ॥

स एवाग्निष्टुत्तृतीयस्य प्रायो भवति। नाम्ना च तदीयैव संस्था ॥ ३१ ॥

इति चतुर्विंशेऽध्याये प्रथमा कण्डिका ॥

२

प्रकृतिविहितानि प्राग्विꣳशतिरात्रात् ॥ १ ॥

षोडशरात्रादिषु चतुर्षु आवापेन हि पूरणम्। तत्र षोडशरात्रे प्रायणीयात् त्रिकद्रुकाः दशरात्रादुत्तरव्रतम्। सप्तदशरात्रे प्रायणीयात्पञ्चाहः, अष्टादशरात्रे षडहः, एकोनविंशतिरात्रे षडहः, दशरात्राच्चोत्तरं व्रतम् ॥ १ ॥

विꣳशतिरात्रेऽभिप्लवोऽभिजिद्विश्वजितौ च ॥ २ ॥

यथोपदेशम् ॥ २ ॥

एकविꣳशतिरात्रयोरतिरात्रावषोडशिकौ ॥ ३ ॥

अभिप्लवास्त्रयः प्रथमादतिरात्रः ॥ ४ ॥

परिपूर्णमेवैतत् ॥ ४ ॥

निदाघे द्वितीयं ब्रह्मवर्चसकामानाम् ॥ ५ ॥

निदाघो ग्रीष्मः। तत्र द्वितीयमेकविंशतिरात्रं ब्रह्मवर्चसकामानां भवति ॥ ५ ॥

त्रयस्त्रयः स्वरसामानो विषुवन्तमभितः ॥ ६ ॥

पृष्ठ्यौ च ॥ ७ ॥

चशब्दादभितः ॥ ७ ॥

उत्तरः प्रतिलोमः ॥ ८ ॥

पृष्ठयो भवति ॥ ८ ॥

मानव्यः सामिधेन्यः ॥ ९ ॥

विषुवति भवन्ति ॥ ९ ॥

सौमापौष्ण उपालम्भ्यः ॥ १० ॥

विषुवत्येवम् ॥ १० ॥

प्रकृतिविहितान्या द्वात्रिंशद्रात्रात् ॥ ११ ॥

सह द्वात्रिंशद्रात्रेण, आङभिविधौ कर्मविषयत्वात् ॥ ११ ॥

द्वाविंशतिरात्रमन्नाद्यकामानाम् ॥ १२ ॥

त्रयोविंशतिरात्रं प्रतिष्ठाकामानाम् ॥ १३ ॥

पूर्वं चतुर्विंशतिरात्रं प्रजाकामानां पशुकामानां वा ॥१४॥

द्वाविंशतिरात्रे पूरणम्—प्रायणीयात्त्रिकद्रुकास्ततोऽभिप्लवः, दशरात्राच्च परं व्रतम् । त्रयोविंशतिरात्रे प्रायणीयात्पञ्चाहः, ततः षडहः । पूर्वस्मिंश्चतुर्विंशतिरात्रे द्वौ षडहौ ॥ १४ ॥

द्वितीयः संसदः ॥ १५ ॥

द्वितीयं चतुर्विंशतिरात्रं संसदसंज्ञकम् ॥ १५ ॥

अत्र विशेषः—

अषोडशिकावतिरात्रौ ॥ १६ ॥

विशालः ॥ १७ ॥

वक्ष्यमाणस्याहस्संङ्घातस्य संज्ञा ॥ १७ ॥

पार्ष्ठिकानि त्रीण्युत्तराणि प्रतिलोमानुलोमानि ॥ १८ ॥

पार्ष्ठिकानि त्रीण्युत्तराणि अहानि प्रतिलोमानुलोमानि ॥ १८ ॥

तमभितोऽग्निष्टोमावनिरुक्तौ ॥ १९ ॥

तं विशालमभितोऽग्निष्टोमावनिरुक्तौ ॥ १९ ॥

पृष्ठ्यस्तोमौ च ॥ २० ॥

'च'शब्दाद् अभितो भवतः ॥ २० ॥

तयोः—

उत्तरः प्रतिलोमः ॥ २१ ॥

तस्मादग्निष्टोमावनिरुक्तौ ॥ २२ ॥

पूर्णमेतत् ॥ २२ ॥

पञ्चविंशतिरात्रमन्नाद्यकामानाम् ॥ २३ ॥

षड्विंशतिरात्रं प्रतिष्ठाकामानाम् ॥ २४ ॥

सप्तविंशतिरात्रमृद्धिकामानाम् ॥ २५ ॥

अष्टाविंशतिरात्रं प्रजाकामानां पशुकामानां वा ॥ २६ ॥

द्वात्रिंशद्रात्रं च ॥ २७ ॥

चशब्दात्प्रजाकामानां पशुकामानां वा। पञ्चविंशतिरात्रेऽभिप्लवौ, स्वस्थाने व्रतं च। षड्विंशतिरात्रे प्रायणीयाद्रो आयुषी, ततोऽभिप्लवौ। सप्तविंशतिरात्रे प्रायणीयात्त्रिकद्रुकाः, ततोऽभिप्लवौ। अष्टाविंशतिरात्रे प्रायणीयात्त्रिकद्रुकाः, ततोऽभिप्लवौ, स्वस्थाने च व्रतम्। एकोनत्रिंशद्रात्रे प्रायणीयात्पञ्चाहः ततोऽभिप्लवौ। त्रिंशद्रात्रे त्रयोऽभिप्लवाः। एकत्रिंशद्रात्रे व्रतमधिकम्। द्वात्रिंशद्रात्रे प्रायणीयाद्रो आयुषी, अभिप्लवास्त्रयः ॥ २७ ॥

त्रयस्त्रिंशद्रात्राणि त्रीणि ॥ २८ ॥

तत्र प्रथमे —

पञ्चाहाश्चत्वारः ॥ २९ ॥

त्रिभ्योऽतिरात्रो विश्वजित् ॥ ३० ॥

त्रिभ्यः पञ्चाहेभ्योऽवसितेभ्यो विश्वजिदतिरात्रः ॥ ३० ॥

व्रतवद्द्वितीयम् ॥ ३१ ॥

त्र्यभिप्लवमभिप्लवान्तरयोरतिरात्रौ ॥ ३२ ॥

तृतीये त्र्यहस्त्र्यहः पञ्चाहा विश्वजितमभितः ॥ ३३ ॥

भवन्ति ॥ ३३ ॥

तत्र च—

प्रतिलोमाः परे ॥ ३४ ॥

प्रकृतिविहितान्या चत्वारिंशद्रात्रात् ॥ ३५ ॥

चतुस्त्रिंशद्रात्रमन्नाद्यकामानाम् ॥ ३६ ॥

षट्त्रिंशद्रात्रं प्रतिष्ठाकामानाम् ॥ ३७ ॥

सप्तत्रिंशद्रात्रमृद्धिकामानाम् ॥ ३८ ॥

अष्टात्रिंशद्रात्रं प्रजाकामानां पशुकामानां वा ॥ ३९ ॥

चत्वारिंशद्रात्रं च ॥ ४० ॥

'च'शब्दादेतत्कामानामेव । अत्र पूरणं प्रकृतिविहितावापेन यथोक्तम् ॥ ४० ॥

व्रतवन्त्युत्तराणि प्रथमतृतीयवर्जं सप्तैकान्नपञ्चाशद्रात्राणि ॥

प्रथमतृतीयवर्जं व्रतवन्ति भवन्ति ॥ ४१ ॥

तत्र—

प्रथमो विधृतिः ॥ ४२ ॥

पुल्लिङ्गेनैव सत्रस्याभिधानम् ॥ ४२ ॥

अषोडशिकावतिरात्रौ ॥ ४३ ॥

इति चतुर्विंशेऽध्याये द्वितीया कण्डिका ॥

३

कौसुरुबिन्दः प्रथमस्त्र्यह उक्थ्यौ तूत्तरौ ॥ १ ॥

कौसुरुबिन्दः प्रथमस्त्र्यहोऽग्निष्टोमास्त्रिवृत्स्तोमयुक्तास्त्रयः । तत्र विशेषः । उक्थ्यावुत्तरौ भवतः ॥ १ ॥

षोडशिदशमा उक्थ्याः ॥ २ ॥

भवन्ति। यत्र संस्थामात्रमेवोद्घटते, तत्राऽपूर्वव्यपदेशः। यत्र गौर्व्योतिरायुरादिवदुपादानम्, तत्रैकाहिकाः, दशरात्रे पुनर्द्वादशाहिका इति। ऐकाहिके पुनर्नाम्ना धर्मप्रवृत्तिः, अपूर्वेषु तु द्वादशाहिको विध्यन्तः ॥ २ ॥

पृष्ठ्यं चाभितो द्वादश द्वादश ॥ ३ ॥

उक्थ्या भवन्ति ॥ ३ ॥

वर्गान्तरेष्वतिरात्राः ॥ ४ ॥

यमातिरात्रम् ॥ ५ ॥

'व्याख्यास्यते' इति सूत्रशेषः ॥ ५ ॥

अभिप्लवौ गो आयुषी अतिरात्रावभिप्लवावभिजिद्विश्वजितावतिरात्रावभिप्लवः सर्वस्तोमनवसप्तदशावतिरात्रौ ॥६॥

आञ्जनाभ्यञ्जनीयेऽभिप्लवाः षट् ॥ ७ ॥

'आञ्जनाभ्यञ्जनीयम्' इति संज्ञा ॥ ७ ॥

तत्र—

चतुर्भ्यः सर्वस्तोमोऽतिरात्रः ॥ ८ ॥

चतुर्भ्योऽभिप्लवेभ्योऽवसितेभ्यः सर्वस्तोमोऽतिरात्रो भवति ॥ ८ ॥

तस्मिन्नुपसत्सु सर्पिर्विपचेयुर्गार्हपत्ये गुल्गुलुसुगन्धितेजनपीतुदारुभिः ॥ ९ ॥

तस्मिन्नाञ्जनाभ्यञ्जनीये उपसत्सु वर्त्तमानासु गुल्गुलुसुगन्धितेजनपीतुदारुभिः पृथक् पृथक् सर्पिर्विपचेयुः। पुरुषार्थत्वाद्गार्हपत्ये न प्राप्नोति इति वचनम् ॥ ९ ॥

यथासवनन्तैः सवनेष्वाञ्जनाभ्यञ्जने कुर्वीरन्नाग्नीध्रेऽहरहः ॥ १० ॥

प्रातःसवनान्ते गुल्गुलुना माध्यन्दिने सुगन्धितेजनेन तृतीयसवने पैतुदारवेण। अञ्जनमक्ष्णोः, अभ्यञ्जनं शरीरस्या आग्नीध्रेऽहरहः ॥ १० ॥

पृष्ठ्ये वा ॥ ११ ॥

वाशब्दो विकल्पार्थः ॥ ११ ॥

सवनमुखीयेषु भर्तायिष्यन्तो वा ॥ १२ ॥

वा सवनान्तेषु ॥ १२ ॥

ये आत्मानं नैव जानीरंस्तेषामेतत् ॥ १३ ॥

य आत्मानं प्रसुप्तमिव मन्यन्ते तेषामाञ्जनाभ्यञ्जनीयेऽधिकारः ॥ १३ ॥

संवत्सरसंमिते चतुर्विंशमहः ॥ १४ ॥

'संवत्सरसम्मितम्' इति सत्रनाम । तत्र चतुर्विंशमहर्भवति ॥ १४ ॥

अभिप्लवाश्चत्वारः ॥ १५ ॥

गोआयुषी त्रिभ्यो विषुवन्मध्यो नवरात्रः ॥ १६ ॥

त्रिभ्योऽवसितेभ्यो विषुवन्मध्ये गावामयनिको नवरात्रो भवति ॥ १६ ॥

एकषष्टिरात्रे पृष्ठ्यो नवरात्रमभितः ॥ १७ ॥

अप्रतिज्ञातमप्येकषष्टिरात्रं लाघविकेन सताऽऽचार्येणोदाभिहितम् ॥ १७ ॥

प्रतिलोमः परः ॥ १८ ॥

तयोः पृष्ठ्ययोः प्रतिलोमः परो भवति ॥ १८ ॥

सवितुः ककुभः ॥ १९ ॥

'व्याख्यास्यते' इति सूत्रशेषः ॥ १९ ॥

तानाचष्टे—

नवरात्राश्चत्वारः ॥ २० ॥

अग्निष्टोमाः प्रथमसप्तमोत्तमा नववर्गाणामुक्थ्या इतरे ॥

सर्वे चैतेऽपूर्वाः ॥ २१ ॥

परे षडभिप्लवे ॥ २२ ॥

परे ये द्वे ते षडभिप्लवे भवतः ॥ २२ ॥

पूर्वस्य चतुर्थ्यौ व्रतम् ॥ २३ ॥

भवति ॥ २३ ॥

प्रजातिकामानामेतत् ॥ २४ ॥

भवति ॥ २४ ॥

प्रकृतिविहितः शतरात्रं चतुर्दशाभिप्लवं चतुरहश्च ॥२५॥

ननु प्रकृतिविहितत्वेनैवैतत्प्राप्नोति, चतुर्दशाभिप्लवं चतुरहश्चेत्यवाच्यम्। उच्यते च, तत्किमर्थम् ? शतरात्रद्वयप्रज्ञापनाय। एकं प्रकृतिविहितम्। तत्र त्रिकद्रुकाः पूर्वमभिप्लवेभ्यो भवन्ति, दशरात्राच्च परं व्रतं भवति, द्वितीये यथोपदेशमहानीत्यभिप्लवेभ्यः परतश्चतुरहः ॥ २५ ॥

सदोहविर्धानानि चक्रीवन्ति ॥ २६ ॥

चक्रीवन्ति भवन्ति ॥ २६ ॥

अभिप्रयायमभिषुण्वन्ति देशानुपरोधेन ॥ २७ ॥

यात्वा यात्वाभिषवं कुर्वन्ति देशानुपरोधेन प्रतिनिवर्तन्ते ॥ २७ ॥

अहरहराभिप्लवेषु त्रिकद्रुकेषु वा ॥ २८ ॥

'वा' इति विकल्पः ॥ २८ ॥

अभिप्लवाभ्यासेनाभिपूरणम् ॥ २९ ॥

भवति सत्राणाम् ॥ २९ ॥

सकृत्प्रयोगी दशरात्रः ॥ ३० ॥

भवति। प्रकृतिविहितानामेष धर्मः ॥ ३० ॥

व्रतवन्ति सर्वजिद्दीक्षाणि ॥ ३१ ॥

यानि व्रतवन्ति सत्राणि तानि सर्वजिद्दीक्षाणि ॥ ३१ ॥

सप्तदशरात्रादीनि त्रिंशदन्तान्येक एकान्नपञ्चाशद्रात्रे चाष्टादश दीक्षाणि पौर्णमासीप्रक्रमाणि ॥ ३२ ॥

सप्तदशरात्रादीनि रात्रिसत्राणि त्रिंशदन्तानि। एकान्नपञ्चाशद्रात्रे च यानि व्रतवन्ति तान्यष्टादशदीक्षाणि पौर्णमासीप्रक्रमाणि चैक इच्छन्ति। एके यथाप्राप्तम् व्रतवतां सर्वजिद्दीक्षता ॥ ३२ ॥

"ते शतातिरात्रं सत्रमुपेयुः" ( श० ब्रा० ११।५।५।६ ) इति श्रूयते। तत्र सन्देहः—किं शातरात्रिकाणामह्नां संस्थात्वमात्रमुच्यते, उत द्वादशाहस्य यदाद्यमहरतिरात्रसंस्थं तच्छतकृत्वोऽभ्यसितव्यम्, उत दशरात्रस्यातिरात्रसंस्थस्यैषोऽभ्यासः, आहोस्विच्छतसंख्यासंयुक्तानामतिरात्राणां विधिरिति। किं तावत्प्राप्तम्? सूत्रेणैव पक्षः—

## शतातिरात्रेऽहानि शतरात्रसामान्यात् ॥ ३३ ॥

शतातिरात्रे शतमह्नां श्रूयते। तच्छातरात्रिकाण्यहानि प्रवर्त्तन्ते। शतसंख्यावच्छिन्नस्य हि धर्मापेक्षायां सत्यां शतरात्रस्य पर्युपस्थापकत्वमिति ॥ ३३ ॥

एवं प्राप्त आह—

## द्वादशाहाद्यं वा तत्प्रकृतेः ॥ ३४ ॥

अत्र वृद्धयाज्ञिको यशोगोप्याचष्टे 'द्वादशाहस्य यदाद्यं प्रायणीयमहरतिरात्रसंस्थं तस्यैतच्छतसंख्याविधानम्' इति। एवं चातिरात्रप्राप्तौ शतसंख्याविधानमिति। यत्पुनरुक्तं 'शतरात्रः प्रवर्त्तत' इति, तदयुक्तम्। न हि शतातिरात्रस्य शातरात्रिकधर्मप्रवृत्तौ प्रमाणमस्ति। उभयत्र ह्यानुमानिकेन वचनेन द्वादशाहविध्यन्तप्रवृत्तिरिष्यते तस्मान्न शातरात्रिको विध्यन्तः। यदप्युक्तं—'द्वादशाहाद्यस्याह्न इयं संख्या विधीयते' इति, तदप्ययुक्तम्। पृथक्त्वनिवेशिनी हि संख्या भवति। न च प्रायणीयेऽभ्यस्यमाने पृथक्त्वनिवेशित्वसम्भवः। तस्मादेतदप्यनुपपन्नमेव। पितृभूतिराचार्यस्तु सूत्रमन्यथा व्याचष्टे—"द्वादशाहाद्यं वा तत्प्रकृतेः" इति। द्वादशाहाद्यं प्रवृत्तिधर्माणां विजानीयात्, यः सत्रेषु प्रवर्त्तते इति। कश्चासौ? दशरात्रः। स हि सर्वसत्रेषु प्रवृत्तिधर्म इति। एतदपि नोपपद्यते। न हि दाशरात्रिकेष्वन्वयप्राप्तेष्वहःसु संस्थान्यत्वं शतसंख्याविधानं चोपपद्यते, वाक्यभेदप्रसङ्गात्। अत्रापि च पृथक्त्वनिवेशिन्येव संख्या भवति, दशरात्राभ्यासात्। तस्मादेतदप्यसदेव। अत्र वदामः—द्वादशाह आद्यो मूलभूतो यस्य शतातिरात्रस्य तद् द्वादशाहाद्यं शतातिरात्रम्। द्वादशाहमूलमित्यर्थः। कुत एतत्? तत्प्रकृतेः। 'द्वादशाहो हि प्रकृतिः सर्वसत्राणाम्' इत्युक्तमेव। अपि च यत्राहर्विशेषो नाम्नायते तत्र दशरात्रप्रवृत्तिर्भवति। इह संख्याविशिष्टानामतिरात्रसंस्थानामहर्विशेषाणामाम्नानाद्दशरात्रप्रवृत्तिर्न युक्ता इति। तस्मादियमेव व्याख्या—"द्वादशाह आद्यः प्रकृतिभूतो यस्य शतातिरात्रस्य तद्द्वादशाहाद्यं शतातिरात्रम्" इति बहुव्रीहिः ॥ ३४ ॥

## शताग्निष्टोमे शतोक्थ्ये च ॥ ३५ ॥

एष एव न्यायः ॥ ३५ ॥

शतातिरात्र एव कर्म विचारयति—

## आश्विनस्याग्नेयान्ते प्रतिप्रस्थाता व्युत्क्रामतादि कृत्वा मैत्रावरुणाय प्रातरनुवाकमुपाकृत्यान्तर्यामं हुत्वा प्रपीड्य पवित्रं द्रोणकलशे निदधाति ॥ ३६ ॥

आश्विनस्य सशस्त्रस्य आग्नेयसूक्तान्ते प्रतिप्रस्थाता व्युत्क्रामतादि कृत्वा मैत्रावरुणाय प्रातरनुवाकमुपाकरोति। अन्तर्यामं हुत्वा प्रपीड्य पवित्रं द्रोणकलशे स्थापयति ॥ ३६ ॥

सशेषं होतृचमसम् ॥ ३७ ॥

स्थापयति ॥ ३७ ॥

ततः—

तिरोऽह्न्यादि करोति पूर्वस्याह्नः ॥ ३८ ॥

इति चतुर्विंशेऽध्याये तृतीया कण्डिका ॥



४

ग्रहग्रहणाधा विप्रुड्ढोमात्कृत्वा—

सवनसन्तनिं जुहोत्यग्निः प्रातः सवन इति ॥ १ ॥

ऐन्द्रवायवग्रहणमाविप्रुड्ढोमात्कृत्वा सवनसन्तनिसंज्ञकं होमं करोति "अग्निः प्रातः सवन" ( का० श्रौ० ९।३।१८ ) इत्यनेन मन्त्रेण ॥ १ ॥

संवत्सरप्रभृतीनि गवामयनप्रकृतीनि तद्गुणदर्शनात् ॥ २ ॥

संवत्सरप्रभृतीनि यानि सत्राणि तानि गवामयनप्रकृतीनि भवन्ति संवत्सरसामान्यात्, तद्गुणदर्शनाच्च। दृश्यन्ते हि तेषु गवामयनिका गुणाः, "अथ यत्पृष्ठ्यं षडहमुपयन्ति" "अथ यदभिप्लवं षडहमुपयन्ति" ( श० ब्रा० १२।१।३।११।१० ) इति ॥ २ ॥

आदित्यानामयनेऽभिप्लवास्त्रिवृत्पञ्चदशस्तोमाः ॥ ३ ॥

'आदित्यानामयनम्' इति संज्ञा सत्रस्य। तत्राभिप्लवास्त्रिवृत्पञ्चदशस्तोमा भवन्ति ॥ ३ ॥

मासाः पृष्ठ्यमध्याः ॥ ४ ॥

गवामयने हि पृष्ठ्यान्ता मासाः, इह पृष्ठ्यमध्या भवन्ति ॥ ४ ॥

बृहस्पतिसवोऽभिजित्स्थाने ॥ ५ ॥

भवति ॥ ५ ॥

**इन्द्रस्तोमो विश्वजितः ॥ ६ ॥**

स्थाने भवति ॥ ६ ॥

**विश्वजितः परे ये त्रयोऽभिप्लवास्तेषामुत्तरयोः स्थाने त्रिवृतोऽग्निष्टोमा दश ॥ ७ ॥**

भवन्ति ॥ ७ ॥

**उद्भिद्बलभिदौ च ॥ ८ ॥**

**षष्ठमासादौ मध्यमस्थाने पृष्ठ्यः ॥ ९ ॥**

षष्ठस्य मासस्य आदौ मध्यमस्याभिप्लवस्य स्थाने पृष्ठ्यो भवति ॥ ९ ॥

**दशरात्रस्य छन्दोमदशाहः ॥ १० ॥**

दशरात्रस्य स्थाने छन्दोमदशाहो भवति ॥ १० ॥

**अङ्गिरसामयनमादित्यानामयनवत् ॥ ११ ॥**

'अङ्गिरसामयनम्' इति सत्रसंज्ञा। तदादित्यानामयनवद्भवति ॥ ११ ॥

विशेषमाह—

**अभिप्लवास्त्रिवृतः ॥ १२ ॥**

त्रिवृतोमका अभिप्लवा भवन्ति ॥ १२ ॥

**मासाः पृष्ठ्यादयः पूर्वपक्षे ॥ १३ ॥**

**प्रतिलोमाः परे ॥ १४ ॥**

भवन्ति ॥ १४ ॥

**योऽभिप्लवमध्ये पृष्ठ्य उत्तमः सः ॥ १५ ॥**

भवति ॥ १५ ॥

**गो आयुषी प्रतिलोमे ॥ १६ ॥**

भवतः ॥ १६ ॥

**छन्दोमदशाहश्च ॥ १७ ॥**

प्रतिलोम एव ॥ १७ ॥

## दृतिवातवतोरयनमेकैकेन पृष्ठ्यस्तोमेन मासं मासम्॥१८॥

दृतिवातवतोरयनमिति सत्रस्य संज्ञा। तत्रैकैकेन पृष्ठ्यस्तोमेन मासं मासं नयेत् पृष्ठ्यस्तोमाश्च त्रिवृदादयः। एवं ह्यत्र श्रूयते—"त्रिवृता मासं पञ्चदशेन मासं सप्तदशेन मासमेकविंशेन मासं त्रिणवेन मासं त्रयस्त्रिंशेन मासम्" (ताण्ड्य० २५।३) इति। अतस्त्रिवृदादिभिरेकाहैर्मासं मासं नयेदिति॥ १८॥

तदुक्तमाचार्येण—

## (१)एकाहास्तच्छब्दात्॥ १९॥

इति। तेषां शब्दस्तच्छब्दः सत्राभिधायके उपलभ्यते। पृष्ठ्यस्तोमशब्दोऽपि च एकाहानामेव वाचक उपलभ्यते - पृष्ठ्यस्तोमशब्दास्त्रिवृदादयः। ननु च स्तोमेष्वपि दृश्यते पृष्ठ्यस्य षडहस्य स्तोमाः पृष्ठ्यस्तोमा इति स्तोमेष्वपि भवति। नैतदेवम्, पृष्ठ्यस्तोमशब्दः प्रत्यस्तमितावयवार्थवृत्तितयाऽश्वकर्णादिवदेकाहानां वाचक इति। स्तोमेषु पुनः षष्ठीं कल्पयित्वा समासलक्षणेन तल्लोपेन च स्तोमेन प्रवृत्तिः। न च तन्न्याय्यम्। तस्मात्पृष्ठ्यस्तोमशब्द एकहानां वाचक इति॥ १९॥

एवं प्राप्ते आह—

## नानाऽहानि(२) वा सङ्घातशब्दात्॥ २०॥

'वा' शब्दः पक्षव्यावृत्तौ। नानाऽहानि वा यान्यन्वयप्राप्तानि तेषु स्तोमविधानं, त्रिवृता स्तोमेन मासं पञ्चदशस्तोमेन मासमित्येवमादि। कुत एतत्? सङ्घातशब्दो यत्र भवति तत्रैकाहवचने त्रिवृद्भवति स च मासमिति वाक्यं भिद्यते। अथ पुनर्यो मासः स त्रिवृता स्तोमेन इति नैष दोषो भवति॥ २०॥

## मध्ये व्रतम्॥ २१॥

विषुवत्स्थाने व्रतं भवति॥ २१॥

## उत्तरपक्षं प्रतिलोमम्॥ २२॥

उत्तरपक्षः पूर्वपक्षात् प्रातिलोम्येन॥ २२॥

## कुण्डपायिनामयनं पौर्णमासीदीक्षम्॥ २३॥

'कुण्डपायिनामयनम्' इति सत्रस्य संज्ञा। तस्य पौर्णमास्यां दीक्षा भवति॥२३॥

---

१. पूर्वपक्षोऽयम्।

२. सिद्धान्त पक्षः।

## चतुर्थ्यां वाऽपरपक्षस्य ॥ २४ ॥

इति विकल्पः ॥ २४ ॥

## मासं दीक्षाः ॥ २५ ॥

तस्य भवन्ति ॥ २५ ॥

## सोममुपनह्य सुत्यास्थानेषु मासमग्निहोत्रं जुह्वति ॥ २६ ॥

सोमोपनहनं कृत्वा यानि सुत्यास्थानानि तेष्वग्निहोत्रहोमः। अग्निहोत्रं च सायारम्भं प्रातरपवर्गम्। तत्र द्वावपि होमौ फलैक्यात्तन्त्रेणोपक्रमितव्यौ। प्रधानस्य तु भेदः। चतुर्गृहीतेनाग्नेयीं सायमाहुतिं हुत्वा पुनश्चतुर्गृहीतेन सौरीमाहुतिं जुहोति। तन्त्रेणोत्तरां जुहोति। गार्हपत्यकार्यं तत्र प्राजहित एव न शालाद्वार्ये। ज्योतिष्टोमे हि तत् श्रुतं, न चाग्निहोत्रं ज्योतिष्टोमो न च तदङ्गमिति। आहवनीयस्त्वतिप्रणीत एव ।२६।

## दर्शपूर्णमासाभ्यां मासम् ॥ २७ ॥

नयेयुः ॥ २७ ॥

## पक्षादौ यद्यद्धविस्तत्सर्वस्मिन् ॥ २८ ॥

पक्षस्यादौ यद्धविस्तत्सर्वस्मिन् पक्षे कर्तव्यम्, अभिप्रवृत्तत्वात् ॥ २८ ॥

## सारस्वते च प्रथमे ॥ २९ ॥

एवमेव ॥ २९ ॥

## तन्त्रेण वा समस्तचोदितत्वात् ॥ ३० ॥

'वा' शब्दः पक्षव्यावृत्तौ। तन्त्रेणैव दर्शपूर्णमासौ कर्तव्यौ। समस्तयोर्हि चोदना दर्शपूर्णमासाभ्यां मासमिति। न ह्यत्र कालो भेदकः, तस्मादग्निहोत्रवदत्रापि तन्त्रमेव ॥ ३० ॥

## अग्निहोत्रं च ॥ ३१ ॥

अस्य सूत्रस्य पूर्वमेवाभिहितो न्यायः ॥ ३१ ॥

## पृथङ्मासाश्चातुर्मास्यपर्वभिः ॥ ३२ ॥

नीयन्ते। "वैश्वदेवेन मासं वरुणप्रघासैर्मासं साकमेधैर्मासं शुनासीरीयेण मासम्" ( ताण्ड्य० २५-४ ) इति श्रुतेः ॥ ३२ ॥

## साकमेधा दर्शपूर्णमासवत् ॥ ३३ ॥

तन्त्रेणेत्युक्तो न्यायः ॥ ३३ ॥

## सोमा वा सामान्यात् ॥ ३४ ॥

सोमा वा एते भवन्त्यग्निहोत्रादयः। कुत एतत्? सामान्यात्। सत्रं हि सोमयागैः पूर्यते। अथवा सामान्यादिति समानशब्दः अग्निहोत्रादिषु प्रतिकर्म सोमेषु ।३४।

## न जुहोतिशब्दात् ॥ ३५ ॥

नैतदेवं सोमा एत इति। कुत एतत्? जुहोतिशब्दात्। मासमग्निहोत्रं जुहोतीति जुहोतिशब्दोऽत्र भवति। न चासौ सोमयागेषु प्रसिद्धः, तस्मान्न सोमा इति ॥ ३५ ॥

## काममितरे ॥ ३६ ॥

इतरे तर्हि दर्शपूर्णमासादयो भवन्तु सोमाः। न हि तत्र जुहोति शब्द इति। नेत्युच्यते—दर्शपूर्णमासादयः शब्दा निरुपपदा एव दर्शपूर्णमासादीन् प्रत्याययन्ति, सोपपदाः सोमान्। निरुपपदाश्चैते मासं दर्शपूर्णमासाभ्यामिति। तस्माद्दर्शपूर्णमासादयोऽपि न सोमा एते ॥ ३६ ॥

## दृतिवातवतोरयनपूर्वपक्षेण षण्मासान् ॥ ३७ ॥

दृतिवातवतोरयनस्य पूर्वपक्षेण षण्मासान्नयेयुः ॥ ३७ ॥

## उत्तमे त्रयोऽभिप्लवा दशरात्रो महाव्रतम् ॥ ३८ ॥

उत्तमे मासे त्रयोऽभिप्लवा दशरात्रो महाव्रतं भवति ॥ ३८ ॥

## उपरिष्टादतिरात्रं भवति ॥ ३९ ॥

अनुग्रहश्रुतेः। यदन्यतरतोऽतिरात्रस्तेनाहीन इति ॥ ३९ ॥

## उभयतो वा ॥ ४० ॥

अतिरात्रो भवति सत्रत्वात्। अनुग्रहश्रुतिस्तु अहीनत्वेन संस्तौति तत्कथम्? हविर्यज्ञैर्व्यवहितत्वात् ॥ ४० ॥

## हविर्यज्ञेभ्योऽतिरात्रमेके सोमानन्तर्यात् ॥४१॥

हविर्यज्ञेभ्योऽवसितेभ्य एके प्रायणीयमतिरात्रमिच्छन्ति। एवं सोमानन्तर्यं भवति। एके तन्नेच्छन्ति। अग्नीषोमीयोत्तरकालता हि तस्य प्रकृतौ दृष्टा। इहापि तद्वदेव। तस्मात्प्रागेव हविर्यज्ञेभ्यः प्रायणीयः ॥ ४१ ॥

**अत्सरुकाः कुण्डप्रतिरूपाश्चमसाः ॥ ४२ ॥**

अत्सरुका अवृन्तकाः कुण्डप्रतिरूपा वृत्ताकाराः ॥ ४२ ॥

**पञ्चर्त्विजस्त्रीणि त्रीणि कर्माणि कुर्युः ॥ ४३ ॥**

तान्याह—

**होताध्वर्यवपोत्रीये च ॥ ४४ ॥**

'च' शब्दाद्धौत्रं च ॥ ४४ ॥

**उद्गाता नेष्टृच्छावाकीये ॥ ४५ ॥**

**मैत्रावरुणो ब्रह्मत्वप्रातिहर्त्रे ॥ ४६ ॥**

**प्रस्तोता ब्राह्मणाच्छꣳसिग्रावस्तोत्रीये ॥ ४७ ॥**

**प्रतिप्रस्थाताग्नीध्रोन्नेत्रे ॥ ४८ ॥**

'होताध्वर्यवपोत्रीये च' इति 'च'कारः सर्वत्रानुवर्तते ॥ ४८ ॥

**मुख्यासनेभ्योऽनुसꣳसर्पमितराणि ॥ ४९ ॥**

आसनशब्दः स्थानवाची मुख्यस्थानेभ्यः अनु सृप्त्वा सृप्त्वा परकीयानि कर्माणि कुर्युः । स्वकर्मकर्तृत्वस्य चरितार्थत्वात् ॥ ४९ ॥

**सर्पसत्रं व्यत्यासं विराट् कौसुरुबिन्दद्वितीयं च ॥ ५० ॥**

'सर्पसत्रम्' इति नाम । तत्राहान्याह—विराडेकाहः । कौसुरुबिन्दस्य च द्वितीयमहः, वचनसामर्थ्यात् ॥ ५० ॥

**गवामयनं वाभिगरश्रुतेः ॥ ५१ ॥**

गवामयनमेव वा भवति । कुत एतत् ? अभिगरश्रवणात् । "षण्ड्कुषण्डावभिगरापगरौ" ( ताण्ड्य० २५-१२ ) इति श्रवणात् । अभिगरापगरौ च गवामयने दृष्टौ । तेन गवामयनं भवति । अत्र वाशब्दं विकल्पार्थमेक इच्छन्ति । न चैतद् युक्तम् । अभिगरापगरौ हि लिङ्गमात्रम्, "विराट्कौसुरुबिन्दद्वितीयम्" इति वचनात् । तस्मात्तदेव युक्तरूपमिति । लिङ्गं तु संस्तवार्थं भविष्यति ॥ ५१ ॥

इति चतुर्विंशेऽध्याये चतुर्थी कण्डिका ॥



५

तापश्चितं दीक्षाः संवत्सरमुपसदश्च तथा सुत्याः ॥ १ ॥

'तापश्चितम्' इति सत्रनाम। तत्र दीक्षाः संवत्सरं भवन्ति। उपसदः सुत्याश्च॥१॥

इदानीमहान्याह—

गवामयनेनेयुः ॥ २ ॥

गवामयनेन गच्छेयुः। गवामयनमेव कर्तव्यमित्यर्थः ॥ २ ॥

अग्निष्टोमेन वा ॥ ३ ॥

ईयुः। अपूर्वश्चायमग्निष्टोमोऽनेकाहिको न द्वादशाहिकः, संस्थानमात्रोपदेशात्॥३॥

सर्वजिदभिजिद्विश्वजितां वैकैकेन ॥ ४ ॥

सर्वजिदादय एकाहाः ॥ ४ ॥

त्रिकद्रुकैर्वा ॥ ५ ॥

एतेऽप्येकाहा एव ॥ ५ ॥

महातापश्चितं त्रिषंवत्सरोपसत्कम् ॥ ६ ॥

भवति ॥ ६ ॥

तुल्यमन्यत् ॥ ७ ॥

तापश्चितेनैव ॥ ७ ॥

क्षुल्लकतापश्चिते चतुर्मासशो दीक्षोपसत्सुत्यानि ॥ ८ ॥

भवन्ति ॥ ८ ॥

विषुवन्तमभितो गवामयनपक्षयोः प्रथमोत्तमौ प्रथमोत्तमौ॥

मासौ भवतः ॥ ९ ॥

सहस्रसाव्यमग्नेः ॥ १० ॥

सहस्रसाव्यं नामाग्नेः सत्रम् ॥ १० ॥

अभिप्लवानां चतुःषष्टिः शतं चतुरहश्च ॥ ११ ॥

त्रिषंवत्सरं षष्टिदीक्षम् ॥ १२ ॥

त्रिसंवत्सरं सत्रम् । तच्च षष्टिदीक्षं भवति ॥ १२ ॥

यथाशक्ति वा ॥ १३ ॥

दीक्षा भवन्ति ॥ १३ ॥

आदितस्त्रयः संवत्सराः सौत्याः ॥ १४ ॥

गवामयनादयो भवन्ति ॥ १४ ॥

महासत्राण्यतः ॥ १५ ॥

अतः परं महासत्राणि व्याख्यायन्ते । महासत्रग्रहणं तुल्यधर्मप्रज्ञापनार्थम् ॥१५॥

चतुर्भागं चतुर्भागमेकैकस्य ज्योतिष्टोमिकैः स्तोमैः ॥१६॥

नयेयुः ॥ १६ ॥

तेष्वतिरात्रविषुवन्तः स्युर्वा न वा ॥ १७ ॥

तेषु महसत्रेषु अतिरात्रविषुवन्तो भवेयुर्वा न वा भवेयुः। भवेयुरिति। कुत एतत् ? प्रतिसंवत्सरमादिमध्यावसानेष्वतिरात्रविषुवतां दृष्टत्वाद्भवेयुरिति गम्यते। यद्येवं न भवेयुः। कथम् ? सत्रसंयोगेन ह्यतिरात्रश्रवणात्। "उभयतोऽतिरात्रं सत्रम्" (का० श्रौ० १२।१।७) इति। न सम्वत्सरसंयोगेन। अतो न प्रतिसम्वत्सरमतिरात्रौ ॥१७॥

एवं सत्युपसंहरत्याचार्यः—

आद्यन्तयोर्वातिरात्रौ विषुवांश्च मध्ये मध्ये ॥ १८ ॥

'वा'शब्दोऽवधारणार्थः। आद्यन्तयोरेवातिरात्रौ भवतः सत्रस्यैकत्वात्। विषुवांश्च प्रतिसंवत्सरं मध्ये मध्ये, संवत्सरसंयोगेन तस्य श्रुतत्वात् ॥ १८ ॥

द्वादशसंवत्सरं प्रजापतेः ॥ १९ ॥

प्रजापतिसत्रमिति संज्ञा ॥ १९ ॥

षट्त्रिंशत्संवत्सरं शाक्यानां तरसमयाः पुरोडाशाः ॥२०॥

शाक्यानामयनमिति सत्रस्य सञ्ज्ञा। तत्षट्त्रिंशत्संवत्सरं भवति। तत्र तरसमयाः पुरोडाशा भवन्ति। मांसमया इत्यर्थः ॥ २० ॥

सर्वत्राविशेषात् ॥ २१ ॥

सर्वत्र सत्रे तरसमयाः पुरोडाशा भवन्ति। अविशेषश्रुतेः ॥ २१ ॥

## सवनीया वा बहुश्रुतेः ॥ २२ ॥

'वा'शब्दः पक्षव्यावृत्तौ । सवनीया एव तरसमया भवन्ति । कुत एतत् ? बहुत्वश्रुतेः "तरसमयाः पुरोडाशा भवन्ति" इति । बहुत्वप्रयुक्तानां हि तरसविधानम् ॥२२॥

## शतसंवत्सरः साध्यानाम् ॥ २३ ॥

साध्यानामयनं सत्रम् । तच्छतसंवत्सरं भवति ॥ २३ ॥

## सहस्रसंवत्सरं विश्वसृजाम् ॥ २४ ॥

'विश्वसृजामयनम्' इति सत्रस्य संज्ञा । तत्सहस्रसंवत्सरं भवति ॥ २४ ॥

## यात्सत्राणि सारस्वतानि ॥ २५ ॥

यात्वा यात्वा क्रियन्त इति यात्सत्राणीत्येके । तदनुपपन्नम्, गमनस्य स्वशब्दाभिहितत्वात् । तस्मात् यात्सत्राणि सारस्वतसत्राणीत्युभे अपि च संज्ञे एते ॥ २५ ॥

## सदोहविर्धानाग्नीध्राणि चक्रीवन्ति ॥ २६ ॥

भवन्ति । अन्यथा गमनासम्भवात् ॥ २६ ॥

## उलूखलबुध्नो यूपः प्रकृष्यः ॥ २७ ॥

उलूखलमिव बुध्नो यूपस्य भवति । स च प्रकृष्यते न निखन्यते ॥ २७ ॥

## वत्सतरीशतमृषभाधिकं गर्भिणीनामुत्सृजन्ति सहस्रपूरणाय ॥

सहस्रपूरणेन हि सत्रस्य परिसमाप्तिः ॥ २८ ॥

## उपकिरन्त्युपरवस्थानेषु न खनन्ति ॥ २९ ॥

उपकिरणं च मृदः ॥ २९ ॥

## शुक्लपक्षसप्तम्यां दीक्षा सरस्वतीविनशने ॥ ३० ॥

(१) सरस्वतीविनशनप्रदेशे ॥ ३० ॥

---

१, चैत्रस्य शुक्लपक्षे सप्तम्यां तिथौ सरस्वतीविनशने सरस्वतीसमुद्रसङ्गमे प्रभासे इति देवः । यत्र सरस्वत्यन्तर्भवति तद्विनशनमित्युच्यते, अतिरात्रस्य द्वितीयायां समाप्तत्वात् ( लाट्या० १०।१५।१ ) इत्यग्निस्वामिनः । सरस्वती नाम महानदी प्रत्यक्स्रोता प्रवहति तस्याः प्रागपरौ भागौ सर्वलोकप्रत्यक्षौ मध्यमस्तु भागो भूम्यामन्तर्निमग्नः प्रवहति, नासौ केनापि दृश्यते तद्विनशनमिति माधवाचार्या धन्विभाष्यकाराश्च । यत्र सरस्वत्यन्तर्हिता तद्विनशनमिति जयस्वामिनः ।

द्वादशाहवद्दीक्षोपसदः ॥ ३१ ॥

अत्रैकाहिकान्यहानि तत्र द्वादशाहवदप्राप्तौ सत्यां द्वादशाहवदित्युच्यते ॥ ३१ ॥

अषोडशिकावतिरात्रौ ॥ ३२ ॥

भवतः ॥ ३२ ॥

तत्रैव प्रायणीयोऽतिरात्रः ॥ ३३ ॥

भवति । सरस्वतीविनशने ॥ ३३ ॥

सान्नाय्यञ्च तस्मिन् ॥ ३४ ॥

"पक्षादौ यद्यद्धविस्तत्सर्वस्मिन्" "सारस्वते च प्रथमे" (का० श्रौ० २४।४।२८,२९) इत्युक्तम्, तेन सान्नाय्यमत्र प्राप्नोति । अत उच्यते सान्नाय्यं च तस्मिन्निति ॥ ३४ ॥

सꣳस्थितेऽध्वर्युराहवनीयसमीपे स्थित्वाभ्यध्वꣳ शम्यां प्रास्यति तद्गार्हपत्यस्थानम् ॥ ३५ ॥

यथोक्तमाहवनीयस्य ॥ ३६ ॥

इति चतुर्विंशेऽध्याये पञ्चमी कण्डिका ॥

६

यथास्थितं यज्ञाङ्गानि हरन्ति ॥ १ ॥

येषु स्थानेषु स्थितानि तत्समवेतान्येव हरन्ति ॥ १ ॥

पाꣳसूनादाय भौमानां यथादेशं निवपन्ति ॥ २ ॥

भौमानामङ्गानां पांसून्गृहीत्वा यथाप्रदेशं न्युप्यम् ॥ २ ॥

यजनीययोरह्नोर्गो आयुषी ॥ ३ ॥

भवतः ॥ ३ ॥

पर्वान्तरेषु दर्शपूर्णमासौ ॥ ४ ॥

प्रथमे पर्वान्तरे दर्शः । द्वितीये पौर्णमासम् । एवं व्यत्यासेन ॥ ४ ॥

शम्याप्रासे शम्याप्रासे वसन्तो यजमानाश्च यन्ति दक्षिणेन तीरेण ॥ ५ ॥

शम्याप्रास उषित्वा यागं कृत्वा ततो यन्ति दक्षिणेन तीरेण सरस्वत्याः ॥५॥

दृषद्वत्यप्यये ऽपोनप्त्रियश्चरुः ॥ ६ ॥

दृषद्वत्यप्यये प्रदेशे चरुर्भवति ॥ ६ ॥

अग्नये कामायेष्टिः प्लक्षे प्रास्रवणे ॥ ७ ॥

प्लक्षे प्रास्रवणप्रदेशे अग्नये कामायेष्टिर्भवति ॥ ७ ॥

तस्यामश्वपुरुष्यौ धेनुके दद्युः ॥ ८ ॥

इष्यते अश्वपुरुष्योर्दानं धेनुत्वे सति तदुपकाराभावात्तत्प्रसूतेश्च दानम् । दानं च प्रासर्पकेभ्यः ॥ ८ ॥

अवशिष्टं चैके यज्ञोपकरणमुदयनीयान्ते ॥ ९ ॥

यदवशिष्टं यज्ञोपकरणं तदुदयनीयान्ते ददाति । सत्रसमाप्तावित्यर्थः ॥ ९ ॥

अवभृथमभ्यवयन्ति यमुनां कारपचवं प्रति ॥ १० ॥

कारपचवप्रदेशं प्रति यमुनामवभृथमभ्यवयन्ति । अनेन चावभृथग्रहणेन सत्रसमाप्तिर्लक्ष्यते ॥ १० ॥

पुरस्ताद्वावभृथादग्नये कामाय ॥ ११ ॥

इष्टिर्भवति ॥ ११ ॥

उदवसानीयान्ते वा ॥ १२ ॥

'वा' इति विकल्पः ॥ १२ ॥

यथार्थं विप्रव्रजेयुः ॥ १३ ॥

अपृष्ठशमनानि सारस्वतानि ॥ १४ ॥

अपृष्ठशमनानि हि सारस्वतसत्राणि श्रूयन्ते ॥ १४ ॥

त्रीण्येषां साम्युत्थानान्यतिरात्रैः ॥ १५ ॥

एषां सारस्वतसत्राणां मध्ये साम्युत्यत्थानानि त्रीणि भवन्ति ॥ १५ ॥

सहस्रपूरणगृहपतिमरणसर्वज्यान्यः(१) ॥ १६ ॥

प्रथमं साम्युत्थानं गवां सहस्रपूरणे। द्वितीयं गृहपतिमरणे। तृतीयं सर्वज्यान्याम्। सर्वज्यानिश्च सर्वहानिरुच्यते ॥ १६ ॥

सहस्रपूरणे गौः ॥ १७ ॥

गौरतिरात्रो भवति ॥ १७ ॥

तदेव दत्त्वा ॥ १८ ॥

तदेव सहस्रं दत्त्वा साम्युत्तिष्ठेरन् ॥ १८ ॥

आयुर्गृहपतिमरणे ॥ १६ ॥

अतिरात्रो भवति ॥ १९ ॥

सर्वज्यान्यां विश्वजित् ॥ २० ॥

अतिरात्रः कर्तव्यः ॥ २० ॥

ज्योतिष्टोमो वा सर्वेषाम् ॥ २१ ॥

भवति ॥ २१ ॥

नावभृथः सरस्वत्याम् ॥ २२ ॥

सरस्वत्यामवभृथं न भवति ॥ २२ ॥

परिपार्श्वेषूदकेषु(२) ॥ २३ ॥

कर्तव्यः ॥ २३ ॥

असत्सूद्धृत्य ततः ॥ २४ ॥

यदि नाम न सन्ति ततः सरस्वत्या एवोदकमुद्धृत्यावभृथः कार्यः ॥ २४ ॥

---

१. पूर्वं सत्रारम्भकाले यद्वत्सतरीणां गर्भिणीनां शतमृषभेणाधिकं सहस्रपूरणार्थमुत्सृष्टमभूत् ( कां० श्रौ० २४।५।२८ ) तत्र यदा तासां तत्प्रसूतानां च प्रसवैः गवां सहस्रस्य पूरणं भवति, यदा गृहपतेर्मरणं भवति, यदा सर्वासां गवां हानिः सर्वज्यानिर्भवति। एतानि त्रीणि एषां दीक्षितानां साम्युत्थानानि अर्धसमाप्तसत्रपरित्यागकारणानि। तत्रातिरात्रैर्वक्ष्यमाणैर्गवादिभिरिष्ट्वा साम्युत्थानं कुर्युः। प्लक्षप्रास्रवणात्प्रागेव, समापनं कुर्युः।

२. यदि सरस्वत्यामवभृथकरणप्रतिषेधस्तदा सरस्वतीपरिपार्श्ववर्तिषु नदीतडागादिषु अवभृथं कुर्युरित्यर्थः।

**द्वितीये दृतिवातवतोरयनस्याहनी त्रिवृत्पञ्चदशस्तोमे पर्वान्तरेषु व्यत्यासम् ॥ २५ ॥**

द्वितीये सारस्वते सत्रे दृतिवातवतोरयनस्य ये त्रिवृत्पञ्चदशस्तोमे अहनी, ते पर्वान्तरेषु व्यत्यासेन क्रियेते ॥ २५ ॥

**तयोश्चेदसमाप्तयोरागच्छेद्यजनीयकालस्तमुपेत्य शेषमनुसमापयेयुः ॥ २६ ॥**

तयोस्त्रिवृत्पञ्चदशस्तोमयोरसमाप्तयोर्यद्यागच्छेद्यजनीयकालस्तं यजनीयकालीनं परिसमाप्य शेषं परिसमापयेयुः ॥ २६ ॥

**शुक्लपक्षश्चेत्त्रिवृदग्निष्टोम इत्येके ॥ २७ ॥**

एके शेषपरिसमाप्तिमिच्छन्ति ॥ २७ ॥

**पञ्चदशउक्थ्यः कृष्णे ॥ २८ ॥**

'भवति' इत्येके ॥ २८ ॥

**तृतीये यजनीययोरह्नोरभिजिद्विश्वजितौ ॥ २९ ॥**

भवतः ॥ २९ ॥

**पर्वान्तरेषु त्रिकद्रुकाः ॥ ३० ॥**

भवन्ति ॥ ३० ॥

**पूर्ववदनुसमापनम् ॥ ३१ ॥**

भवति ॥ ३१ ॥

**दार्षद्वतमृत्विगाचार्ययोरन्यतरस्य गा रक्षेत्संवत्सरम् ॥ ३२ ॥**

'दार्षद्वतम्' इति सत्रनामधेयम्। तत्र कर्म व्याख्यायते। ऋत्विगाचार्ययोरन्यतरस्य गा रक्षेत्संवत्सरं गवा रक्षणम् ॥ ३२ ॥

**अपरं व्यर्णे नैतन्धवेऽग्निमिन्धीत ॥ ३३ ॥**

अपरं संवत्सरं नैतन्धवप्रदेशे विगतोदकेऽग्नीन्धनं कुर्यात् ॥ ३३ ॥

**कुरुक्षेत्रे परिणहि स्थलेऽग्न्याधेयमन्वारम्भणीयान्तं भवति ॥**

अन्वारम्भणीयान्तमिति । कुत एतत् ? इष्ट्यङ्गत्वादन्वारम्भणीयायाः ॥ ३४ ॥

दर्शपूर्णमासान्तं वा ॥ ३५ ॥

'वा' शब्दः पक्षव्यावृत्तौ । दर्शपूर्णमासान्तमेव भवति नान्वारम्भणीयान्तम् । दर्शपूर्णमासस्य ह्यीष्ट्यन्तरे प्रवृत्तिर्न्याय्येति ॥ ३५ ॥

आहिताग्निश्चेद् व्यर्णेऽग्निहोत्रमेव जुहुयात् ॥ ३६ ॥

संवत्सरम् ॥ ३६ ॥

पुरोडाशोऽग्नये तेन यजमानः पूर्ववत् ॥ ३७ ॥

तेन यागं कुर्वन् पूर्ववच्छम्याप्रासे दृषद्वतीतीरेण दक्षिणेन गच्छेत् ॥ ३७ ॥

एत्य च दृषद्वतीतीरेण ॥ ३८ ॥

तद्वदेव ॥ ३८ ॥

अवभृथमभ्यवयन्ति यमुनां त्रिप्लक्षावहरणं प्रति ॥३९॥

त्रिप्लक्षावहरणस्यार्जव्येन यमुनामवभृथमभ्युपैति ॥ ३९ ॥

तत्र च—

स्वयमेव सामगानम् ॥ ४० ॥

भवति ॥ ४० ॥

आप्लवनमात्रं वा ॥ ४१ ॥

भवति, नावभृथः । 'वा' शब्दो विकल्पार्थः ॥ ४१ ॥

उदेत्यैतयैवेष्ट्या यजेत ॥ ४२ ॥

परिसमाप्य सत्रमेतयैवेष्ट्या यजेत ॥ ४२ ॥

पशुना वा तद्देवतेन ॥ ४३ ॥

यजेत ॥ ४३ ॥

अग्निष्टोमेन वा ॥ ४४ ॥

'यजेत' इति ॥ ४४ ॥

इति चतुर्विंशेऽध्याये षष्ठी कण्डिका ॥

७

तुरायणं वैशाखीशुक्लस्य पञ्चम्याम् ॥ १ ॥

'तुरायणम्' इति सत्रनाम ॥ १ ॥

चैत्रस्य वा ॥ २ ॥

शुक्लपञ्चम्यां भवति ॥ २ ॥

प्रातराहुत्यन्तेऽदीक्षितो दीक्षारूपाण्यासजते तूष्णीं कृष्णाजिनादीनि ॥ ३ ॥

स्वयमेव ॥ ३ ॥

हवीꣳषि निर्वपत्याग्नेयमैन्द्रं वैश्वदेवं चरुꣳ सवनकालेष्वेकैकम् ॥ ४ ॥

कुत एतत् ? आग्नेयं प्रातस्सवनम्, ऐन्द्रं माध्यन्दिनम, वैश्वदेवं तृतीयसवनमित्यर्थवादात् ॥ ४ ॥

तन्त्रेण वा ॥ ५ ॥

'वा' शब्दः पक्षव्यावृत्तौ । तन्त्रेण वा करोति न सवनकालेषु । कुत एतत ? कालैक्यात् । तस्मात् तन्त्रेणैव ॥ ५ ॥

अन्वहम् ॥ ६ ॥

हवीꣳषि निर्वपति ॥ ६ ॥

वा हविःशेषभक्षः ॥ ७ ॥

'वा' प्राकृताशनः ॥ ७ ॥

संवत्सरं यजते ॥ ८ ॥

अत्राधस्तनसूत्रे वा शब्दमन्यथा वर्णयन्ति । संवत्सरं यजनीयेषु यागपरिसमाप्तौ सत्यामन्वहं वेत्युच्यते । ततश्चावधारणैषा । संवत्सरशब्देन हि सर्वाण्यहानि गृह्यन्ते न यजनीयान्येव, तत्रैव प्रयोगदर्शनात् ॥ ८ ॥

अनियतोदकं दार्षद्वतवदवभृथादि ॥ ९ ॥

अनियतोदकोऽवभृथः कार्यः । आदिग्रहणाच्च "उदेत्यैतयैवेष्ट्या यजेत" ( का० श्रौ० २४।६।४२ ) इत्येवमादि लभ्यते ॥ ९ ॥

द्वादशाहविकल्पाः ॥ १० ॥

'व्याख्यायन्ते' इति सूत्रशेषः ॥ १० ॥

सर्वाग्निष्टोमो भरतद्वादशाहः ॥ ११ ॥

भरतद्वादशाहे सर्व एवाग्निष्टोमा भवन्ति, प्रायणीयोदयनीयवर्जम् ॥ ११ ॥

सङ्क्रमद्वादशाहे दशरात्रस्य त्र्यहप्रथमानि प्रथमस्त्र्यहस्त्र्यह-द्वितीयानि द्वितीयस्त्र्यहस्त्र्यहतृतीयानि तृतीयस्त्र्यहः ॥

भवति ॥ १२ ॥

प्रकृत्या दशमम् ॥ १३ ॥

अविकृतरूपमेव दशमं भवति ॥ १३ ॥

अग्निष्टुदिन्द्रस्तुत्सूर्यस्तुद्वैश्वदेवस्तुतां वैकैकेन ॥ १४ ॥

दशरात्रस्य पूरणम् ॥ १४ ॥

त्रिकद्रुकैर्वा ॥ १५ ॥

अहीनैकाहानां वैकैकेन ॥ १६ ॥

अप्तोर्यामराजसूयवर्जम् ॥ १७ ॥

गोआयुर्भ्यां वा ॥ १८ ॥

सर्व एवैते विकल्पाः ॥ १८ ॥

अभ्यासानुपपत्तौ ज्योतिष्टोमः पूरणः ॥ १९ ॥

भवति । तच्चैतद्पूरणपक्ष एव सम्भवति नैकाहपक्षे ॥ १९ ॥

यथोक्तस्य स्तोत्रꣳ स्तोत्रियं वर्चं वा साम वा यजुर्वाऽ-हर्वान्यत्कृत्वा यजेत ॥ २० ॥

सर्वे चैते शास्त्रार्थप्रकाराः ॥ २० ॥

व्यत्यासमन्ततः ॥ २१ ॥

स्तोत्रियादीनां व्यत्यासेनाप्यन्ततो भवति ॥ २१ ॥

नास्त्येषामन्तः ॥ २२ ॥

एषां विकल्पानामन्त एव नास्ति दिङ्मात्रं प्रदर्शितमाचार्येण ॥ २२ ॥

अयनमुत्सर्गिणां गवामयनविकल्पाः ॥ २३ ॥

गवामयनविकल्परूपमुत्सर्गिणां गवामयनमुच्यते ॥ २३ ॥

पञ्चोक्थ्यां स्त्रीनभिप्लवानुपेत्य चतुर्थं चतुरुक्थ्य-मुपयन्ति ॥ २४ ॥

इत्येको विकल्पः ॥ २४ ॥

स्तोमोत्सर्गो वैकस्याह्नः ॥ २५ ॥

एकस्मिन्नहनि स्तोम एव वा न भवति ॥ २५ ॥

पशोर्वा सवनविधिक्रिया ॥ २६ ॥

ततश्च प्रातः सवन एव परिसमाप्यते पशुः ॥ २६ ॥

अनारम्भो वा ॥ २७ ॥

पशोः ॥ २७ ॥

तापश्चितविकल्पः ॥ २८ ॥

'व्याख्यायते' इति सूत्रशेषः ॥ २८ ॥

अयमेव प्रायणीयोऽतिरात्रः सर्वꣳ सत्रꣳ स्यात् ॥ २९ ॥

यथोक्तपृष्ठः ॥ ३० ॥

अथापरम् ॥ ३१ ॥

विकल्परूपम् ॥ ३१ ॥

ज्योतिष्टोमाश्चत्वारोऽभिजित्तैः षण्मासान् ॥ ३२ ॥

नयेयुः ॥ ३२ ॥

व्रतं विषुवत्स्थाने ॥ ३३ ॥

भवति ॥ ३३ ॥

विश्वजिज्ज्योतिष्टोमाश्चत्वारस्तैरुत्तरान् ॥ ३४ ॥

षण्मासान्नयेयुः ॥ ३४ ॥

एतत्पुरुषस्य नारायणस्योत्तममेतत्पुरुषस्य नारायण-
स्योत्तमम् ॥ ३५ ॥

'नारायणसत्रम्' इत्यस्य संज्ञा ॥ ३५ ॥

इति चतुर्विंशेऽध्याये सप्तमी कण्डिका ॥

इति कर्कभाष्यसहिते कात्यायनश्रौतसूत्रे
चतुर्विंशोऽध्यायः समाप्तः ।



# पञ्चविंशोऽध्यायः

१

अथ प्रायश्चित्तानि अध्वर्युवेदविहितान्युक्तानि साङ्गानि कर्माणि, तत्सम-नन्तरमुद्गातृवेदविहितानि चोक्तानि। इदानीं तेषामेव नैमित्तिकाङ्गन्याचिख्यायेदमाह—

## कर्मोपपाते प्रायश्चित्तं (१)तत्कालम् ॥ १ ॥

कर्मण उपपातः कर्मोपपातः उपपातो विनाशो भ्रेष इत्यनर्थान्तरम्। स च चतुःप्रकारो भवति। अकरणम्, न्यूनकरणम्, अतिरिक्तकरणम्, अयथाकरणं चेति। यद्वा—एक एव प्रकारः सर्वमेवेदमयथाकरणम्, यथैतद्विहितं तथा न भवतीति। प्रायश्चित्तमिति नैमित्तिकस्य संज्ञा। तच्च तत्काले एव भवति यस्मिन्काल उपपातः। कुत एतत्? 'भिन्ने जुहोति' 'स्कन्ने जुहोति' इति निमित्तसप्तमीयं, नाधिकरण-सप्तम्येषा। अधिकरणसप्तम्यामाहवनीयापवादप्रसङ्गात्। नैमित्तिकस्य च निमित्त-कालता न्याय्येति ॥ १ ॥

एवं प्राप्त आह—

## चोदना वाऽकालशब्दात् ॥ २ ॥

'वा'शब्दः पक्षव्यावृत्तौ। नैमित्तिकस्य चोदनामात्रमेवैतत् न तत्कालता। कुत एतत्? अकालशब्दात्। न ह्यत्र कालप्रतिपादकः शब्दोऽस्ति। तेनागन्तुत्वात् अन्ते निवेशः प्राप्नोति ॥ २ ॥

एवं प्राप्त उच्यते—

## कालो वा प्रत्ययात् ॥ ३ ॥

तत्कालतैव नैमित्तिकस्य स्यात्। प्रतीयते हि निमित्तकालता नैमित्तिकस्य। प्राक् तावन्निमित्तान्नैमित्तिकं न भवति। निमित्त उपजाते नैमित्तिकं भवति। तेन तत्कालताऽस्य। तस्मात्साधूक्तं 'कर्मोपपाते प्रायश्चित्तं तत्कालम्' इति। कर्मग्रहणाच्च पुरुषसम्बन्धिन्युपपाते तत्कालता न भवति। यथा 'गेहदाहेऽग्नये क्षामवत' इति ॥३॥

---

१. प्रायो विनाशः विध्यतिक्रमजनितो दोषः। चिती संज्ञाने इत्यस्य धातोश्चित्तम् अनेकार्थत्वाद्धातोः सन्धानं चित्तमित्युच्यते। प्रायस्य चित्तं प्रायश्चित्तम्, विनष्टस्य कर्मणः सन्धानमित्यर्थः। "प्रायस्य चित्तिचित्तयोः" इति पारस्करादिगणपठितलक्षणात् सुडागमः। कर्मविनाशकाल एव कालो यस्य तत्तत्कालम्।

## महाव्याहृतिहोमोऽनादेशे ॥ ४ ॥

'भूर्भुवः स्वः' इत्येता महाव्याहृतयोऽध्येतृप्रसिद्धाः, ताभिर्होमः कर्त्तव्यः। यत्र निमित्तमुपदिश्य नैमित्तिकस्यानादेशः तत्र भवति। यत्र पुनर्निमित्तोद्देशेन नैमित्तिकादेशस्तत्र तदेव। यथा—"प्रणीता स्कन्ना अभिमृशेत्" ( का०श्रौ०२५।५।२८ ) इति। तत्र महाव्याहृतिहोमो न भवति। 'अनादेशे' इत्युक्तत्वात्॥ ४॥

व्याहृतिहोमे विशेषार्थमिदमाह—

## हौत्रिके भूरिति गार्हपत्ये ॥ ५ ॥

हौत्रिक उपपाते 'भूः'(१) इति गार्हपत्ये जुहोति। हौत्रिकं चाग्वेदिकमुच्यते॥५॥

## दक्षिणाग्नावाध्वर्यवे भुव इति ॥ ६ ॥

अध्वर्युवेदविहितोपपाते दक्षिणाग्नौ 'भुवः' इति जुहोति॥ ६॥

## आग्नीध्रीये सोमे ॥ ७ ॥

सोमे वर्त्तमाने आध्वर्यवोपपाते आग्नीध्रीये जुहोति। प्रागाग्नीध्रीयोत्पत्तेः दक्षिणाग्नावेव हूयते। यतो न हीयमाहुतिराग्नीध्रीयं प्रयोजयति स्वकालत्वात्। अस्याश्च नैमित्तिकत्वात्॥ ७॥

## स्वरित्यौद्गात्र आहवनीये ॥ ८ ॥

उद्गातृवेदविहिते भ्रेषे 'स्वः' इत्याहवनीये जुहोति। 'यद्यृक्तो भूः इति चतुर्गृहीतमाज्यं गृहीत्वा गार्हपत्ये जुहवथ' इति उपक्रम्यैवं श्रूयत इति। अत्र च ऋगादिग्रहणं वेदोपलक्षणार्थम्। उपक्रमोपसंहारयोर्हि वेदाः श्रूयन्ते। उपक्रमे तावत्—"त्रयो वेदा अजायन्ताग्नेर्ऋग्वेदो वायोर्यजुर्वेदः सूर्यात्सामवेदः स इमांस्त्रीन्वेदानभितताप तेभ्यस्तप्तेभ्यस्त्रीणि शुक्राण्यजायन्त भूः' इत्येवमादीनि। तथोपसंहारे—"तत ऋग्वेदेनैवाग्वेदं भिषज्यति यजुर्वेदेन यजुर्वेदम्" इत्येवमादि। तस्मादृगादिग्रहणं वेदोपलक्षणार्थम्। एवं ह्येकवाक्यता भवति॥ ८॥

## चतुर्गृहीतान्येतानि सर्वत्र ॥ ९ ॥

---

१. अत्र 'स्वाहा' इत्यध्याहारः "स्वाहाकारः सर्वत्र साकाङ्क्षत्वात्" ( का० श्रौ० ४।४।१५ ) इत्युक्तेः। अत्राग्निर्देवता। अयमनादिष्टहोमो यत्र कर्मणि ब्रह्मा भवति तत्र ब्रह्मणा कर्तव्यः। ब्रह्मवरणात्प्राक् निमित्ते जाते व्याहृतिहोमार्थं ब्रह्मणो वरणं समन्त्रकं कृत्वा तेन होमः कारयितव्यः। यत्र ब्रह्मा न भवति अग्निहोत्रादौ, तत्र तत्कर्त्रैव कार्यः। सोमे च कालाहुतिभिरस्य समुच्चय इति देवयाज्ञिकः।

सर्वत्र ग्रहणमविज्ञाते प्रतिमहाव्याहृतीत्येवमर्थम् । अथवा 'सर्वत्र'ग्रहणात् यत्र यत्र चतुर्गृहीतश्रुतिरस्ति तत्र सर्वत्र चतुर्गृहीतानि भवेयुः । यथा 'अनुधृताभ्यस्तमयः' इत्येवमादीनि ॥ ९ ॥

सर्वप्रायश्चित्तं च पञ्चभिः प्रत्यृचम् ॥ १० ॥

'सर्वप्रायश्चित्तम्' इति संज्ञा संव्यवहारार्था ॥ १० ॥

तदाह—

त्वन्नो अग्न इति द्वाभ्यामयाश्चाग्नेऽस्यनभिशस्तिपाश्च सत्त्वमित्त्वमयाऽअसि अया नो यज्ञँवहास्यया नो धेहि भेषजꣳ स्वाहा, ये ते शतं वरुण ये सहस्रं यज्ञियाः पाशा वितता महान्तः तेभिर्नोऽअद्य सवितोत विष्णुर्विश्वे मुञ्चन्तु मरुतः स्वर्काः स्वाहोदुत्तममिति च ॥ ११ ॥

अत्र द्वयोर्मन्त्रयोः परशाखीयत्वात्पाठः । एतत् सर्वप्रायश्चित्तं 'च' शब्दात्सर्वत्र भवति । इयांस्तु विशेषः—सकृद्गृहीतेनेति ॥ ११ ॥

अविज्ञाते प्रतिमहाव्याहृति सर्वाभिश्चतुर्थम् ॥ १२ ॥

अविज्ञातं स्मार्त्तमभिधीयते । न हि तज्ज्ञायते किमाग्वैदिकं याजुर्वैदिकं सामवेदिकमिति । अथ च दृढं स्मरणं 'शुचिना कर्म कर्तव्यम्' 'यज्ञोपवीतिना कर्त्तव्यम्' 'बद्धशिखेन' इत्येवमादि च । तदुपपाते तदपचारे प्रतिमहाव्याहृति हुत्वा सर्वाभिश्चतुर्थं होमं करोति ॥ १२ ॥

सर्वप्रायश्चित्तं च ॥ १३ ॥

अत्र भवति ॥ १३ ॥

अग्निहोत्री चेद्दुहानोपविशेद्यजुषोत्थापनमेक उदस्थाद्देव्यदितिरायुर्यज्ञपतावधादिन्द्राय कृण्वती भागं मित्राय वरुणाय चेति ॥ १४ ॥

अग्निहोत्रशब्देन तत्साधनभूतं द्रव्यमुच्यते । तद्द्रव्यं यस्यां विद्यते सेयमग्निहोत्रिणी मत्वर्थीयलोपेन अग्निहोत्रीत्युक्तं सा चेद्दुह्यमानोपविशेत् तामेके यजुषोत्थापयन्त्युदस्थादिति ॥ १४ ॥

दुग्ध्वा ब्राह्मणायैनां दद्याद्यमनभ्यागमिष्यन्तस्यात् ॥१५॥

यं प्रत्यनभ्यागमिष्यन्मन्येत यजमान इति ॥ १५ ॥

दण्डेन वानुपिष्योत्थाप्य दोहनम् ॥ १६ ॥

'वा'शब्दो विकल्पार्थः ॥ १६ ॥

अदानं च ॥ १७ ॥

तस्मिन्पक्षे ॥ १७ ॥

अदुहानायामन्याम् ॥ १८ ॥

प्राप्तमेवेदमुच्यते प्रायश्चित्तव्युदासार्थम् ॥ १८ ॥

वाश्येत चेत्तृणान्यालुप्य ग्रासयेत्सूयवसाद्भगवति हि भूया अथो वयं भगवन्तः स्याम अद्धि तृणमघ्न्ये विश्वदानीं पिब शुद्धमुदकमाचरन्तीति ॥ १९ ॥

अनेन मन्त्रेण। "यस्याग्निहोत्री दोह्यमाना वाश्येत" इत्युपक्रम्य "स्तम्बमाच्छिद्य ग्रासयेत्" ( श० ब्रा० १२।४।१।१२। ) इति श्रुतेः ॥ १९ ॥

इति पञ्चविंशेऽध्याये प्रथमा कण्डिका ।



२

तस्यै पयसा जुहोति ॥ १ ॥

षष्ठ्यर्थे चतुर्थी तस्याः पयसा जुहोतीति ॥ १ ॥

लोहितदोहे दक्षिणाग्निं परिश्रित्य व्युत्क्रामतेत्युक्त्वोष्णे भस्मनि रुद्राय हुत्वा पूर्ववद्दानम् ॥ २ ॥

लोहितदोहे दक्षिणाग्नेः परिश्रयणम्। 'व्युत्क्रामत' इति च प्रैषः। दक्षिणाग्नेरेव उष्णे भस्मनि 'रुद्राय स्वाहा' इति हुत्वा पूर्ववद्दानं यमनभ्यागमिष्यन्मन्येत तस्मै। मेक्षणकरणं श्रपणं च नोपनिबद्धमाचार्येण। इह च द्रव्यप्रतिपत्तिरियम्। होमक्रिया द्रव्यार्था नापूर्वोत्पत्त्यर्था तेनात्रेतिकर्त्तव्यता न भवति। कर्त्तव्यस्य हीतिकर्त्तव्यतापेक्षा

भवति । न चात्रापूर्वस्य कर्त्तव्यता । होमो ह्यत्र द्रव्यार्थः । अतो दोहनपात्रेणैव समस्तं तद्द्रव्यं भस्मनि प्रक्षिप्यत इति ॥ २ ॥

**हौम्यङ्गवि सद्रौद्रमुपसृष्टं वायव्यं दुह्यमानमाश्विनं दुग्धꣳ सौम्यमधिश्रितं वारुणमुदन्तं पौष्णं विष्यन्दमानं मारुतं बिन्दुमत्सारस्वतꣳ शान्तं मैत्रमुद्वास्यमानꣳ सवितुरुद्वासितमदितेरुन्नीयमानं वैश्वदेवमुन्नीतं बार्हस्पत्यं प्रह्रियमाणं धात्रं प्रहृतं वैश्वकर्मणमन्तराग्नी वैश्वानरायोपसन्नं द्यावापृथिव्योः पूर्वाहुतिरिन्द्राग्न्योरुत्तरा प्रजापतेर्हुतमैन्द्रम्॥३॥**

तद्धौम्यं होमद्रव्यं गवि स्थितं सद्दुष्यति चेत् रुद्रदेवत्यं भवति । एवमुपरिष्टादपि तस्मिंस्तस्मिन्काले देवतासम्बन्धात्तद्दैवतमुच्यते । वक्ष्यति हि 'यथाकालोपपाते तद्देवते तद्दैवतꣳ हुत्वा' इति । तादर्थ्यात् । गवि स्थितस्य च ऋषभाक्रमणादिना दोषः । उपसृष्टं वायव्यम् वत्सोपसर्गकाले वायव्यं भवति ॥ ३ ॥

**यथाकालोपपाते तद्देवते तद्दैवतꣳ हुत्वा तद्वातिदिश्यान्येन जुहुयात् ॥ ४ ॥**

यस्मिन्यस्मिन्काले उपपातस्तद्देवत्यं होमं कृत्वा तदुद्देशेन वातिदिश्यान्येन जुहुयात् ॥ ४ ॥

**स्कन्देच्चे दस्कन्नधित प्राजनीत्यभिमृश्य शेषेण जुहुयात्॥५॥**

"अथ यत्र स्कन्नꣳ स्यात्तदभिमृशेदस्कन्नधित प्राजनीति" ( श० ब्रा० १२।४।१।७ ) इति श्रुतेः ॥ ५ ॥

**(१)भिद्येत चेदवापद्येत स्कन्नप्रायश्चित्तेनाभिमृश्य व्याहृतिभिश्चाद्भिरुपनिनीय कपालानि भस्मोद्वापे कुर्यात् ॥ ६ ॥**

१. "यदि वा भिद्येत स्कन्नप्रायश्चित्तेनैवाभिमृश्याद्भिरुपनिनीय यदन्यद्विन्देत्तेन जुहुयात्" ( श० ब्रा० १२।४।१।६ ) इति श्रुतेः । भिद्येत विदीर्येत अथवा अवापद्येत अधोमुखीभवेत् । भस्मोद्वापशब्देन गार्हपत्यादिखरेभ्यो भस्मोद्धृत्य यो राशिः क्रियते स उच्यते ।

यद्यु नीची स्थाली स्याद्यदि वा भिद्येत स्कन्नप्रायश्चित्तेनैवाभिमृश्य व्याहृतिभिश्चाद्भिरुपनिनीय कपालानि भस्मोद्वापे करोति। यदि भिन्ना स्थाली अन्येन च द्रव्येण होमाभिनिर्वृत्तिः ॥ ६ ॥

## भुवपतय इति हाविर्यज्ञियम् ॥ ७ ॥

स्कन्नमभिमृशेत् ॥ ७ ॥

## देवान्दिवमगन्निति सोमे ॥ ८ ॥

सोमे हाविर्यज्ञियं स्कन्नं "देवान्दिवमगन्०" (वा० सं० ८।६०) इत्यनेन मन्त्रेण अभिमृशेत् ॥ ८ ॥

## यथोरोजसेति वोदकेनोपसिञ्चेत् ॥ ९ ॥

सोम एव हाविर्यज्ञियं स्कन्नम्। 'वा' शब्दो विकल्पार्थः ॥ ९ ॥

## उन्नीतसर्वस्कन्दनस्रुग्भेदयोस्तत्रैवासनम् ॥ १० ॥

"यस्याग्निहोत्रꣳ स्रुच्युन्नीतꣳ स्कन्देत्" (श० ब्रा० १२।४।२।६) इति प्रकृत्येवमेव हि श्रूयते ॥ १० ॥

## अन्यदुन्नीयान्योऽस्मै प्रयच्छेत्तेन होमः ॥ ११ ॥

अन्यस्मिन्नुन्नीयमाने प्रैषो न भवति। "तददो हैवोन्नेष्यामीत्युक्तं भवति" (श० ब्रा० १२।४।२।८) इति श्रुतेः ॥ ११ ॥

इति पञ्चविंशेऽध्याये द्वितीया कण्डिका ॥



३

## पूर्वाहुतौ हुतायां चेदाहवनीयोऽनुगच्छेत्तदुक्तम् ॥ १ ॥

तदुक्तग्रहणं न्यायप्राप्तोद्धरणप्रज्ञप्त्यर्थम्। प्राप्तत्वादेवावाच्यमिति चेत्, उत्तरविधानेन सह विकल्पार्थत्वादित्यदोषः ॥ १ ॥

## काष्ठꣳ हिरण्यं वाभिजुहुयाच्छ्रुतेः ॥ २ ॥

काष्ठं निधायाभिजुहुयात् हिरण्यं वेति विकल्पः। श्रुतिग्रहणं हृदयविलेखप्रज्ञप्त्यर्थम्। तथा च श्रुतिः—"यद्युअस्य हृदयं व्येव लिखेद्धिरण्यमभिजुहुयात् (श० ब्रा० १२।४।३।१) इति ॥ २ ॥

## त्रिरुद्धृतश्चेदाहवनीयोऽनुगच्छेदुदक्स्थानान्युपलिप्य निर्मथ्य सकृदुद्धृते तस्मिन्त्सायम्प्रातर्होममेके ॥ ३ ॥

त्रिरुद्धृताहवनीयानुगमने उदीच्यां दिशि अग्निस्थानान्युपलिप्य निर्मन्थनोपदेशाद् गार्हपत्ये समारोह्य निर्मथ्य सकृदुद्धृते तस्मिन्नेव विहारे एके सायं प्रातर्होममिच्छन्ति । एके शतकृत्वोप्युद्धरन्ति ॥ ३ ॥

## गार्हपत्येऽनुगते भस्मनाऽरणी सꣳस्पृश्य मन्थनम् ॥ ४ ॥

अग्निहोत्रकाल एतन्नैमित्तिकमिति सम्प्रदायः । तथा चोपरितनान्यपि नैमित्तिकानि तद्विषयाण्येव दृश्यन्ते । येनेदमाह–"पूर्वमुपशमय्य पूर्ववद्धोमः" ( का० श्रौ० २५।३।९ ) इति । होमग्रहणादग्निहोत्रविषयता गम्यते । अपरे तु सर्वविषयं मन्यन्ते ॥४॥

## आहवनीयजागरणे वा तत एवोद्धरणम् ॥ ५ ॥

आहवनीयजागरणे गार्हपत्यानुगमने तत एवाहवनीयोद्धरणं शेषश्च गार्हपत्यकार्ये । तस्मिन्पक्षे दक्षिणाग्नेः प्राङ्नयनं कर्तव्यम् ॥ ५ ॥

## आहृत्य वा ॥ ६ ॥

गार्हपत्यस्थानमाहवनीयम् । पुनरुद्धरणम् । शेषश्च गार्हपत्यः ॥ ६ ॥

## उलपराज्यागताद्वा ॥ ७ ॥

उलपराजी तृणवर्त्तिकोच्यते । तया वा ज्वलन्त्या गार्हपत्यस्थानमागतात् पुनरुद्धरणं भवति ॥ ७ ॥

## निर्मथ्य वा ॥ ८ ॥

"अथ हैकेऽन्यं गार्हपत्यं मन्थन्ति" ( श० ब्रा० १२।४।३।८ ) इति श्रुतेः । अस्मिंश्च पक्षे न्यायप्राप्तमेवैतदिति नैमित्तिकं भवति । प्राप्तस्य चोपादानमितरैः सह विकल्पार्थम् ॥ ८ ॥

## समारोह्यासमारोह्य वा पूर्वमुपशमय्य पूर्ववद्धोमः ॥ ९ ॥

समारोह्य पूर्ववदुदक्स्थानान्युपलिप्य निर्मथ्य सकृदुद्धृते सायं प्रातर्होमः । असमारोह्य पूर्वस्योपशमनं कृत्वा निर्मथ्योद्धृत्यात्रैव होमः । एवं हि श्रूयते–"अथ हैकेऽनुगमय्यान्यं मन्थन्ति" "अरण्योरग्नी समारोह्य" ( श० ब्रा० १२।४।३।९,१० ) इति च ॥ ९ ॥

## त्रिराहृतो दक्षिणाग्निरनुगच्छेच्चेदनाहरणमस्य तदहरेके ॥

एके शतकृत्वोप्युद्धरन्ति । अनाहरणपक्षे च तदर्थत्वात् तत्साध्यकर्मलोपः ॥१०॥

जाग्रतमाहवनीयमभ्युद्धरेच्चे त्तदुक्तम् ॥ ११ ॥

'तदुक्तम्' इति ग्रहणमुत्तरविवक्षार्थम् ॥ ११ ॥

पश्चान्निधाय पुरस्ताद्वोभयत्र होममेके ॥ १२ ॥

पश्चादाहवनीयस्य स्थापयित्वा पुरस्ताद्वा तमग्निमुभयत्र होममेके कुर्वन्ति। एके तदुक्तं गार्हपत्योऽसाविति। उभयत्र च होमपक्षे चतुर्गृहीतेन हुत्वैकस्मिन्नग्नौ पुनश्चतुर्गृहीतेन द्वितीये जुह्वति एके। शेषभक्षादि तन्त्रेण। अन्ये त्वेतन्नेच्छन्ति। साध्यो होमः साधनमग्निः न च साधनभेदात्साध्यभेदो युक्तः। तेनान्यथा वर्णयन्ति। एकैव समित् खातवती अग्निद्वयेऽप्युपधीयते। तत्र प्रक्षिप्तं होमद्रव्यमग्निद्वयेऽप्युपाच्छंति। एवमुभयत्र होमः कृतो भवति इति सम्प्रदायः। युक्तरूपमिव चैतत्, न हि साधनापेक्षया साध्यावृत्तिर्युक्तेति ॥ १२ ॥

अभिनिधानेऽग्नयेऽग्निमते पुरोडाशः ॥ १३ ॥

यदि पुनरुद्धृतोऽग्निरग्नावभिनिहित एव भवति तदाग्नयेऽग्निमते पुरोडाशः कार्यः ॥ १३ ॥

समितमिति वोपस्थानं द्वाभ्याम् ॥ १४ ॥

वाशब्दो विकल्पार्थः ॥ १४ ॥

गृहीतानुगमने चान्वग्निरित्याहृत्य ॥ १५ ॥

"ममाग्न" ( का० श्रौ० २।१।३ ) इत्यग्निं गृह्णातीति गृहीतस्यानुगमने एतदेव प्रायश्चित्तद्वयं विकल्पेन भवति। "अन्वग्निः" ( वा० सं० ११।१७ ) इत्यनेन मन्त्रेण आहृत्य पूर्वतरम् ॥ १५ ॥

अनादेशे पुरोडाशः सर्वत्र ॥ १६ ॥

वक्ष्यत्युपरिष्टात् "अग्नये च सूर्यवते" "सूर्याय च ज्योतिष्मते" ( का० श्रौ० २५।३।१९,२१ ) इति। तत्र पुराडाशो भवति। एतच्चोक्तमाचार्येण–'यत्र वेदवाक्ये द्रव्यस्य न विधानं तद्विषयम्' इति। इतरथाग्नयेऽग्निमते पुराडाश इत्यवाच्यं स्यात् ॥ १६ ॥

अनुद्धृताभ्यस्तमये कुशबद्धे हिरण्ये पश्चाद्ध्रियमाण इध्मेनोद्धरेदार्षेयो ब्राह्मणः ॥ १७ ॥

"यस्याहवनीयमनुद्धृतमादित्योऽभ्यस्तमियात्" ( श० ब्रा० १२।४।४।६ ) इति प्रकृत्य सर्वमेतच्छ्रूयते। प्रैषवचनं तु नोपनिबद्धमाचार्येण ॥ १७ ॥

**वैष्णव्याहुतिः ॥ १८ ॥**

तत्र देयेति ॥ १८ ॥

**अग्नये च सूर्यवते ॥ १९ ॥**

पुरोडाशः ॥ १९ ॥

**अभ्युदये रजतधारणं पुरस्तात् वैश्वदेव्याहुतिः ॥ २० ॥**

**सूर्याय च ज्योतिष्मते ॥ २१ ॥**

पुरोडाशः ॥ २१ ॥

**समानमुद्धरणम् ॥ २२ ॥**

'इध्मेनोद्धरेदार्षेयो ब्राह्मण' इति ॥ २२ ॥

**वैश्वदेवी वोभयत्रापुरोडाशा ॥ २३ ॥**

उभयत्र वा वैश्वदेव्याहुतिर्भवत्यपुरोडाशा चतुर्गृहीतेन ॥ २३ ॥

**उभयानुगमने पुनराधेयं वा ॥ २४ ॥**

उभयोरनुगतयोः गार्हपत्याहवनीययोर्यद्यभ्यस्तमयो भवत्यभ्युदयो वा तदा पुनराधेयं वा भवति, न्यायप्राप्तमग्न्याधेयं वा। को न्याय इति चेत्? "उभावग्नी युगपदुत्पाद्यौ युगपदुत्पत्तिश्चाग्न्याधेयेन भवति", यद्येवं 'पुनराधेयं वा' इति कुत एतत्? वाक्यात्। 'यस्योभावग्नी अनुगतावभिनिम्लोचेदभ्युदियाद्वा सूर्यः पुनराधेयमेव तत्र प्रायश्चित्तिः'। एवं चेत् पुनराधेयमेव भवति नाग्न्याधेयम् इति। न हि न्यायो वाक्येन विकल्प्यते। एतच्चानुगतपरिज्ञानोत्तरकालं यद्यभिनिम्लोचनं भवति तदैव, न अभिनिम्लोचनोत्तरकालमनुगमनपरिज्ञाने ॥ २४ ॥

**भेदेनाप्युपपातात् ॥ २५ ॥**

भेदेनाप्यनुगमाभिनिम्लोचने भवत्येव पुनराधेयम्। कुत एतत्? उपपातात्। उपपातो हि भवति अग्न्यनुगमनेऽभिनिम्लोचनम्। यद्यद्युभयशब्देन विशिष्यते ततो वाक्यं भिद्येत। तस्माद्भेदेनाप्यनुगतयोः पुनराधेयमिति ॥ २५ ॥

एवं प्राप्त आह—

**न सह प्रक्लृप्तेः ॥ २६ ॥**

नैतदेवमन्यतरानुगमने पुनराधेयम्। सहैव हि प्रकल्पिता गार्हपत्याहवनीय-योरुत्पत्तिः। तत्रैकैको न शक्यते उत्पादयितुम्। तस्मात्सविशेषणमेवात्र निमित्तम्॥२६॥

इति पञ्चविंशेऽध्याये तृतीया कण्डिका ॥

४

## मथ्यमानश्चेन्न जायेत यमदूरात्परापश्येत्तमाहृत्याभि-जुहुयात् ॥ १ ॥

मथ्यमानग्रहणं कालासम्भवप्रज्ञप्त्यर्थम्। न हि कश्चिन्मथ्यमानो न जायते। यमेवान्तिकेऽग्निमपरिगृहीतं पश्येत्तमाहृत्याभिजुहुयात्। स चायमस्यैवैकस्य प्रयोगस्य साधनीभूतः। तावन्मात्रश्रवणात्। पुनः स्वयोनेराहरणम् ॥ १ ॥

## ब्राह्मणहस्ते वा ॥ २ ॥

जुहोति। 'वा'शब्दो विकल्पार्थः। अयं चाहवनीयविकारत्वेन विधीयते। ततश्चोत्तरसमिदाधानमन्त्रे विपरिणामः। सा ह्यदृष्टार्थत्वात् ब्राह्मणहस्तेऽपि दीयते। पूर्वा तु दृष्टार्थत्वादेव न भवति ॥ २ ॥

तस्मिन्पक्षे व्रतमाह तस्य—

## वासानपनोदश्च ॥ ३ ॥

वसत्यर्थमागतो ब्राह्मणो नापनोद्यः ॥ ३ ॥

## अजकर्णे वा दक्षिणे ॥ ४ ॥

जुहोति ॥ ४ ॥

तस्मिंश्च पक्षे व्रतमाह—

## अभोजनं तस्य ॥ ५ ॥

अजमांसस्य ॥ ५ ॥

## कुशस्तम्बे वा ॥ ६ ॥

जुहोति। तत्र व्रतम् ॥ ६ ॥

## अनासनं तस्मिन् ॥ ७ ॥

अप्सु वा ॥ ८ ॥

जुहोति । तत्र व्रतम् ॥ ८ ॥

नाद्भ्यो बीभत्सेतेति श्रुतेः ॥ ९ ॥

बीभत्सा परिवाद उच्यते । एवं श्रूयते—"नापः परिचक्षीत" इति । अपन्याय्यत्वाच्च श्रुतिग्रहणमत्र क्रियते ॥ ९ ॥

अहुताभ्युदितउन्नीया तमितोऽऽसीत ॥ १० ॥

अहुत एव यद्यभ्युदयो भवति तदोन्नीयातमनादासीत ॥ १० ॥

हुत्वा भूरित्यनुमन्त्रणम् ॥ ११ ॥

हुत्वा च 'भूः' इत्यनुमन्त्रणं कार्यम् ॥ ११ ॥

वरदानं च ॥ १२ ॥

सर्वनाशे हविषां दोषे वा तदुक्तम् ॥ १३ ॥

तदुक्तग्रहणं पक्षान्तरेण सह विकल्पार्थम् ॥ १३ ॥

आज्येन वा प्रतिसंख्याय देवतेज्या ॥ १४ ॥

प्रतिसङ्ख्यानविधिग्रहणाच्च तासामेव देवतानामिज्या(१) । किं वा स्यात् । मा भूदुपांशुयाजविध्यन्तेन विष्णोरग्नीषोमयोर्वेज्येति । देवताग्रहणाच्चाङ्गाभावः ॥ १४ ॥

पुनः क्रिया च ॥ १५ ॥

एवं हि श्रूयते—"यस्य सर्वाणि हवीꣳषि नश्येयुर्वा दुष्येयुर्वापहरेयुर्वाज्येन ता देवताः सꣳस्थाप्य पुनर्निर्वपेत्" इति ॥ १५ ॥

भेदे विप्रक्लृप्त्युपपाताभ्याम् ॥ १६ ॥

सर्वविषयत्वेन श्रवणात्सर्वहविर्नाशे एवं प्राप्त इदमुच्यते भेदेपि भवतीति । कुत एतत् ? विप्रक्लृप्तेः । पृथक् पृथक् प्रक्लृप्तानि ह्येतानि हवींषि । नाग्न्युत्पत्तिवत्सहत्वप्रक्लृप्तिः । अपि चोपपातो भवति "यस्य हवीꣳषि नश्ययुः" इति । तत्र सर्वशब्देन विशिष्यमाणे वाक्यभेदप्रसङ्गः । "हवीꣳषि नश्येयुः सर्वाणि च नश्येयुः"

---

१. यावतीनां देवतानां हवींषि विनष्टानि ताः परिगणय्य विनष्टहविःसम्बद्धानां तावतीनां देवतानामाज्येन हविषा यागः कर्तव्यः । आज्यसंस्कारात्पूर्वमस्य निमित्तस्य पाते आज्यसंस्कारं वेदिसंस्कारमग्निसस्कारं च कृत्वा यागः कर्तव्य इति देवयाज्ञिकाः ।

इति। स चान्याय्यः। तस्मान्नाशमात्रं निमित्तम्। तत्र भेदेऽपि भवति चेत् भवेदिदं नैमित्तिकमिति ॥ १६ ॥

अन्तरागमनेऽनाद्रियते ॥ १७ ॥

गार्हपत्यादीनामन्तरागमने अनादरस्तच्चैतदग्निहोत्रविषयम्। तदेव प्रकृत्य श्रूयते—"कामं वाऽएषु लोकेषु वयांꣳसि युक्तं चायुक्तं च सञ्चरन्ति" ( श० ब्रा० १२।४।१।३ ) इति ॥ १७ ॥

श्वैडकवराहेषूदधारा प्राचीदं विष्णुरिति ॥ १८ ॥

देया ॥ १८ ॥

भस्मनो वा ॥ १६ ॥

'वा'शब्दो विकल्पार्थः। विकल्पेन हि श्रूयते—"गार्हपत्याद्भस्मोपहृत्याहवनीयान्निवपन्तो यन्ति" ( श० ब्रा० १२।४।१।४ ) इति ॥ १९ ॥

चक्रीवत्यग्नये पथिकृते ॥ २० ॥

पुरोडाशं निर्वपेत्। चक्रीवान् रासभ उच्यते, तस्मिन्नन्तरा गच्छतीत्यर्थः। एतच्च सर्वविषयमसंयुक्तविधानात् ॥ २० ॥

प्रज्ञातेष्ट्यतिपत्तौ च ॥ २१ ॥

पथिकृद्भवति ॥ २१ ॥

प्रज्ञातग्रहणमाचष्टे—

नियतास्वतिपत्तिश्रुतेः ॥ २२ ॥

अतिपत्तिर्हि नियतास्वेव भवति नानियतासु। इष्टिग्रहणाच्च पश्वतिपत्तौ न भवति ॥ २२ ॥

स्तोत्रमोहे शस्त्रस्य च ॥ २३ ॥

पथिकृद्भवति ॥ २३ ॥

जनमरणे च ॥ २४ ॥

पथिकृत् भवति ॥ २४ ॥

उपपातसामर्थ्यात्स्वजने ॥ २५ ॥

सा च स्वकीयजनमरणे, न सार्वत्रिके। कुत एतत्? उपपातसामर्थ्यात्। उपपातो हि कादाचित्को भवति ॥ २५ ॥

नित्यत्वाच्च ॥ २६ ॥

अपि च नित्यं जननमरणमिति ॥ २६ ॥

अग्नये व्रतपतये व्रत्येऽहनि मैथुनमाᳪंसभोजनं चेत् ॥२७॥

व्रतमर्हतीति व्रत्यं तस्मिन्मैथुनमांसभोजनं चेद्भवति अग्नये व्रतपतय इष्टिर्भवति ॥ २७ ॥

आहिताग्नेरार्त्यश्रुकरणेऽग्नये व्रतभृते ॥ २८ ॥

आहिताग्निग्रहणं विहृताग्निप्रज्ञप्त्यर्थम्। आर्त्तिग्रहणाच्च नानन्दाश्रुकरणे॥२८॥

सᳪंसर्गे नाद्रियेत ॥ २९ ॥

अग्न्यन्तरसंसर्गेऽनादरः ॥ २९ ॥

अनुक्रोशेऽग्नये सᳪंसर्गायाहुतिर्वा ग्रामाग्निना चेत् ॥३०॥

अथ यद्यनुक्रोशो भवति तदाग्नये संसर्गाय इष्टिर्भवति। आहुतिर्वेति विकल्पः। एतच्च ग्रामाग्निना संसर्गे भवति ॥ ३० ॥

अग्नये विविचये मिथश्चेत् ॥ ३१ ॥

मिथः परस्परतः। परस्परतो यदि संसर्गो भवति तदाग्नये विविचये इष्टिर्भवति, आहुतिरनादरो वेति सर्वं ह्येतदत्र पठ्यते। हृदयविलेखे इष्ट्याहुत्योर्विकल्पः ॥३१॥

अग्नये संवर्गाय प्रदव्याच्चेत् ॥ ३२ ॥

प्रदव्यो दावाग्निः। दावाग्निना चेद् संसर्गस्तदाप्यनादरः। हृदयविलेखे अग्नये संवर्गायेष्टिराहुतिर्वा ॥ ३२ ॥

अग्नयेऽप्सुमते वैद्युताच्चेत् ॥ ३३ ॥

वैद्युतेन चेदग्निसंसर्गः तदाप्यनादरः। हृदयविलेखेऽग्नयेऽप्सुमते इष्टि-राहुतिर्वा ॥ ३३ ॥

अग्नये शुचयेऽशुच्यायतनाच्चेत् ॥ ३४ ॥

अशुच्यायतनाग्निना चेत् संसर्गः अग्नये शुचये इष्टराहुतिर्वा भवति। न ह्यत्रानादरः पठ्यते ॥ ३४ ॥

भार्यागोषु यमजनने मारुतं त्रयोदशकपालं निर्वपेत् ॥३५॥

यजनीयेऽहन्यन्वारम्भणीयापूर्वकम् ॥ ३५ ॥

गेहदाहेऽग्नये क्षामवते पुरोडाशः ॥ ३६ ॥

पुरोडाशो भवति ॥ ३६ ॥

चन्द्रमसाभ्युदित आमावास्ये पुरस्तात्तद्व्रतः स्यात् ॥३७॥

आमावास्ये प्रक्रान्ते यदि चन्द्रमा अभ्युदेति, तदा तद्व्रत एव भवति, नान्यद् व्रतयति ॥ ३७ ॥

दधि हविरातञ्चनं निदध्यात् ॥ ३८ ॥

उत्पाद्यमानस्य हविषः ॥ ३८ ॥

संसृज्य वत्सान्पुनरपाकरणम् ॥ ३९ ॥

कर्त्तव्यम् । एवं हि श्रूयते–"स यद्यगृहीतं हविरभ्युदियात्प्रज्ञातमेव तद्देषैव व्रतचर्या यत्पूर्वेद्युर्दुग्धं दधि हविरातञ्चनं तत्कुर्वन्ति प्रतिप्रमुञ्चन्ति वत्सांस्तान्पुनरपाकुर्वन्ति" ( श० ब्रा० ११।१।४।१ ) इति ॥ ३९ ॥

निरुप्ते व्रताशक्तौ वा त्रैधं तण्डुलान्विभज्य मध्यमानग्नये दात्रे स्थविष्ठानिन्द्राय प्रदात्रे दधनि चरुमणिष्ठान्विष्णवे शिपिविष्टाय शृते चरुम् ॥ ४० ॥

निरुप्ते चेत् हविष्यभ्युदयपरिज्ञानं भवति व्रतस्य वा अशक्तिरनिरुप्तेऽपि तदा त्रैधं तण्डुलान्विभज्य मध्यमानग्नये दात्रे पुरोडाशं कुर्यात्, स्थविष्ठानिन्द्राय प्रदात्रे दधनि चरुं कुर्यात्, अणिष्ठान्विष्णवे शिपिविष्टाय शृते चरुम् । "यद्यु व्रतचर्यां वा नोदाशंसेत गृहीतं वा हविरभ्युदियात्" ( श० ब्रा० ११।१।४।२ ) इति प्रकृत्य सर्वमतच्छ्रूयते इति ॥ ४० ॥

इदानीमिदं विचार्यते–किं तदेवेदं कर्म उतान्यत्कर्मान्तरमिति । किं तावत्प्राप्तम् । सूत्रेणैवोपक्रमः—

संस्कारात्तत्सान्नाय्यम् ॥ ४१ ॥

तदेवेदं कर्मेति । कुत एतत्? संस्कारात्पूर्वं यागायोपकल्पितं संस्कृतं द्रव्यं तदेवेदमिति । तत्साध्यत्वाच्च तदेव कर्मेति ॥ ४१ ॥

एवं प्राप्त आह—

## अन्यद्वेज्यायोगात् ॥ ४२ ॥

तस्मादन्यदेव वा कर्मान्तरमिदं न तदेव । कुत एतत्, इज्यायोगात् । इज्यान्तर-योगो ह्यत्रोपलभ्यते, "अग्निर्दाता इन्द्रः प्रदाता विष्णुः शिपिविष्ट" इति । तथा—"दधनि चरुः शृत चरुम्" इति अन्यदेव यागान्तरम्, ततोऽन्यदिति एवं पक्षद्वयोपन्यासे किं कर्मान्तरता युक्ता उत तस्यैव विकार इति । तस्यैव विकार इति युक्तरूपता । तदेव हि प्रक्रान्तं कर्म प्रत्यभिज्ञायते, न चान्यत् कर्मान्तरमत्रारब्धम् । तस्मात्तस्यैव कर्मणो विकार इति ॥ ४२ ॥

## तस्य तण्डुलापनयो वचनात् ॥ ४३ ॥

तण्डुलैरुपलक्षणं दध्नः पयसश्च । पूर्वं देवताभ्योपनीय देवतान्तरसम्बन्धो नैमित्तिक इति प्रयोजनत्वे सति कर्मणो गुणकामानां प्रवृत्तिः पुनरपि च तत्कर्मविहित-मेव । "अथ यदैव नोदियादथोपवसेत्" ( श० ब्रा० ११।१।४।४ ) इति ॥ ४३ ॥

## प्रकृत्या पूर्वम् ॥ ४४ ॥

असान्नाय्यगुणकं प्रकृत्या स्वरूपेणैव भवति दधिपयसोरभावात् ॥ ४४ ॥

## सर्वं वा निमित्तात् ॥ ४५ ॥

'वा' शब्दः पक्षव्यावृत्तौ । सर्वं वा क्रियते पूर्वमपि हि निमित्तं भवति प्रक्रान्तेऽभ्युदय इति ॥ ४५ ॥

## पश्चादभ्युदृष्ट आमावास्येनेष्ट्वा तदहर्वैव श्वो वाऽग्नये पथिकृत इन्द्राय वृत्रघ्न एकादशकपालो वैश्वानरश्च॥४६॥

"सोऽचामावास्येति मन्यमान उपवसत्यथैष पश्चाद्ददृश" ( श० ब्रा० ११।१।५।४ ) इति प्रकृत्येतच्छ्रूयते । तद्दर्शनं च शास्त्रतः प्रतिपद्येव भवति । भ्रान्त्या प्रतिपद्युपवा-सोपक्रमे एतत् ॥ ४६ ॥

## त्रीषुकं धनुर्दक्षिणा ॥ ४७ ॥

त्रिभिरिषुभिरुपेतं धनुर्दक्षिणा ॥ ४७ ॥

## दण्डो वा ॥ ४८ ॥

वेति विकल्पः ॥ ४८ ॥

## प्राकृताश्चेच्छन् ॥ ४९ ॥

एतानेव हविर्विशेषान्प्रकृत्य याः श्रूयन्ते, ताश्चेच्छया ददाति। यथाऽश्वमेधे पथिकृतः शतमानं वैश्वानराय कृष्णं वासः इन्द्राय वृत्रघ्ने चोदकेनान्वाहार्यः ॥ ४९ ॥

## अनभ्युदृदृष्टस्यापि पशुकामस्य ॥ ५० ॥

इयमिष्टिर्भवति ॥ ५० ॥

इति पञ्चविंशेऽध्याये चतुर्थी कण्डिका ॥

५

## उद्वास्यमानं चेत्कपालं नश्येदाश्विनः ॥ १ ॥

उद्वास्यमानकपालनाशे आश्विनो द्विकपालः पुरोडाशः कर्त्तव्यः। स च परतन्त्रमध्यपाती तदङ्गत्वेन भवति। अत्र पशुपुरोडाशन्यायः। यान्यङ्गिनोऽङ्गानि प्रयुक्तानि तानीहापि प्रसज्यन्ते। पात्राणि च यान्यनपवृत्तानि वज्रादीनि तान्यप्यत्र प्रयुज्यन्ते। यानि पुनः कृष्णाजिनोलूखलमुसलादीनि निवृत्तप्रयोजनानि तेषां पुनः प्रोक्षणादिसंस्कारः कर्त्तव्यः, अपवृत्तत्वात्। शृतावदानं प्राशित्रहरणम् इडापात्री च संस्कृतान्येव विद्यन्ते। अनसि ग्रहणपक्षे अनाप्यासाद्यते। धर्माश्चास्य धूरीषालम्भनादयः क्रियन्ते, पूर्वधर्माणामपवृत्तत्वात्। तदपवर्गश्च तत्कार्याभिनिर्वृत्तेः। अग्नीन्धनं त्वङ्गप्रधानार्थत्वादपकृष्यते। अङ्गप्रधानार्थता चास्याहवनीयसंस्कारकत्वात्। 'यदाहवनीये जुहोति' इत्यनेनाहवनीयस्याङ्गप्रधानार्थता। एवं च कृत्त्रोपवाजनसम्मार्गावपि कर्त्तव्यौ। अनेन प्रकारेणेडान्त आश्विनः सान्निपातिभिरङ्गैः कार्यः। यानि पुनरारादुपकारकाण्याघारप्रयाजाज्यभागादीनि तेषां च सकृदेव क्रिया। अन्ते ह्यवयवे तेषां प्रधानाभिसम्बन्ध इष्यते। न हि यद्यदङ्गैः क्रियते तत्तदेव प्रधानेनाभिसम्बन्धमुपयाति। यदाऽङ्गं न तदा प्रधानम्, यदा प्रधानं न तदाङ्गमिति। तस्मादन्त्येऽवयवेऽङ्गापूर्वसम्बन्धः, आम्नानसामर्थ्यात्। अतः सकृत्क्रिया आघारादीनाम्। तेन मुख्यसन्निधिन्यायादङ्गिसन्निधावेवानुष्ठानमिति। अनेन न्यायेन कर्ममध्ये या इष्टयः व्रातपतीयाद्याश्च आपतन्ति ता अनुष्ठेया इति ॥ १ ॥

## सायंप्रातर्दोहार्त्तावैन्द्रं पञ्चशरावमोदनं निर्वपेत् पुरोडाशं वा ॥ २ ॥

एवं हि श्रूयते—"यस्योभयं हविरार्त्तिमार्च्छेदैन्द्रं पञ्चशरावमोदनं निर्वपेत्" इति। सान्नाय्यं हि प्रकृत्यैतच्छ्रूयते। तेन न हविर्मात्रार्त्तौ। पञ्चशराव ओदनः, पुरोडाशो वेति विकल्पः ॥ २ ॥

इदानीमिदं विचार्यते—किमुभयार्त्तौ पञ्चशराव उतान्यतरार्त्तावपीति। किं तावद् युक्तम्? उभयार्त्ताविति। उभयोर्हि श्रूयते—"यस्योभयꣳ हविरार्त्तिमार्च्छेत्" इत्येवं प्राप्त आह—

## भेदेनाप्युपपातात् ॥ ३ ॥

अन्यतरार्त्तावपि भवति पञ्चशरावः। हविर्विशिष्टार्त्तिर्निमित्तं तत्रोभयशब्देन विशेष्यमाणे वाक्यं भिद्येत। तस्मादन्यतरार्त्तावपि भवति ॥ ३ ॥

इदानीमिदं विचार्यते—पञ्चशरावः किं प्रतिनिधिः उत निमित्ते नैमित्तिकं प्रायश्चित्तमिति। किं तावत्प्राप्तं सूत्रेणैव पक्षः—

## तत्प्रतिनिधिः ॥ ४ ॥

तस्य सान्नाय्यस्य विनष्टस्य सतः प्रतिनिधिरयम्। द्रव्ये नष्टे द्रव्यान्तरं विधीयमानं तत्कार्य एव भवति। तस्मात्प्रतिनिधिरिति ॥ ४ ॥

## प्रायश्चितं वा देवताश्रुतेः ॥ ५ ॥

'वा' शब्दः पक्षान्तरपरिग्रहे। प्रायश्चित्तमेतन्न प्रतिनिधिः। कुत एतत्? देवताश्रुतेः। देवता ह्यत्र श्रूयते—'ऐन्द्रं पञ्चशरावम्' इति। देवतासम्बन्धाद्यागविधानम्। ननु 'ऐन्द्रम्' इत्यनुवादः ततश्च द्रव्यमात्रविधानम्। नेत्युच्यते—अनुवादमात्रं ह्यनर्थकं भवति। अपि चानुवादोऽसमञ्जस एव, पक्षे माहेन्द्रस्यापि सान्नाय्यदेवतात्वात्। तस्मात्प्रायश्चित्तमिति ॥ ५ ॥

## चरू सान्नाय्यालाभे ॥ ६ ॥

आर्त्तौ सत्यां सान्नाय्यालाभे सति चरू भवतः ॥ ६ ॥

## सायं दोहस्थाने वा पुरोडाशः ॥ ७ ॥

चरुर्वेति विकल्पः ॥ ७ ॥

## असान्नाय्यवद्वा ॥ ८ ॥

अथवा यादृशमसान्नाय्यवदामावास्यं तादृगेव कुर्यात्। वाशब्दो विकल्पार्थः ॥८॥

## दुष्टस्य हविषोऽप्स्ववहरणम् ॥ ९ ॥

"दुष्टं हविरप्स्ववहरेत्" इति श्रुतिः ॥ ९ ॥

## उष्णे वा भस्मनि ॥ १० ॥

अवहरणम् ॥ १० ॥

## शिष्टभक्षप्रतिषिद्धं दुष्टम् ॥ ११ ॥

मन्वादिभिर्यदभक्ष्यमुक्तं तद्दुष्टम् ॥ ११ ॥

## एकस्यानिष्टे तदुक्तम् ॥ १२ ॥

हविर्गणे मानसादपचारात् यद्येकेन यागो न कृतः स्यात् तदा कर्त्तव्य इति तदुक्तम् ॥ १२ ॥

## सान्निपातिकानि वा तस्य ॥ १३ ॥

साान्निपातिकान्यङ्गानि कर्त्तव्यानि संस्पृशीनि ॥ १३ ॥

## इष्टं चेदाज्येन शेषम् ॥ १४ ॥

इष्टं चेद्धविर्दुष्येत स्विष्टकृदाज्येन कर्त्तव्यम् ॥ १४ ॥

## हविरन्तरणे प्राक्प्रधानेज्यायाः स्मृत्वान्वाहरेत् ॥ १५ ॥

यदि नाम हविरन्तरितं न गृहीतमेव तदा प्राक्प्रधानेज्यायाः स्मृत्वाऽन्वाहरेत्, यागक्रमानुग्रहात् ॥ १५ ॥

## प्राग्वा समिष्टयजुषः सꣳस्थाश्रुतेः ॥ १६ ॥

समिष्टयजुषो वा पूर्वं स्मृत्वाऽन्वाहरेत् न प्रधानेज्याया एव। कुत एतत्? संस्थाश्रुतेः-"अन्तो हि यज्ञस्य समिष्टयजुः" इति। यावदपि अन्तो न भवति तावदप्यन्वाहरणं युक्तरूपमेवेति ॥ १६ ॥

## हुतं चेत्सꣳस्थाप्य तदेव पुनर्निर्वपेत् ॥ १७ ॥

हुतं चेत्समिष्टयजुः संस्थाप्य तत्कर्म तदेव पुनर्निर्वपेत् ॥ १७ ॥

## देवताविपर्यासे पुष्कलं दत्त्वा यथानुपूर्व्यकरणम् ॥ १८ ॥

आग्नेयस्यावदानक्रमे यत् अग्नीषोमोच्चारणं स देवताविपर्यासः। तत्र-पुष्कलं यथानुपूर्व्यकरणम्। पुष्कलशब्दः सुवर्णपरिमाणवाचीति केचित्। अपरे तु सारद्रव्यमात्रमाहुः ॥ १८ ॥

## अवदानयाज्यानुवाक्यासु च ॥ १९ ॥

विपर्यासे एतदेव भवति। आग्नेयस्यावदानक्रमे यदग्नीषोमीयस्यावदानग्रहणं सोऽवदानविपर्यासः ॥ १९ ॥

स्रुच्ये दुष्टे पुनर्ग्रहणम् ॥ २० ॥

उत्तरार्थमिदमुच्यते ॥ २० ॥

ध्रुवाया वा ततो यज्ञः प्रभवतीति श्रुतेः ॥ २१ ॥

ध्रुवाया वा ग्रहीतव्यम् । वा शब्दो विकल्पार्थः । 'ततो यज्ञः प्रभवति' इति वाक्यैकदेशोपन्यासः ॥ २१ ॥

अदुष्टाद्वा नयनमेके ॥ २२ ॥

एक आचार्याः स्रुच्यादेवादुष्टादानयनमिच्छन्ति ॥ २२ ॥

तस्मिंश्च पक्षे—

नोपभृतो ध्रुवायाम् ॥ २३ ॥

ग्रहीतव्यम् ॥ २३ ॥

आज्यस्थालीदोषेऽन्यत् ॥ २४ ॥

स्थालीदुष्टेऽन्यद् ग्रहीतव्यम् । न्याय एवायम् ॥ २४ ॥

अदोषो वा न वै देवाः कस्माच्चन बीभत्सन्त इति श्रुतेः ॥

अदोषो वेति विरुद्धम् पूर्वं ह्युक्तं "दुष्टस्य हविषोऽभ्यवहरणम्" इति, तस्माद-दोषो वेत्यन्यथा व्याख्येयम् । दुष्टेन हविषा यागाभिनिर्वृत्तौ कृतायां पश्चाद्दोषसंवित्तौ तत्कृतमेव कर्म अदुष्टेनैव द्रव्येण न पुनरावृत्तिः ॥ २५ ॥

अधिकं निरुप्य तच्च यजेत् ॥ २६ ॥

मानसादपचारादधिके हविषि गृहीते तेनापि यागः कर्त्तव्य सङ्कल्पदोषपरि-हाराय ॥ २६ ॥

एवं स्थित उच्यते—

न वा चोदितत्वात् ॥ २७ ॥

न वा तेन यागः कर्त्तव्यः नह्यत्र चोदनास्तीति ॥ २७ ॥

ऐतु राजा वरुणो रेवतीभिरस्मिन्स्थाने तिष्ठतु मोदमानः अरिष्टा अस्माकं वीरा मा परासेचि मत्पय इति प्रणीता स्कन्ना अभिमृशेत्(१) ॥ २८ ॥

---

१. भूमावन्यत्र वा पतिता अपोऽभिमृशेत् ।

भूमिर्भूमिमगान्माता मातरमप्यगात् भूयाय पुत्रैः पशु-
भिर्यो नो द्वेष्टि स भिद्यतामिति मृन्मयं
भिन्नमभिमृशेत् (१) ॥ २९ ॥

य ऋते चिदभिश्रिषः पुरा जत्रुभ्य आतृदः सन्धाता सन्धिं
मघवा पुरूवसुरिष्कर्ता विहुतं पुनरिति च धर्म्यम् (२)॥३०॥

घर्मे मृन्मयं धर्म्यं भिन्नमभिमृशेत्। चशब्दादधस्तनेन मन्त्रेण। घर्मभेद एवायमपरो विशेषः ॥ ३० ॥

इति पञ्चविंशेऽध्याये पञ्चमी कण्डिका ॥

६

परमेष्ठ्यादींश्च चतुस्त्रिंशतं जुहोति ॥ १ ॥

"परमेष्ठ्यभिधीतः" (वा. सं. ८।५४) इत्येवमादिव्याहृतीनां चतुस्त्रिंशतं जुहोति। तच्चाध्वर्युरादिष्टत्वात्। अनादेशे हि ब्रह्मणो विधानम् "ब्रह्मा प्रायश्चित्तानि जुहुयादनादिष्टानि" (का० श्रौ० २५।१४।३५) इत्यनेन। अतश्च वक्ष्यमाणा कालाहुतिरप्यत्र भवति कर्तृभेदादिति ॥ १ ॥

घर्मधुग्ध्वाले चादोहे च ॥ २ ॥

घर्मधुग्ध्वाले ह्वलनं चलनम् आत्यन्तिके चलने मरण इत्यर्थः। तस्याश्चाऽदोहे च ॥ २ ॥

उदीच्या दोहस्थानेऽन्यस्याः ॥ ३ ॥

अन्यस्या दोहस्थाने उदीच्या गोर्व्यवस्थितायाः ॥ ३ ॥

शालाया वा पुरस्तात्प्राच्याः ॥ ४ ॥

अवस्थितायाः ॥ ४ ॥

---

१. स्थाल्यादि अभिमृशेत्।
२. धर्म्यं महावीरपिन्वनरौहिणकपालादि।

## पुच्छकाण्डाद्दक्षिणेऽस्थनि हुत्वा दोहयेत् ॥ ५ ॥

तामेव गां दोहयति। सा यदि घर्मदुघाह्वलेदित्युपक्रम्य सर्वमेतच्छ्रूयते ॥ ५ ॥

## पृषदाज्यस्कन्दने चैके ॥ ६ ॥

चतुस्त्रिंशद्धोममिच्छन्ति। एकीयग्रहणाद्विकल्पः ॥ ६ ॥

## सोमेज्योपपाते चैकैकां यथाकालं हुत्वा यज्ञस्य दोह इति वाचयति ॥ ७ ॥

सोमेज्यायामुपपातः सोमेज्योपपातः। न सोमयागोपपातः। एवं "यदि किञ्चिदापद्येत" ( श० ब्रा० १२।६।१।६, ३६ ) इति श्रूयते। (१)तत्र यथाकालमेकैकामाहुतिं हुत्वा "यज्ञस्य दोहः०" ( वा० सं० ८।६२ ) इति वाचयति। यथाकालग्रहणेन च "अथ यदि पण्यमानः" "अथ यदि क्रयायोपोत्थित" ( श० ब्रा० १२।६।१।१०, ९ ) इत्येवमादि गृह्यते, एवमेव हि श्रूयत इति। अत्र च ब्रह्मणः कर्तृत्वम्। "ता ब्रह्मैव जुहुयात्" ( श० ब्रा० १२।६।१।३८ ) इति। ननु च सूत्रकारेण नैवैतदभिहितम्— 'यथाकालमेकैकां ब्रह्मा जुहोति' इति। नैवैतन्नोक्तम्, उक्तमेव—"ब्रह्मा प्रायश्चित्तानि जुहुयादनादिष्टानि" ( का० श्रौ० २५।१४।३५ ) इति। कथमयमनादेश इति चेत्? यत्र नाम निमित्तादेशपूर्वकं नैमित्तिकमादिश्यते यथा—"पृषदाज्यस्कन्दने जुहुयादयाविष्ठा जनयन्" ( का० श्रौ० २५।६।१० ) इति, "पृषदाज्यस्कन्दनेऽभिमृशेत्" इति च स आदेशः। इह पुनर्नैवं निमित्तादेशपूर्वको नैमित्तिकादेशः। इह हि "पण्यमानः किंचिदापद्येत" इति, "अभिषूयमाणः किंचिदापद्येत" ( श० ब्रा० १२।६।१।१०,२१ ) इति च अनिमित्तादेशपूर्वको नैमित्तिकादेशः तस्मादनादिष्टसूत्रेण एतान्यपि गृह्यन्ते। तथा चैकैकहोममेवाङ्गीकृत्य 'ता ब्रह्मैव जुहुयात्" (श० ब्रा० १२।६।१।३८) इत्युक्तम्। चतुस्त्रिंशद्धोमस्तु आदेश एवेत्यध्वर्युकर्तृकः ॥ ७ ॥

## आग्नीध्रीये सुत्यासु(२) ॥ ८ ॥

सुत्यासु वर्त्तमानासु कालाहुतिः आग्नीध्रीये। आहवनीयापवादोऽयम्। एवं हि श्रूयते—"यदि दीक्षोपसत्स्वाहवनीये यदि प्रसुत आग्नीध्रे" ( श० ब्रा० १२।६।१।२ ) इति ॥ ८ ॥

## आपवस्व हिरण्यवदित्युद्गातृहोमो ध्वाङ्क्षारोहणे यूपस्य ॥ ९ ॥

---

१. परमेष्ठ्यादिचतुस्त्रिंशदाहुतीनां मध्ये।

२. कालाहुतयः दीक्षासूपसत्सु चापररात्र ऋत्विजः प्रबोधयन्ति इत्येतस्मात्प्राक् आहवनीये होतव्याः ऋत्विक्प्रबोधनादारभ्य सुत्यायामाग्नीध्रीये।

"आपवस्व०" (वा०सं०८।६३) इति काकारोहणे यूपस्य जुहुयादाहवनीये ।।१।।

पृषदाज्यस्कन्दने जुहुयादयाविष्ठा जनयन्कर्वराणि स हि घृणिरुरुर्वराय गातुः स प्रत्युदैद्धरुणो मध्वो अग्रᳬं स्वायां यत्तन्वां तनूं मैरयतः स्वाहेति(१) ॥ १० ॥

धर्मधुक् शार्दूलहता चेत् स्पृतीर्जुहुयात् चन्द्रात्ते मन स्पृणोमि स्वाहा, सूर्यात्ते चक्षु स्पृणोमि स्वाहा, वातात्ते प्राणान्स्पृणोमि स्वाहा, दिग्भ्यस्ते श्रोत्रᳬं स्पृणोमि स्वाहा, अद्भ्यस्ते लोहितᳬं स्पृणोमि स्वाहा, पृथिव्यै ते शरीरᳬं स्पृणोमि स्वाहेति ॥ ११ ॥

शार्दूलो व्याघ्रः, तन्निपातने स्पृतीराहुतीर्जुहोति(२) 'चन्द्रात्ते' इति प्रतिमन्त्रम् ।। ११ ।।

हुत्वान्यामाजतेति ब्रूयात् ॥ १२ ॥

अध्वर्युरेव 'क्त्वा' प्रत्ययोपदेशात् ।। १२ ।।

स्वयᳬंहोम्यशक्ता उपासीत ॥ १३ ॥

स्वयंहोमी यजमानः, तदशक्तौ समीप आसीत(३) ।। १३ ।।

उपसर्पणाशक्तावासनमधः ॥ १४ ॥

यदि चंक्रमणेऽप्यशक्तस्तदासीताधः(४) ।। १४ ।।

इति पञ्चविंशेऽध्याये षष्ठी कण्डिका ।।

---

१. अध्वर्युराहवनीये सकृद्गृहीतमाज्यं जुहुयात । चतुस्त्रिंशद्धोमश्च विकल्पेन भवति, अयं तु नित्यं भवति ।

२. "तस्माऽउ हैतदुवाच । स्पृतीर्हुत्वान्यामाजतेति ब्रूतात्सा ते सम्राड्दुघा स्यादिति" ( श० ब्रा० ११।८।४।६ ) इति श्रुतेः ।

३. अन्येन होमे क्रियमाणे अग्निसमीपे आसीत ।

४. अग्निसमीपे गमनाशक्तौ खट्वादेरवत्तीर्य अधः भूमौ आसति खट्वादिसमीप एव । द्रव्यत्यागमात्रस्य करणासामर्थ्ये पत्नी त्यागं कुर्यात् । तस्या अप्यसामर्थ्ये नियुक्तः कश्चिदन्यस्त्यागं कुर्यात् ।

७

## सायमाहुत्याᳲहुतायां चेद् दुर्बलः स्यात्तदैव प्रातराहुतिस्तत्सᳲस्थाश्रुतेरग्निहोत्रस्य ॥ १ ॥

यदि सायमाहुत्यां हुतायां यजमानो दुर्बलो भवति प्रातराहुतिकालं यावन्न जीवतीत्याशङ्क्यते तदा तस्मिन्नेव काले प्रातराहुतिर्देया। कुत एतत्? तत्सᳲस्थाश्रुतेरग्निहोत्रस्य। 'प्रातराहुत्याᳲ हि सन्तिष्ठतेऽग्निहोत्रम्'। तद्धि प्रकृत्य 'सायं जुहोति प्रातर्जुहोति' इत्युच्यते। 'आग्नेयीं सायमाहुतिमाहुः सौरीं प्रातराहुतिम्' इति। उभयोरप्यग्निहोत्रसंज्ञा। नैते द्वे कर्मणी 'अग्निहोत्रं जुहोति' इत्येकवचननिर्देशात्। न चैकमेव कर्म शरद्वसन्ताग्रयणवत्पुनः प्रातरभ्यस्यते देवतान्यत्वात्। अन्या चान्या च देवतोभयत्रातः सायारम्भं प्रातरपवर्गमिदमेकं कर्मेति। एतदेव च ह्यत्रयवमग्निहोत्रं प्रकृत्य 'अग्निहोत्रं जुहुयात् स्वर्गकामः' इति श्रूयते, 'यावज्जीवमग्निहोत्रं जुहुयात्' इति च। तस्मादवयवद्वयस्याप्येकं कार्यमित्येककर्मत्वम्। यद्येकमेव कर्म तन्त्रं किमिति न भवति? कालभेदादित्यदोषः। यथा दर्शपूर्णमासयोः कार्यैकत्वेऽपि कालभेदात् नानातन्त्रता, एवमत्रापीति। तदुक्तमाचार्येण—"आवृत्तिर्वा प्रधानकालत्वात्" (का० श्रौ० २६।६।२७) इति। तथा चाह - "स यत्सायमस्तमिते जुहोति गर्भमेवैतत्सन्तमभि जुहोति गर्भᳲ सन्तमभि करोति" (श० ब्रा० २।३।१।४) इति। पुनश्च—"अथ यत्प्रातरनुदिते जुहोति प्रजनयत्येवैनमेतत्सोऽयं तेजो भूत्वा विभ्राजमान उदेति" (श०ब्रा०२।३।१।५) इति कार्यैकत्वमिव दर्शयति। तस्मात्साधूक्तं तत्संस्थाश्रुतेरग्निहोत्रस्येति ॥ १ ॥

## जीवेच्चेत्पुनः काले ॥ २ ॥

यदि पुनर्जीवति यजमानः काले प्रातराहुतिर्देया। नित्यानां हि निमित्तं कालो निमित्तमन्तरेण च नैमित्तिकं कृतमप्यकृतसममित्यभिप्रायः ॥ २ ॥

एवं प्राप्त आह—

## न वा कृतत्वात् ॥ ३ ॥

नैव प्रातराहुतिर्देया। कृता हि परिसमाप्तिस्तस्येति। ननु चोक्तम्—'कालो निमित्तभूतः' इति। निमित्तमन्तरेण नैमित्तिकं कृतमप्यकृतमिव भवति, तस्मात्पुनः क्रियेतेति? अत्रोच्यते—न प्रातर्होमस्य निमित्तं कालः। अन्यदेव हि तत्र निमित्तं सायारम्भः। अतः प्रातर्होमस्य श्रूयमाणोऽपि कालो बलादङ्गंभवति। न हि निमित्तस्यानेकत्वमिष्यते। तस्मात्कृतत्वान्न पुनः प्रातराहुतिर्देयेति ॥ ३ ॥

## पौर्णमासान्ते चामावास्यमग्निहोत्रवत् ॥ ४ ॥

तुल्यन्यायत्वात्। अधिकरणातिदेशश्चातुर्मास्यराजसूयादिष्वपि प्रदर्शनार्थः ॥४॥

## हविष्येषु चेदाह्रियमाणेषु मरणं दक्षिणाग्नावेनान्तसन्दहेत्॥

हविष्येषु चेद्व्रीहियवादिषु आह्रियमाणेषु पौर्णमासादौ यजमानस्य मरणं भवति दक्षिणाग्नावेनान्तसन्दहेत् हविष्यान् । एवं हि श्रूयते—"यदाधिश्रितेऽग्निहोत्रे यजमानो म्रियेत" इति प्रकृत्य "तदेवैनदभिपर्योधाय विष्यन्दयेत्" ( श० ब्रा० १२।५। २।५ ) । पुनश्चाह"–एतावती सर्वस्य हविर्यज्ञस्य प्रायश्चित्तिः" ( श० ब्रा० १२।४।२। ५ ) इति ॥ ५ ॥

## न वाऽयुक्तत्वात् ॥ ६ ॥

न वा दक्षिणाग्नौ सन्दहेत् अयुक्तो ह्याहरणकाले हविष्यग्रहणेन तेषां योगः ॥६॥

## गार्हपत्ये ग्रहणादि प्रागासादनात् ॥ ७ ॥

अयुक्तान्सन्दहेत्सन्निधानात् ॥ ७ ॥

## आसादनाद्याहवनीये ॥ ८ ॥

सन्दहेत्सन्निधानादेव ॥ ८ ॥

## मरणान्तं भवति ॥ ९ ॥

कर्मकर्त्तुरभावात् ॥ ९ ॥

## सꣳस्थाप्यं वा प्रक्लृप्तत्वात् ॥ १० ॥

प्रवृत्तं हि तत्तस्यापरिसमाप्तौ दोषश्रवणात् । तदुक्तमाचार्येणापि–"दोषश्चा-समाप्तौ स्यात्" ( का० श्रौ० १।४।४ ) इति । एवं पक्षद्वयोपप्रदर्शने सति य एव युक्ततरः पक्षः स एवाश्रयणीयः । कश्चासौ मरणान्तमेव भवतीति । न हि मृते यजमाने मिथ्यासङ्कल्पदोष आशङ्क्यत इति ॥ १० ॥

## हविष्यवद्धौम्यम् ॥ ११ ॥

(१)अग्निहोत्रहोमार्थमपि द्रव्यं हविष्यवद्द्रष्टव्यम् । एतदुक्तं 'गार्हपत्ये ग्रहणादि प्रागासादनात्' इत्येवमादि ॥ ११ ॥

## सन्दीपनवतीः प्रत्यग्न्यधिश्रयन्त्युखाः(२) ॥ १२ ॥

मृते यजमाने सन्दीपनवतीनामुखानां प्रत्यग्न्यधिश्रयणम् । सन्दीपनं च गोमय-शुष्ककार्पासादिना । बहुवचनं मन्त्रोच्चारणार्थम् ॥ १२ ॥

---

१. 'अग्निहोमार्थम् इ० पा० ।

२. "प्रवृञ्ज्यात्" ( श० ब्रा० १२।५।२।३ ) इत्येकवचनादेक एवाधिश्रयेत् । सूत्रे 'अधिश्रयन्ति' इति बहुवचनमधिकारिबहुत्वख्यापनार्थम् ।

सन्तापजानग्नीनादाय सशरीरा दक्षिणा गच्छन्ति ॥ १३ ॥

(१)सपिण्डाः ॥ १३ ॥

अनसा(२) ॥ १४ ॥

शरीरमुद्वहन्ति, शाखान्तरात् ॥ १४ ॥

वितानं साधयित्वा समे बहुलतृणेऽन्तराग्नी चितिं चिनोति ॥ १५ ॥

वितानसाधनमग्नीनां यथादेशस्थापनं कृत्वा समे तृणबहुले देशेऽन्तराग्नी काष्ठैश्चितिं चिनोति ॥ १५ ॥

पूर्वतरम्—

उद्धृत्यक्षीरिणीः पुरुषाह्वतीः ॥ १६ ॥

पुरुषमाह्वानं यासामोषधीनान्ता उद्धृत्य ॥ १६ ॥

विशाखशराश्मगन्धापृश्निपर्ण्यध्याण्डाश्च ॥ १७ ॥

उद्धृत्येति वर्त्तते। विशाखा—दूर्वा, शरो—मुञ्जः, पृश्निपर्णी माषपर्णी, अध्याण्डा—ढण्ढणिका ॥ १७ ॥

केशश्मश्रुनखलोमनिकृन्तनानि कृत्वा विपुरीषं चेच्छन्(३) ॥ १८ ॥

केशादि निखाय सर्पिषान्तरक्त्वा चितावेनमादधाति कृष्णाजिनमास्तीर्य प्राक्शिरसम् ॥ १९ ॥

यजमानम्। सर्पिषाभ्यञ्जनं प्रक्षालनं च विपुरीषपक्ष एव ॥ १९ ॥

---

१. सम्यक्तापाज्जायन्त इति सन्तापजाः तानग्नीन् स्थालीस्थानेवादाय यजमानशरीरसहिताः सपिण्डाः दक्षिणस्यां दिशि गच्छन्ति इति।

२, उखास्थानग्नीन्यजमानशरीरं पात्राणि च सर्वमनसि कृत्वा दक्षिणा गच्छन्ति। दाहार्थं सभ्यावसथ्यौ च प्रत्यक्षावेव स्थाल्यां कृत्वा नेयौ न सन्तापजौ।

३. इच्छन्विपुरीषमुदरं पाटयित्वा पुरीषरहितं कुर्यात्।

सप्तसु प्राणायतनेषु सप्तहिरण्यशकलान्प्रास्यति मुखे प्रथमम्(१) ॥ २० ॥

प्रक्षिपति ॥ २० ॥

दक्षिणहस्ते जुहूँ सादयति घृतपूर्णाम् ॥ २१ ॥

अधिकारमुपजीवन्नाह—

स्फ्यं च ॥ २२ ॥

दक्षिणहस्त एव (२)पाठक्रमेण सर्वपात्रचयनान्ते ॥ २२ ॥

उपभृतः सव्ये ॥ २३ ॥

सादयतीति वर्त्तते ॥ २३ ॥

उरसि ध्रुवाम् ॥ २४ ॥

मुखेऽग्निहोत्रहवणीम् ॥ २५ ॥

नासिकयोः स्रुवौ ॥ २६ ॥

खादिरौ न तावत्, आज्यग्रहणार्थत्वात् ॥ २६ ॥

कर्णयोः प्राशित्रहरणे शिरसि चमसं प्रणीताप्रणयनम् ॥ २७ ॥

कपालानि चैके ॥ २८ ॥

एके तन्नेच्छन्ति, प्रतिपत्त्यन्तरविधानात् । अभ्यवहरणं हि तेषामुक्तम् ॥ २८ ॥

पार्श्वयोः शूर्पे ॥ २९ ॥

द्वितीयं प्रतिप्रस्थातृसक्तम् । अकृतवरुणप्रघासस्य तु छित्त्वैकं द्वेधोपधीयते तैत्तिरीयपाठात् 'छित्त्वैवैकम्' इति ॥ २९ ॥

---

१. मुखे नासिकयोः चक्षुर्द्वये कर्णद्वये च सुवर्णखण्डानि सूक्ष्माणि प्रक्षिपति ।

२. अथैनमन्तरेणाग्नौश्रिति चित्वा । कृष्णाजिनमुत्तरलोम प्राचीनग्रीवं प्रस्तीर्य तस्मिन्नेनमुत्तानं निपाद्य जुहूं घृतेन पूर्णां दक्षिणे पाणावादधाति सव्यऽउपभृतमुरसि ध्रुवां मुखेऽग्निहोत्रहवणीं नासिकयोः स्रुवौ कर्णयोः प्राशित्रहरणे शीर्षंश्चमसं प्रणीताप्रणयनं पार्श्वयोः शूर्पेऽउदरे पात्रीं समवत्तधानीं पृषदाज्यवतीं शिश्नस्यान्ते शम्यामाण्डयोरन्ते वृषारवावन्वगुलूखलं च मुसलं चान्तरेणोरूऽअन्यानि यज्ञपात्राणि दक्षिणे पाणौ स्फ्यम् । (श०ब्रा० १२।५।२।७)।

उदरे पात्रीं समवत्तधानीं पृषदाज्यवतीं शिश्ने शम्यामरणी वृषणयोः ॥ ३० ॥

अन्तरोरू यज्ञपात्राण्यन्यानि ॥ ३१ ॥

उपधीयन्ते ॥ ३१ ॥

अप्स्ववहरणं मृन्मयाश्ममयानाम् ॥ ३२ ॥

अयस्मयानि वा ब्राह्मणाय दद्यात् ॥ ३३ ॥

वा एषामप्यप्स्ववहरणम् । विकल्पेन हि श्रुतौ पाठः(१) ॥ ३३ ॥

अनुस्तरणी चेत्पश्चात्कर्णमाहत्य हस्तयोर्वृक्कौ(२) ॥३४॥

अङ्गेष्वङ्गानीति जातूकर्ण्यः ॥ ३५ ॥

आह । (३)उपधीयन्ते ॥ ३५ ॥

न वाऽस्थिसन्देहात् ॥ ३६ ॥

न वाऽङ्गान्यङ्गेषूपधीयन्ते । अस्थ्नां हि सन्देहो मा भूदिति । अत उत्कृत्य मांसान्युपधेयानि ॥ ३६ ॥

वपया मुखमवच्छाद्याग्निभिरादीपयन्ति ॥ ३७ ॥

वपया च मुखाच्छादनमनुस्तरणीपक्ष एव । अनुस्तरणी गौः ॥ ३७ ॥

आहुतिं जुहोति पुत्रो भ्राताऽन्यो वा ब्राह्मणोऽस्मात्त्वमधिजातोऽसि त्वदयं जायतां पुनः । असौ स्वर्गाय लोकाय स्वाहेति ॥ ३८ ॥

---

१. अथ यान्यश्ममयानि च मृन्मयानि च भवन्ति । तानि ब्राह्मणाय दद्याच्छवोद्वहमु ह तं मन्यन्ते यस्तानि प्रतिगृह्णात्यप एवैनान्मभ्यवहरेयुरापो वा ऽअस्य सर्वस्य प्रतिष्ठा तदेनमप्स्वेव प्रतिष्ठापयति ( श० ब्रा० १२।५।२।१४ ) ।

२. कर्णप्रदेशस्य पश्चाद्भागे आहननं प्रहारं कृत्वा मारयित्वा तस्याः कुक्षिगोलकौ मृतस्य हस्तयोर्निधेयौ ।

३. प्रेतस्य हस्तपादावयवेषु अनुस्तरण्याः हस्तपादादीन्युपधेयानि ।

सकलपाठः पत्न्या अप्यनूहप्रज्ञप्त्यर्थः। ब्राह्मणग्रहणं च पुत्रभ्रात्रोः क्षत्रिय-वैश्ययोर्न्युदासार्थम् ॥ ३८ ॥

अनपेक्षमेत्योपस्पृशन्त्यपः ॥ ३९ ॥

चितिमनपेक्षमाणा एत्योपस्पृशन्त्यपः। अपामुपस्पर्शनं गृह्योक्तम् ॥ ३९ ॥

इति पञ्चविंशेऽध्याये सप्तमी कण्डिका ॥



८

सञ्चयनं चतुर्थ्यामयुग्मान् ब्राह्मणान्भोजयित्वा पलाशवृन्तेनास्थीनि परिवर्त्त्य परिवर्त्त्याङ्गुष्ठकनिष्ठिकाभ्यामादाय पलाशपुटे प्रास्यति ॥ १ ॥

'सञ्चयनम्' इति कर्मणो नामधेयम्। तत् चतुर्थेऽहनि कर्तव्यम्। अयुग्मान् ब्राह्मणान्भोजयित्वा पलाशवृन्तेनास्थीनि परिवर्त्त्य परिवर्त्त्याङ्गुष्ठकनिष्ठिकाभ्यामादाय पलाशपुटे प्रक्षिपति ॥ १ ॥

शम्यवकाः कर्दमं च श्मशाने ॥ २ ॥

चशब्दात्प्रास्यति। श्मशानशब्देन अस्थिसञ्चय उच्यत इति सम्प्रदायः। भस्मकूट इत्यपरे। ते च शमीशब्देन शमीशाखामिच्छन्ति। इतरे तु तत्पर्णानि ॥२॥

अक्त्वास्थीनि सर्वसुरभिमिश्राणि दक्षिणपूर्वायतां कर्षूं खात्वा कुशानास्तीर्य वस्त्रावकृतं च हारिद्रं वागिति निवपत्यस्मिन् ॥ ३ ॥

घृतेनाऽक्त्वाऽस्थीनि सर्वसुरभिणा मिश्रीकृत्य दक्षिणपूर्वायतां कर्षूं खात्वा तत्र कुशानास्तीर्य हारिद्रं च वस्त्रावकृत्तं 'वाक्' इत्यनेन मन्त्रेण निवपत्यस्थीनि ॥ ३ ॥

एतद्वाजसनेयकम् ॥ ४ ॥

वक्ष्यमाणं तु शाखान्तरात् ॥ ४ ॥

अनेन वा ॥ ५ ॥

मन्त्रेण निवपति ॥ ५ ॥

त्वा मनसानार्त्तेन वाचा ब्रह्मणा त्रय्या विद्यया पृथिव्या-मक्षिकायामपाᳪरसेन निवपाम्यसाविति ॥ ६ ॥

श्मशानं चिकीर्षतः कुम्भे सञ्चयनम् ॥ ७ ॥

पितृमेधं कर्त्तुमिच्छतः कुम्भे सञ्चयनं कर्त्तव्यम् । तस्मिंश्च पक्षे कुशहारिद्रा-स्तरणमस्थिसंस्काराद्धर्ममात्रत्वाच्च कुम्भ एव कर्त्तव्यम् ॥ ७ ॥

निधानं च तूष्णीम् ॥ ८ ॥

निखननं च कुम्भस्य तूष्णीं कर्त्तव्यम् ॥ ८ ॥

प्रोषितश्चेत्प्रेयात्प्राचीनावीती निवान्यां दुग्ध्वा दक्षिण-तोऽधिश्रयणोद्वासने ॥ ९ ॥

कुर्यात् ॥ ९ ॥

तत एव हरणम् ॥ १० ॥

दक्षिणत एव स्रुग्घरणं कर्त्तव्यम् ॥ १० ॥

अधस्तात्समिधे धारयन् ॥ ११ ॥

'स्रुचं हरति' इति शेषः ॥ ११ ॥

उदगग्रान् कुशान् दक्षिणाग्रान् कृत्वा ॥ १२ ॥

तांश्च स्वावसर एव ॥ १२ ॥

सकृद्वा पितृवत्पर्यस्य ॥ १३ ॥

सकृदेव पितृवदपसव्यं पर्यस्येत् । "तस्य वा ऽएतस्याग्निहोत्रस्योपचारः" ( श० ब्रा० १२।५।१।६ ) इति प्रकृत्य सर्वं ह्येतदेव श्रूयत इति ॥ १३ ॥

अतः परं कर्माचष्टे—

शरीराण्याहृत्य कृष्णाजिने पुरुषविधिं विधायोर्णाभिः प्रच्छा-द्याऽऽज्येनाभिधार्य पूर्ववद्दाहः ॥ १४ ॥

कर्त्तव्यः ॥ १४ ॥

**शरीरनाशे त्रीणि षष्टिशतानि पलाशवृन्तानां कृष्णाजिने पूर्ववत् ॥ १५ ॥**

पुरुषविध्यादि पूर्ववद्दाहान्तम् । तेषामेव सञ्चयनं पितृमेधश्च तैरेवेति ॥ १५ ॥

**अनिष्ट्वाग्रयणेन नवस्याश्नीयात्पतितस्य भुक्त्वा प्रतिगृह्य, विद्विषाणयोर्वाऽयाज्यं याजयित्वाविं प्रतिगृह्योभयादद्वा यस्याग्निभिरन्यं याजयेयुर्यो वा यजेत वैश्वानरं निर्वपेत्(१) ॥ १६ ॥**

निगदव्याख्यातम् । वैश्वानरो यजनीयेऽहनि अन्वारम्भणीयापूर्वकः ॥ १६ ॥

**कृष्णं वासो दक्षिणा ॥ १७ ॥**

**पुरोडाशे क्षामेऽवशिष्टं समाप्य तदेव पुनर्निर्वपेत् ॥१८॥**

क्षामे दग्धे पुरोडाशेऽवशिष्टं कर्म समाप्य तस्यैव हविषो निर्वापः कार्यः ॥१८॥

अत्रेदं विचार्यते । किमशेषदाहे पुनर्निर्वापः उतैकदेशदाहेऽपीति । किं तावत्प्राप्तम् । सूत्रेणेव पक्षः—

**एकदेशदग्धेऽपि संयोगात् ॥ १९ ॥**

एकदेशदग्धेऽपि नैमित्तिकं प्रवर्त्तते । कुत एतत् ?, दाहसंयोगात् । दाहसंयोगोऽत्र निमित्तम् । एकदेशदाहोऽपि दाह एवेति ॥ १९ ॥

---

१. आग्रयणेष्टया यजनमकृत्वा यदि यजमानो नवनिष्पन्नस्य धान्यस्य व्रीहियवादेरश्नीयात् तदा वैश्वानरं द्वादशकपालमग्निगुणयुक्तं यजनीयेऽहनि निर्वपेत् । तथा पतिता महापातक्यादयो विहितानधिकारिणः तेषां पतितानामन्नं भुक्त्वा किञ्चित्प्रतिगृह्य च वैश्वानरं निर्वपेत् । तथा विद्विषाणयोर्वा विद्विषाणौ द्वेषं कुर्वाणौ तयोरुभयोर्द्वेष्यद्विषतोरन्नं भुक्त्वा किञ्चिद्गवादिकं प्रतिगृह्य वा वैश्वानरं निर्वपेत् । तथा मन्वादिभिर्योऽयाज्य उक्तः तं याजयित्वा वैश्वानरं निर्वपेत् । तथा अविं मेषं प्रतिगृह्य वैश्वानरं निर्वपेत् । तथा उभयादद्वा उभयत इत्यधस्तादुपरिष्टाच्च दन्ता यस्य तदुभयादत् प्राणिषु पुरुषाश्वादिकम् तत्प्रतिगृह्य वा वैश्वानरं निर्वपेत् । तथा यस्य सम्बन्धिभिरग्निभिः अन्यं यजमानमृत्विजो याजयेयुः सोऽग्निस्वामी स्वाग्निभिरन्ययाजननिमित्तं वैश्वानरं निर्वपेत् । यो वा भ्रान्त्या अन्याग्निभिः यजेत सोऽपि निर्वपेदिति देवयाज्ञिकभाष्ये स्पष्टम् ।

## दर्शनाच्च ॥ २० ॥

दृश्यते चायमर्थो यथैकदेशदाहेऽपि भवति । 'यदा तद्धविः सन्तिष्ठतेऽथ पुनर्निर्वपेत्' इति तेनैव हविषा समाप्तिं दर्शयति । तच्चैकदेशदाह उपपद्यत इति ॥ २० ॥

एवं प्राप्त आह—

## न, नित्यत्वात् ॥ २१ ॥

नैकदेशदग्धे नैमित्तिकम् । नित्यो ह्यग्निसंयोगात् पुरोडाशस्य दाहो भवति । तत्र यस्य पुरोडाशौ क्षायत इति निमित्तशब्दोपरोधः स्यात्, सर्वस्यैवाग्निसंयोगात् पुरोडाशक्षायत्वमापद्यत इति । तस्मान्नैकदेशदाहे नैमित्तिकम् ॥ २१ ॥

यत्तु दर्शनमुक्तं तत्परिह्रियते—

## कर्मार्थं दर्शनम् ॥ २२ ॥

तद्धविः सन्तिष्ठत इत्यत्र हविःशब्देन कर्म लक्ष्यते यदा तद्धविष्कं कर्म सन्तिष्ठत इति । अशेषस्य दग्धौ सत्यां द्रव्यान्तरेण परिसमाप्तिः ॥ २२ ॥

इति पञ्चविंशेऽध्यायेऽष्टमी कण्डिका ॥



९

## पशुश्चेदुपाकृतः पलायते वायवे तमनुदिश्यान्यं तद्वर्णं तद्वयसमालभेत ॥ १ ॥

यदि पशुरुपाकृतो नश्येत् वायवे तं पशुम् 'अयं वायवे' इत्येवमनुदेशं कृत्वा अन्यस्तद्वर्णस्तद्वया आलब्धव्यः ॥ १ ॥

## उपलभ्य वायवे तम् ॥ २ ॥

पशुमुपलभ्य वायवे आलभेत मिथ्यासङ्कल्पदोषपरिजिहीर्षया ॥ २ ॥

## अनादरणं वा ॥ ३ ॥

न वा पुनरालम्भ आदर्त्तव्यः । न ह्यत्र चोदनेति ॥ ३ ॥

## प्राक् प्रयाजेभ्यश्चेन्नियुक्तो म्रियेतान्यमालभेत ॥ ४ ॥

पशुर्नियुक्तः सन् यदि प्राक्प्रयाजेभ्यो म्रियेतान्य आलब्धव्यः ॥ ४ ॥

## पूर्वस्य वपां दक्षिणाग्नौ जुहुयात् ॥ ५ ॥

तदा च पूर्वस्य वपा दक्षिणाग्नौ होतव्या ॥ ५ ॥

सोमश्चेन्मार्जालीये य ईजानाः पितरो ये पितामहा येऽनीजाना यज्ञियाः सोमपास्तेषामेष पशुरालब्धोऽग्नौ स्वाहा देवेभ्यः सुहुतो यमायेति ॥ ६ ॥

सोमश्चेन्मार्जालीये वपा होतव्या "य ईजानाः पितरः" इत्यनेन मन्त्रेण ॥६॥

अनपनया वाऽदुष्टत्वात् ॥ ७ ॥

'वा'शब्दः पक्षव्यावृत्तौ । अनपनयः पूर्वस्य पशोर्न ह्यसौ दुष्ट इति । अतस्तेनैव यागः कर्त्तव्यः । तदीयैव वपा दक्षिणाग्नौ मार्जालीये वा होतव्येति । नैमित्तिककार्यापत्त्या चात्र दक्षिणाग्निमार्जालीययोराहवनीयधर्मप्रवृत्तिः ॥ ७ ॥

अवदानहानौ नाद्रियेत ॥ ८ ॥

पश्ववदानहानावनादरः । एवं हि श्रूयते—"तस्माद्यदि किंचिदवदानꣳ हीयेत न तदाद्रियेत" ( श० ब्रा० ३।८।३।१६ ) इति ॥ ८ ॥

हृदयनाशे त्वन्यमालभेतेत्येके हृदयं पशुरिति श्रुतेः ॥९॥

एके आचार्या हृदयनाशेऽन्यं पशुमालभन्ते । तस्मादेवं श्रूयते—"हृदयमु वै पशुः" (श० ब्रा० ३।८।३।१६) इति । तन्नाशे च सर्व एव पशुर्नष्टः स्यादिति ॥ ९ ॥

सर्वेषां वाऽऽज्यस्य यजेत् ॥ १० ॥

'वा' शब्दः सूत्रद्वयोपात्तपक्षव्यावर्त्तकः । नावदानहानावनादरो न च हृदयनाशेऽन्य आलब्धव्यः यत्कारणं "यदि किञ्चिदवदानं हीयेत न तदाद्रियेत" इत्यर्थवादपरिशेषोऽयम् । किमर्थ इति चेत् । "स हृदयस्यैवाग्रेऽवद्यति" ( श० ब्रा० ३।८।३।१५ ) इत्यग्रताविधानार्थः । हृदयं वै पशुः' इत्ययमप्यर्थवादोऽग्रताविधानार्थ एव । तस्मात्सर्वेषामवदानानां प्रत्येकं नाशे आज्यस्य यजेत् ॥ १० ॥

उक्तं ह्याचार्येण—

अर्थवादमात्रं पशुवचनम् ॥ ११ ॥

इति ॥ ११ ॥

संज्ञप्यमानश्चेद्वाश्येताहुतिं जुहुयाद्यत्पशुर्मायुमकृतोरो वा पद्भिराहते अग्निर्मा तस्मादेनसो विश्वान्मुञ्चत्वꣳहस इति ॥ १२ ॥

अनेन मन्त्रेण ॥ १२ ॥

इमं मे वरुणेति च प्रत्यृचं द्वाभ्याम् ॥ १३ ॥

मन्त्राभ्यां जुहोति ॥ १३ ॥

पशूखाचेत्स्रवेत्सान्नाय्योखा वा तामभिमन्त्रयेतोखाᳪं स्रवन्ती-मगदामगन्म त्वष्टा वायुः पृथिव्यन्तरिक्षम् यतश्चु-तद्ध्रुतमग्नौ तदस्तु न तत्राप्नोति निर्ऋतिः परस्तादिति ॥ १४ ॥

अनेन मन्त्रेण । ननु च सान्नाय्योखास्रुत्यभिमन्त्रणं पशावन्वयप्राप्तत्वादवाच्यम् । नैष दोषः, सान्नाय्योखायां हि प्रधानद्रव्यच्युतिः पशूखायां तूपसर्जनोदकस्य न प्राप्नोति तेनाप्राप्तत्वादुच्यते ॥ १४ ॥

इति पञ्चविंशेऽध्याये नवमी कण्डिका ॥



१०

यूपविरोहणेऽन्तस्तन्त्रᳪं सᳪंस्थितेऽहनि—

त्वाष्ट्रं बहुरूपमालभेत ॥ १ ॥

यद्यहर्गणे तन्त्रमध्ये यूपविरोहणं भवति तदा संस्थितेऽहनि त्वष्टृदेवत्यं पशुं बहुरूपं पाटलमालभेत । सर्वाहःशेषभूतो यूपस्तन्निमित्तत्वाच्च पशुरपि सर्वाहःशेषभूत एवेति संस्थितेऽहनीत्युक्तं तत्कालता मा भूदिति । अत्र च केचित्सान्निपातिकैरेवाङ्गै-रुपेतं त्वाष्ट्रं कुर्वन्ति । आरादुपकारकाणि तु सवनीयसक्तान्येव सन्तीति तानि प्रसज्यन्ते । अपरे त्वन्यथा वर्णयन्ति-न ह्यत्र प्रसङ्गो विद्यते, प्रत्येकमहरहः सवनीयाद्यङ्ग-तन्त्रमेव विहितम् । ततश्च यद्यपि पत्नीसंयाजान्तता पदार्थपर्यवसानं तथाप्यहरहः पत्नी-संयाजान्तैरेवाङ्गैः सम्बन्धमेव द्रष्टव्यम् । अन्यथा हि सवनीयपुरोडाशादिविधानानु-पपत्तिः स्यादिति । अप्रसङ्गश्चेत्सर्वाङ्गोपेत एव त्वाष्ट्रः कर्त्तव्यः । अयमेव च पक्षो वर-तर इवाभाति ॥ १ ॥

अनूबन्ध्यायै वपामुत्खिद्यानुमर्शं गर्भमेष्टवै ब्रूयात् ॥ २ ॥

अनेन च शमिता प्रेष्यते । ततश्चाध्वर्युः प्रेषदाने ॥ २ ॥

दर्शने स्थालीं चैवोष्णीषं चोपकल्पयितवै ब्रूयात् ॥ ३ ॥

अयं शमितुः प्रतिप्रैषः । तदर्थोऽध्वर्योरेव ॥ ३ ॥

वपान्तेऽनपेक्षमध्वर्युर्यजमानो वेत्यध्वर्युः प्रेष्यति निरूहैतं गर्भमिति विरुज्य श्रोणी प्रत्यञ्चं निरूहितवै ब्रूयात् ॥४॥

प्रैषद्वयं चैतत् । उभयत्र हि क्रियापदमाम्नातं प्रेष्येति ब्रूहीति च । तत्रेतिकरणपरिच्छिन्न एकः प्रैषः शेषो द्वितीयः । प्रयोजनं मध्ये विरामः ॥ ४ ॥

निरुह्यमाणमभिमन्त्रयत एजतु दशमास्य इति पशुवदवदानं गर्भस्य ॥ ५ ॥

कर्त्तव्यम् ॥ ५ ॥

कण्ठं वावकृत्य स्थाल्यां मेधस्रावणम् ॥ ६ ॥

कर्त्तव्यम् । मेधपक्षे च स्थाल्या अमन्त्रकं प्रोक्षणं, जुहोतित्वात् ॥ ६ ॥

अवदानसहितमधिश्रित्योष्णीषवेष्टितं गर्भं पार्श्वतो निदधात्यनभिघारितमवदानवद्धृत्वा दक्षिणतो मेधं निदधाति॥

अनभिघारितमेधमन्तरा यूपाग्नी हृत्वा दक्षिणतोऽङ्गानां स्थापयति ॥ ७ ॥

प्रतिप्रस्थाता वशावदानकाले प्रचरण्यां मेधमवद्यति ॥८॥

प्रचरण्याश्च मन्त्ररहिता जुहूवत्संस्कारक्रिया । मेधस्य चोपस्तीर्य द्विरवदानं प्रत्युपस्तारश्च ॥ ८ ॥

अवदानान्यनुजुहोति यस्यै त इति ॥ ९ ॥

वशावदानान्यनुमेधं जुहोति "यस्यै त०" ( वा० सं० सं० ८।२९ ) इत्यनेन मन्त्रेण ॥ ९ ॥

अङ्गान्यहुता यस्य यस्या इति यथालिङ्गम् ॥ १० ॥

यल्लिङ्गो गर्भः ॥ १० ॥

अविज्ञाते पुंवत् ॥ ११ ॥

अविज्ञाते गर्भे पुंवत्प्रयोगः ॥ ११ ॥

स्विष्टकृद्वनस्पत्यन्तरे प्रत्येत्य प्रतिप्रस्थाता प्रचरण्याꣳ सर्वं मेधमवद्यति ॥ १२ ॥

स्विष्टकृतमनुजुहोति पुरुदस्म इति ॥ १३ ॥

अनेन मन्त्रेण ॥ १३ ॥

स्विष्टकृदन्त उष्णीषवेष्टितस्य वृन्दासञ्जनं वाप्स्ववहरणं वाखूत्करोपकिरणं वा ॥ १४ ॥

'वा'शब्दो विकल्पार्थः ॥ १४ ॥

अनुव्याहारभयं त्वेतेषु ॥ १५ ॥

"वृक्ष ऽएनं मृतमुद्धास्यन्तीति" ( श० ब्रा० ४।५।२।१३ )। तथा "अप्स्वेव मरिष्यतीति" ( श० ब्रा० ४।५।२।१४ ) निन्दार्थवादः। पक्षान्तरविधानार्थं तदभिधीयते ॥ १५ ॥

समिष्टयजुरन्ते शामित्र एव जुहुयात्तिष्ठन्मरुत इत्यस्वाहाकृत्य महीद्यौरित्यङ्गारैरभ्यूहति ॥ १६ ॥

गर्भम् ॥ १६ ॥

अग्निहोत्र आसन्नेषु चेत्पात्रेष्वाहवनीयोऽनुगच्छेद्गार्हपत्ये जुहुयात्प्राण उदानमप्यगादिति ॥ १७ ॥

अनेन मन्त्रेण ॥ १७ ॥

गार्हपत्यश्चेदाहवनीय उदानः प्राणमप्यगादिति ॥ १८ ॥

अनेन जुहोति ॥ १८ ॥

दक्षिणाग्निश्चेद्गार्हपत्ये व्यान उदानमप्यगादिति ॥ १९ ॥

जुहुयात् ॥ १९ ॥

सर्वे चेत्तूर्णं मथित्वा(१) प्रतिवातमुद्धृत्य वायव्यामाहुतिं हुत्वा यथानुपूर्व्यकरणम् ॥ २० ॥

---

१. प्रतिगतो वातं प्रतिवातः तं प्रतिवातमित्याहवनीयविशेषणम्, नत्वाभिमुख्येऽव्ययीभावो वाताभिमुखमिति। कुतः? "यां दिशं वातो वायात्तां दिशमाहवनीयमुद्धृत्य" ( श० ब्रा० ११।५।३।११ ) इति श्रुतेः।

उपावहृतेषु पात्रेषु यदि सर्वेऽग्नयोऽनुगच्छेयुः तदा तूर्णं शीघ्रं मथित्वा प्रतिवातमाहवनीयमुद्धृत्य वायव्यामाहुतिं जुहुयात्। पुनस्तमेवाहवनीयं प्राञ्चमुद्धृत्य यथानुपूर्व्यमग्निहोत्रक्रिया ॥ २० ॥

निवातं चेत्पूर्ववन्मथित्वा प्राञ्चमुद्धृत्य गार्हपत्ये संस्कृत्य पश्चादाहवनीयस्य स्वयं पानम् ॥ २१ ॥

उपावहृतेष्वेव पात्रेषु यदि निवाते सर्वेऽग्नयोऽनुगच्छेयुस्तदा पूर्ववत् तूर्णं मथित्वा प्राञ्चमाहवनीयमुद्धृत्य गार्हपत्ये संस्कृत्य। संस्कारश्चाहोमार्थत्वादभिधीयते। पश्चादाहवनीयस्योपविश्य स्वयमेव पानम्। अयञ्चाग्निहोत्रविकार इति सम्प्रदायः, अभ्युदितेष्टिवत्। अत्र पुनः श्रूयते—'सैव तत्र प्रायश्चित्तिः' इति। तेन कार्यापत्तिरशक्या वक्तुम् ॥ २१ ॥

अग्निहोत्रातिपत्तावाहुतिं जुहुयान्मनो ज्योतिर्जुषतामाज्यस्य विच्छिन्नं यज्ञꣳ समिमं दधातु या इष्टा उषसो या अनिष्टास्ताः सन्तनोमि हविषा घृतेन स्वाहेति ॥ २२ ॥

अनेन मन्त्रेण। प्रतिपत्तिश्रवणाच्च कार्यापत्तिरवगम्यते। तथा च मन्त्रलिङ्गं 'विच्छिन्नं यज्ञं समिमं दधातु' इति। तथा 'या इष्टा उषसो या अनिष्टास्ताः सन्तनोमि' इति ॥ २२ ॥

इति पञ्चविंशेऽध्याये दशमी कण्डिका ॥



११

सत्त्रायागूर्याशक्तौ विश्वजिताऽतिरात्रेण यजेत ॥ १ ॥

गूरी उद्यमे। सत्त्रायागूर्य सत्त्रायोद्यमं कृत्वा सत्त्राय सङ्कल्पे सतीत्यर्थः। एवं हि श्रूयते—"सर्वेभ्यश्छन्दोभ्यः सर्वेभ्यः पृष्ठेभ्यः सर्वेभ्यः स्तोमेभ्य आत्मानमागुरते यः सत्त्रायागुरते विश्वजिताऽतिरात्रेण यजेत" ( तै० ब्रा० १।४।७।७ ) इति ॥ १ ॥

सत्त्राङ्गं वागूर्णमात्रश्रुतेः ॥ २ ॥

'वा'शब्दः पक्षान्तरप्रतिपत्तौ। सत्त्राङ्गं वा विश्वजिद्भवति। ततश्च कृतेऽपि सत्त्रे प्रवर्त्तते। कुत एतत्? आगूरणमात्रश्रवणात्। न हि कश्चिदनागूर्य करोति। आगूरणं

अनूबन्ध्यां हि प्रकृत्य श्रूयते-"अयज्ञिया वै गर्भा" ( श० ब्रा० ४।५।२।१० ) इति, न सार्वत्रिकम्। तत्रापि चायमर्थवादो मन्त्रस्तुत्यर्थः ॥ १९ ॥

दीक्षितोऽमनोज्ञं स्वप्नं दृष्ट्वा जपेत्पर्य्यावर्त्ते दुःस्वप्न्यात्पापः स्वप्नादभूत्यै ब्रह्माहमन्तरं करवे परः स्वप्नमुखाः कृधीति ॥ २० ॥

अमुं मन्त्रम् ॥ २० ॥

इन्द्रियं स्कन्नमद्भिरुपसिञ्चेद्यो मेऽद्य पयसो रसः परि दोषादुदर्पिथः अग्निहोत्रमिव सोमेन तमहं पुनरादद इति ॥ २१ ॥

अनेन मन्त्रेण ॥ २१ ॥

उदकं चेत्तरेत्तदभिमन्त्रयेतोन्दतीर्बलं धत्तौजो धत्त सहो धत्त मा मे दीक्षां मा तपो निर्बधिष्टेति ॥ २२ ॥

अनेन मन्त्रेण ॥ २२ ॥

अवदृष्टश्च ॥ २३ ॥

'च' शब्दादनेनैव मन्त्रेणाभिमन्त्रयेत् ॥ २३ ॥

अमेध्यं दृष्ट्वा सूर्यमुपतिष्ठेताबद्धं मनो दरिद्रं चक्षुः सूर्यो ज्योतिषाᳪं श्रेष्ठो दीक्षे मा मा हासीरिति ॥ २४ ॥

अनेन मन्त्रेण ॥ २४ ॥

शोणितं चेत्कुर्याद्रुद्रियाभ्योऽद्भ्यः स्वाहेति जुहुयात् ॥ २५ ॥

निष्ठीवेच्चेत् बीभत्साभ्योऽद्भ्यः स्वाहेति ॥ २६ ॥

धावेच्चेद्वाय्रवे स्वाहेति ॥ २७ ॥

स्विद्याच्चेत्तपस्याभ्योऽद्भ्यः स्वाहेति ॥ २८ ॥

स्वप्याच्चेत्प्रजापतये स्वाहेति ॥ २६ ॥

तच्चैतद्दिवास्वापे भवति ॥ २९ ॥

आर्त्त्यश्रुकरणे तृप्राभ्योऽद्भ्यः स्वाहेति ॥ ३० ॥

छर्द्याविष्टः पयः पीत्वोदकं वा छर्दयीत निष्ट्यूत-
वद्धोमः ॥ ३१ ॥

वयसावप्रस्नुते चमसेऽन्तरिक्षेण पतति यातुधानप्रबोधितश्च-
मसं यमभ्यचुश्चुतदग्निष्टुच्छुन्धतादिह पुनः स्वाहेति ॥
अभ्युपाकृतचमसमुपरथे कृत्वाग्नऽआयाहि वीतये गृणानो
हव्यदातये निहोता सत्सि बर्हिषि स्वाहेति ॥ ३३ ॥

जुहोति । अधस्तनमनुप्राक्तते द्रष्टव्यम् ॥ ३३ ॥

आग्नीध्रीये वा हिरण्यगर्भ इत्यृचा ॥ ३४ ॥

आहवनीये वेति विकल्पः ॥ ३४ ॥

हुताहुतसꣳसर्गेऽङ्गारमन्तः परिधि निर्वर्त्त्य ॥ ३५ ॥

इति पञ्चविंशेऽध्याये एकादशी कण्डिका ॥



१२

कुशतरुणेन जुहोति हुतस्य चाहुतस्य चाहुतस्य हुतस्य
च पीतापीतस्य सोमस्येन्द्राग्नी पिबतꣳ सुतमिति ॥ १ ॥

अनेन मन्त्रेण ॥ १ ॥

वषट्कृते ॥ २ ॥

हुताहुतसंसर्गश्चाभक्षिते चमस उन्नयनम् एवं हि शाखान्तरे श्रूयते—"यस्याभक्षितं चमसमभ्युन्नयन्ति" इति ॥ २ ॥

चुश्नते स्वाहेत्यनुवषट्कृते ॥ ३ ॥

जुहोति ॥ ३ ॥

सᳫंसर्गकाले वोपपातसामर्थ्यात् ॥ ४ ॥

'वा'शब्दः पक्षान्तरपरिग्रहे । न वा वषट्कारानुवषट्कारयोर्होमः । उपपातो ह्ययं श्रूयते । नैमित्तिकस्य चोपपातकालता न्याय्येत्युक्तम् । यत्पुनरुक्तं वषट्कृतेऽनुवषट्कृते वेति । तद्धोमद्वयविषयत्वेनाशङ्क्यते ॥ ४ ॥

तस्य भक्षणं मा यजमानं तमोविदन्मर्त्विजो मा यः सोममिमं पिबा सᳫंसृष्टमभयं कृतुमिति ॥ ५ ॥

अनेन मन्त्रेण ॥ ५ ॥

अववृष्टभक्षणमिन्दुरिन्दुमवागात्तस्य त इन्द्रविन्द्रपीतस्येन्द्रियावतो गायत्रच्छन्दसः सर्वगणस्य सर्वगण उपहूत स्योपहूतो भक्षयामीति ॥ ६ ॥

अनेन मन्त्रेण ॥ ६ ॥

स्वकाल एव –

त्रिष्टुप्छन्दसो जगच्छन्दस इतियथासवनम् ॥ ७ ॥

विशेषः ॥ ७ ॥

अच्छन्दसमेके ॥ ८ ॥

छन्दः शब्दमेके न कुर्वन्ति ॥ ८ ॥

पतितं चमसमालभतेऽस्कन्पर्जन्यः पृथिवीमस्कन् गामृषभो युवा अस्कन्नेमा विश्वाभूतानि प्रस्कन्नाज्जायताᳫं हविरिति ॥ ९ ॥

अनेन मन्त्रेण । चमसशब्देन च द्रव्यं लक्ष्यते तत्संस्कारात् ॥ ९ ॥

उत्तरपूर्वे जुहोत्युपरवे चमसं दुष्टं प्रजापतये स्वाहेत्यथ येऽन्येऽनादिष्टास्तान्खरे जुहुयादग्नये वैश्वानराय स्वाहेति नाराशᳫंसश्चेदुपवायात्तदुक्तम् ॥ १० ॥

नाराशंसश्चेच्छुष्येत । तदुक्तं "पूतभृतश्चमसान्" ( का० श्रौ० ९।५।२१ ) इति । उत्तरेण सह विकल्पार्थमिदमुच्यते ॥ १० ॥

**अन्त्याद्वा ग्रहात्स्तोकमासिच्य भक्षयेयुः ॥ ११ ॥**

आग्रयणोऽन्त्यो ग्रह उच्यते अन्तसम्बन्धात् ॥ ११ ॥

**कलशश्चेदुपवायात्क्षीरासेचनमेके ॥ १२ ॥**

द्रोणकलशश्चेच्छुष्येत क्षीरासेचनमेके कुर्वन्ति ॥ १२ ॥

एके—

**हिरण्यवद्वोदकम् ॥ १३ ॥**

**उन्नयने च ॥ १४ ॥**

एतदेव भवति । उन्नयन्त्यस्मादित्युन्नयनं पूतभृदुच्यते ॥ १४ ॥

**अद्रिभेदने मारुतेन ब्रह्मसाम्ना स्तुवीरन् ॥ १५ ॥**

अद्रौ भिन्ने मरुल्लिङ्गास्वृक्षु ब्रह्मसाम क्रियते । ब्रह्मसाम च माध्यन्दिने ब्राह्मणाच्छंसिविग्रहस्तोत्रम् ॥ १५ ॥

**चतुस्त्रिंशद्धोमश्च ॥ १६ ॥**

अद्रिभेदने भवति ॥ १६ ॥

**सोमापहरणे विधावतेच्छतेति ब्रूयात् ॥ १७ ॥**

अध्वर्युर्बहुविषयात्वात्प्रेषणस्य ॥ १७ ॥

**अदर्शनेऽरुणपुष्पाण्यर्जुनान्यभिषुणुयात् ॥ १८ ॥**

अर्जुनशब्दश्चात्र तृणविषयः । 'अभिषव' शब्देन च यागसाधनत्वोपलक्षणम् । श्रुतप्रतिनिधिरयम् । ततश्च सोमशब्देनोपलक्षणम् ॥ १८ ॥

**(१)श्येनहृतं पूतीकानादारानरुणदूर्वा हरितकुशान्पूर्वालाभे पूर्वालाभ उत्तरान् ॥ १९ ॥**

---

१. खदिरादेर्बहुकालीनस्य वृक्षस्य ये वल्लीरूपा अङ्कुरा उत्पद्यन्ते तच्छ्येनहृतमित्युच्यते । तथा पूतीकान् अस्यैवं व्याख्यानम् आदारानिति । अथवा आदारानभिषुणुयात् तद्व्याख्यानं पूतीकानिति । श्रुत्युक्तं पदमुपादाय पर्यायान्तरप्रयोगं करोति सूत्रकारः । श्रुत्युक्तं चादारानित्येतत् । पूतीका रोहिषतृणमिति निघण्टौ । तथा अरुणदूर्वा अव्यक्तरागा दूर्वाः । तथा हरितकुशान् अशुष्कानार्द्रान्दर्भान् । माधवाचार्यास्तु पूतीकान् श्यामलान् सोमसदृशान् लताविशेषान् पूतीकसंज्ञानभिषुणुयादिति व्याख्यातवन्तः ।

अभिषुणुयात्। एवं ह्यत्र श्रूयत इति ॥ १९ ॥

## एकां गा दत्त्वा समाप्य पुनर्यज्ञः ॥ २० ॥

अत्र च गोः सङ्ख्यासम्बन्धो यद्गाः तदेकामिति। ततश्च हिरण्यादीनाम-निवृत्तिः ॥ २० ॥

## अवभृथान्ते वा श्रुतिसामर्थ्यात् ॥ २१ ॥

अवभृथान्त एव वा पुनर्यज्ञो भवति। तथा "अथावभृथादेवोदेत्य पुनर्दीक्षेत" ( श० ब्रा० ४।५।१०।६ ) इति श्रुतेः ॥ २१ ॥

## कलशभेदने वषट्कारनिधनं ब्रह्मसाम ॥ २२ ॥

कर्तव्यम् ॥ २२ ॥

## अनुलिप्सध्वमिति प्रेष्यति ॥ २३ ॥

अध्वर्युः। अन्ये चानुलिप्सन्ते ॥ २३ ॥

## यदनुलभेरंस्तदेकधनैरभ्युन्नीय प्रभावयन्तःप्रचरेयुः ॥२४॥

## आग्रयणाद्वाऽनुपलभमानेषु पूर्ववत् ॥ २५ ॥

अनुपलभ्यमाने सोमे आग्रयणादादाय एकधनैरभ्युन्नीय पूर्ववत्प्रभावयन्तः प्रचरेयुः ॥ २५ ॥

## अनीतासु चेद्दक्षिणासु भेदनं पूर्ववद्दत्त्वा तथैव यज्ञः ॥२६॥

"स यद्यनीतासु दक्षिणासु कलशो दीर्येत तत्राप्येकामेव गां दद्यादथावभृथा-देवोदेत्य पुनर्दीक्षेत" ( श० ब्रा० ४।५।१०।७ ) इति हि श्रुतेः ॥ २६ ॥

इति पञ्चविंशेऽध्याये द्वादशी कण्डिका ॥

१३

## प्रातः सवनाच्चेत्सोमोऽतिरिच्येत तमुन्नीयोपाकरणमस्ति सोमो अयमिति ॥ १ ॥

मन्त्रान्तरविधानादितरो निवर्त्त्यते ॥ १ ॥

मरुत्वतीषु गायत्रेण स्तुवीरन् ॥ २ ॥

मरुल्लिङ्गासु ऋक्षु गायत्रेण साम्ना स्तुवीरन् ॥ २ ॥

ऐन्द्रावैष्णवꣳ होता शꣳसति ॥ ३ ॥

ऐन्द्रावैष्णवं शस्त्रं होता शंसति ॥ ३ ॥

यस्मात्स्तोमादतिरिच्येत स एव कार्यः सर्वत्र ॥ ४ ॥

यत्स्तोमसमनन्तरं सोमातिरेको भवति स एव कार्यः सर्वत्र । सर्वत्रग्रहणात्सवनान्तरेऽपि ॥ ४ ॥

माध्यन्दिनाच्चेत्पूर्ववदुपाकरणम् ॥ ५ ॥

कर्तव्यम् ॥ ५ ॥

बण्महाँ२ असीति बृहतीष्वादित्यवतीषु गौरीवितेन स्तुवीरन् ॥ ६ ॥

गौरीवितं साम, तेन स्तुवीरन् ॥ ६ ॥

एतत्कृत्वोक्थ्यं पूर्ववद्धोता ॥ ७ ॥

'ऐन्द्रावैष्णवꣳ शꣳसति' इति एतदुक्तं भवति ॥ ७ ॥

तृतीयसवनाच्चेद्विष्णोः शिपिविष्टवतीषु गौरीवितेन ॥८॥

तृतीयसवनाच्चेदतिरिच्येत शिपिविष्टविष्णुलिङ्गासु ऋक्षु गौरीवितेन स्तुवीरन् ॥ ८ ॥

वा गृहीत्वा विगृह्णीयात् ॥ ९ ॥

'वा' शब्दाद्यदि पूर्वेण न निःशेषितः सोमस्तत उक्थ्यं गृहीत्वा विगृह्णीयात् ॥९॥

उक्थ्याच्चेत्षोडशी कार्यः ॥ १० ॥

उक्थ्यसंस्थाच्चेत्तृतीयसवने सोमोऽतिरिच्येत षोडशी कर्तव्यः ॥ १० ॥

षोडशिनश्चेदतिरात्रः ॥ ११ ॥

'कर्तव्य' इति वर्त्तते ॥ ११ ॥

अतिरात्राच्चेद्बृहत् ॥ १२ ॥

स्तोमः कर्तव्यः ॥ १२ ॥

महाव्रतमेके यथोक्तम् ॥ १३ ॥

प्रदेशान्तरे ॥ १३ ॥

अप्तोर्यामो वा अन्त्याच्चेत्तस्यैवावृत्तिः ॥ १४ ॥

अन्त्यशब्देनाप्तोर्यामोऽभिधीयते । ततश्चेदतिरिच्येत तस्यैवावृत्तिः कार्या ॥१४॥

(१)नातीरेकोऽस्तीति श्रुतेः ॥ १५ ॥

"न ह्यतोऽभ्यधिकोऽतिरेकोऽस्ति" इति श्रुतेः ॥ १५ ॥

पूर्वात्सवनादतिरिक्तस्योत्तरे सम्पावनमेके ॥ १६ ॥

एके आचार्याः पूर्वसवनातिरिक्तसोममुत्तरे सवने सम्पावयन्ति अस्य विधेरर्थवादोऽयम् ॥ १६ ॥

तं निकामयमानोऽभ्यतिरिच्येत इति श्रुतेः ॥ १७ ॥

तमुत्तरसवनसोमं निकामयमानः पूर्वसोमोऽभ्यतिरिच्यते यद्यहमुत्तरं सवनसोमं प्राप्स्यामीति ॥ १७ ॥

तृतीयसवनाच्चेद्धारियोजनेऽवनीयहोमः ॥ १८ ॥

अस्मृतावृजीषमिश्रस्याप्स्ववहरणम् ॥ १९ ॥

यदि हारियोजनकाले न स्मर्यते तदा ऋजीषमिश्रमप्सु अवहरेत् ॥ १९ ॥

दीक्षितश्चेदुपतप्येतोप्यानां येनेच्छेत्तेन चिकित्सेत् ॥२०॥

उप्यानि च सर्वसुरभीणि तेषां येनेच्छेत्तेन चिकित्सेत् ॥ २० ॥

आग्नीध्रमेनं नयतेति ब्रूयात् कृतं चेत् ॥ २१ ॥

अध्वर्युर्बहुवचनान्तत्वादन्येनेतारस्तत्राग्नीध्रं यदि कृतं भवति तदैव ब्रूयादिति ॥२१॥

एवं प्राप्त आह—

अकृतेऽप्यविशेषात् ॥ २२ ॥

अकृतेऽप्याग्नीध्रे आग्नीध्रमेनं नयतेति वक्तव्यमेव । अविशेषेण हि श्रूयते—"तस्माद्यं दीक्षितानामबल्यं विन्देदाग्नीध्रमेनं नयतेति ब्रूयात्" ( श० ब्रा० ३।६।१।२९ ) इति ॥ २२ ॥

---

१. न ह्यप्तोर्यामात्परं संस्थान्तरमस्त्यतिरिक्तविनियोगाय ।

तदा च—

तद्देशे वासः ॥ २३ ॥

दीक्षितस्य भवति ॥ २३ ॥

वासतीवरमुदकमाचामेदित्येके चात्वालगताभ्यः ॥ २४ ॥

वसतीवरीभ्यः ॥ २४ ॥

तत्र मन्त्रमाह—

आपः प्रजापतिर्यज्ञो यज्ञस्य भेषजमसीति ॥ २५ ॥

अनुसवनमेनमालभेरन्वसव एतद्वः प्रातःसवनं तद्रक्षध्वं तद्गोपायध्वं तद्वो मा व्यवच्छैत्सीदिति ॥ २६ ॥

रुद्रा आदित्या इत्युत्तरयोः सवनयोः ॥ २७ ॥

विशेषः ॥ २७ ॥

म्रियेत चेन्निर्मन्थ्येन दग्ध्वा शामित्राद्वाऽस्थीन्युपनह्य नेदिष्ठिनमुपदीक्ष्य तेन सह यजेरन् ॥ २८ ॥

मृतं यजमानं निर्मन्थ्येन शामित्रेण वा दग्ध्वास्थीन्युपनह्य तस्य यो नेदिष्ठी स्वो भ्राता स्यात् तं दीक्षयित्वा तेन सह यजेरन् ॥ २८ ॥

सत्रगणयज्ञे सहत्वशब्दात् ॥ २९ ॥

एतच्च सत्रे भवति गणयज्ञे च 'तेन सहयजेरन्' इति सहत्वशब्दात् ॥ २९ ॥

एकयज्ञे दर्शपूर्णमासवत् ॥ ३० ॥

"मरणान्तं भवति" ( का० श्रौ० २५।७।९ ) इत्येतदुक्तं भवति ॥ ३० ॥

एतत्कृत्वा राजानमभिषुत्यागृहीत्वा ग्रहान् दक्षिणपूर्वस्यां वेदिस्रक्त्यां यामेन स्तुवीरन् ॥ ३१ ॥

यथोपदेशमेतत्कृत्वा राजानमभिषुत्य ग्रहानगृहीत्वैव दक्षिणपूर्वस्यां वेदिस्रक्त्यां यामेन साम्ना स्तुवीरन् ॥ ३१ ॥

तिसृषु पराक्षु सार्पराज्ञीषु ॥ ३२ ॥

तिसृषु पराचीषु अनभ्यावृत्तासु सार्पराज्ञीषु स्तुवीरन्निति। बहुवचनादुद्गातारः ॥ ३२ ॥

मार्जालीये वा ॥ ३३ ॥

स्तुवीरन्निति विकल्पः ॥ ३३ ॥

स्तुते मार्जालीयं त्रिः परियन्त्यपसव्यꣳ सव्योरूनाघ्नानाः स्तोत्रिया जपन्तः ॥ ३४ ॥

स्तुते स्तोत्रे उद्गातारो मार्जालीयमपसव्यं त्रिः परियन्ति सव्योरूनाघ्नानाः स्तोत्रियाश्च जपन्तः ॥ ३४ ॥

अग्न आयूꣳषि पवस इति प्रतिपद्भवति ॥ ३५ ॥

पवमानस्य प्रथमा ऋक्प्रतिपदुच्यते ॥ ३५ ॥

संवत्सरेऽस्थीनि याजयेयुः ॥ ३६ ॥

प्रयोजकव्यापारेण प्रयोज्यव्यापारो लक्ष्यते अस्थीनि याजयेरन्निति। यथा—'निषादस्थपतिं याजयेत्' इति ॥ ३६ ॥

इदं विचार्यते-किं मरणात्संवत्सरेऽस्थियज्ञः, उत कर्मापवर्गादिति। नियमकारिशास्त्राभावाद् अनियमे प्राप्त आह—

कर्मापवर्गादसम्भवान्मरणस्य ॥ ३७ ॥

कर्मापवर्गात्संवत्सरेऽस्थियज्ञः। न हि मरणं संवत्सरविशेषणत्वेन सम्भवति कदाचित्सत्रमध्येऽपि संवत्सरः पूर्यत इति। तस्मात्कर्मापवर्गादेव संवत्सरेऽस्थियज्ञः ३७

अपरिमितस्तोमेन यजेरन् ॥ ३८ ॥

ज्योतिष्टोमे हि स्तोमपरिमाणमुक्तम्, इहापरिमितस्तोमोऽभिधीयते, वचनात् ॥ ३८॥

त्रिवृद्बहिष्पवमानेन वा ॥ ३९ ॥

अस्थीनि यजेरन् ॥ ३९ ॥

तदा च—

सप्तदशमन्यत् ॥ ४० ॥

सप्तदशस्तोमकमन्यद्भवति ॥ ४० ॥

## मैत्रावरुणाग्रान् ग्रहान् गृह्णीयात् ॥ ४१ ॥

'ऐन्द्रवायवात्पूर्वं मैत्रावरुणो गृह्यते' इत्युक्तम्, एतद् व्यूढच्छन्दसि द्वादशाहे ॥४१॥

## प्रातिनिधिको याजमानं कुर्यात् ॥ ४२ ॥

नह्यस्थ्नां कर्तृत्वं सम्भवति ॥ ४२ ॥

## दीक्षणीयापुरुषसंस्काराशीर्वर्जम् ॥ ४३ ॥

क्रियते ॥ ४३ ॥

## समाप्तेऽस्थीनि सपात्राण्यरण्ये निवपेयुः ॥ ४४ ॥

प्रतिपत्त्यन्तराविधानात् ॥ ४४ ॥

## पुनर्दाहो वा युक्तत्वात्पात्राणाम् ॥ ४५ ॥

वाशब्दः पक्षान्तरपरिग्रहे। पुनर्दाहो भवति नारण्ये निवापः कुत एतत्? युक्तत्वात् पात्राणाम्। तानि हि प्रतिपत्त्या युज्यन्ते, द्वितीयान्तनिर्देशात्। "दक्षिणहस्ते जुहूँ सादयति" ( का०श्रौ० २५।७।२१ ) इत्येवमादि। अतस्तत्संस्कारात् पुनर्दाहः। यद्यपि चाहिताग्निमिर्दहन्ति यज्ञपात्रैश्चेति करणता पात्राणां, तथापि सादने प्रतिपत्तिस्त्वेषा द्वितीयान्तनिर्देशात्। तस्मात्साधूक्तं 'पुनर्दाहो वा युक्तत्वात्पात्राणाम्' इति ॥४५॥

## ततः सञ्चयनादि ॥ ४६ ॥

तत ऊर्ध्वं सञ्चयनादि कर्त्तव्यम् ॥ ४६ ॥

इति पञ्चविंशेऽध्याये त्रयोदशी कण्डिका ॥

## १४

## उखां चेद्बिभ्रन्म्रियेत सोपकरणमाहिताग्न्यावृता दग्ध्वा नेदिष्ठोऽग्निं चित्वा तमस्मा अनुदिशेदित्येके ॥ १ ॥

उखाभरणेन साग्निकोऽहर्गणो लक्ष्यते। तत्र चेन्म्रियेत कश्चिद्यजमानः सोपकरणमाहिताग्न्यावृता दहेत्। एवं ह्यत्र श्रूयते—"यद्यु म्रियते स्वैरेव तमग्निभिर्दहन्त्यशवाग्निभिरितरे यजमाना आसत इति" ( श० ब्रा० १२।३।५।२ ) तत्र च नेदिष्ठोऽग्निं चित्वा तमस्मा अनुदिशेदित्येके। नेदिष्ठो हि तत्कार्यं करोति एवं च तत्कार्यं कृतं भवति यदि तत्फलमनुदिशतीत्यभिप्रायः ॥ १ ॥

## न कर्मफलासम्भवात् ॥ २ ॥

नैतदेवं फलानुदेशः कर्त्तव्य इति । न हि कर्मफलप्रदानं सम्भवति । अकृताभ्यागमकृतविप्रणाशप्रसङ्गात् । तस्मान्नैवानुदेशः कर्त्तव्यः ॥ २ ॥

## उपदीक्षी स्वेष्वग्निषु नखनिकृन्तनाद्युद्वादनान्तꣳ सान्निपातिकम् ॥ ३ ॥

उपदीक्षी नेदिष्ठी स्वानग्नीन्विहृत्य नखनिकृन्तनाद्युद्वादनान्तꣳ सान्निपातिकं कर्म करोति ॥ ३ ॥

## तेषूपहवमिष्ट्वाग्नी सꣳसृजेत ॥ ४ ॥

दीक्षिता उपह्वयध्वमित्येवमुपहवमिष्ट्वाऽग्निसंसर्गं कुर्यात् ॥ ४ ॥

## अनाहिताग्निश्चेत्तेष्वेवेत्येके वैश्वानरं निर्वपेत् यस्याग्निभिरन्यं याजयेयुरिति वचनात् ॥ ५ ॥

यद्यनाहिताग्निर्नेदिष्ठी भवति तदा तेष्वेवाग्निषु नखनिकृन्तनादि करोति, ततश्च वैश्वानरनिर्वापः कार्यः । एवं हि श्रूयते—"यस्याग्निभिरन्यं याजयेयुर्यो वा यजेत् वैश्वानरं निर्वपेत्" ( का०श्रौ २५।८।१६ ) इति । तस्य चायमेव विषय इत्यभिप्रायः ॥ ५ ॥

एवं प्राप्त आह—

## नाश्रुतेः ॥ ६ ॥

नैतदेवं तेष्वेवाग्निषु नेदिष्ठ्यपि करोतीति । न ह्येवं श्रूयत इति ॥ ६ ॥

वैश्वानरस्य तर्हि को विषयः ?

स उच्यते –

## आपदि वैश्वानरः ॥ ७ ॥

सत्रसम्मोहे सति परकीयैरग्निभिर्योगे कृते वैश्वानर इति ॥ ७ ॥

## समानजनपदसꣳसवे महारात्रे प्रातरनुवाकमुपाकृत्य पूर्वः पूर्वः कर्म प्रवर्त्तयेत् ॥ ८ ॥

"राजन्यः समानजनः" ( का० श्रौ० २२। ।२९ ) इत्युक्तम् । तेषां यदि संसवो भवति । समित्येकीभावे अनद्यन्तरेऽगिर्यन्तरे वा संसवो भवति तत्र कर्म महारात्रे प्रातरनुवाकमुपाकृत्य इतरोऽपि इतरापेक्षयाप्रपूर्वः कर्म प्रवर्त्तयेत् ॥ ८ ॥

## सुसमिद्धहोमः ॥ ९ ॥

कर्त्तव्यम् ॥ ९ ॥

## संस्थोत्तरं च कुर्यात् ॥ १० ॥

इतरापेक्षयेव संस्थोत्तरं कर्त्तव्यम् ॥ १० ॥

## इच्छन्वृषण्वती प्रतिपत् ॥ ११ ॥

पवमानस्य प्रथमा स्तोत्रिया प्रतिपदुच्यते । सेच्छन्वृषण्वतीति इच्छयान्वयप्राप्तैव ॥ ११ ॥

## अनुसवनं वा ॥ १२ ॥

'अनु'शब्दः प्रतिशब्दस्यार्थे । प्रतिसवनं वा वृषण्वती भवति न बहिष्पवमान एवेति विकल्पः ॥ १२ ॥

## बृहद्रथन्तरपृष्ठः ॥ १३ ॥

संसवस्तोमः कार्यः । एवं हि श्रूयते—"संसव उभे कुर्यात् गोसव उभे कुर्यात् अभिजितावप्येकाहे उभे बृहद्रथन्तरे कुर्यात्" इति ॥ १३ ॥

## तौरश्रवसे माध्यन्दिने पवमाने तदावपनश्रुतेः ॥ १४ ॥

तौरश्रवसे सामनी माध्यन्दिने पवमाने प्रक्षेप्तव्ये । कुत एतत्, तदावपनश्रुतेः । तत्र ह्यावापः श्रूयते—तदेव प्रकृत्य "अत्र ह्यावपन्ति" "अत्रोद्वपन्ति" इति ॥ १४ ॥

## आभीकमभिनिधनमाभीशवानि चैके ॥ १५ ॥

एके आचार्या आभीकाद्यान्यपि सामान्यावपन्ति ॥ १५ ॥

## प्रातःसवने जुहोति संवेशायोपवेशाय गायत्र्यै छन्दसेऽभिभूत्यै स्वाहेति ॥ १६ ॥

अनेन मन्त्रेण । आगन्तुत्वादन्ते ॥ १६ ॥

## त्रिष्टुभे जगत्या इत्युत्तरयोः सवनयोः ॥ १७ ॥

विशेषः ॥ १७ ।

## (१)विहवीयसजनीयकयाशुभीयानि होता शंसति ॥१८॥

---

१. 'विहव' शब्दोऽस्मिन्नस्तीति विहवीयम् 'ममाग्ने वर्चं' इति । यो जात एव प्रथमो मनस्वानिति सखा । सजनीयमिति देवयाज्ञिकाः ।

सूक्तनामधेयान्येतानि बहिष्पवमानस्तोत्रसमनन्तरं यच्छस्त्रं तत्रैतानि होता शंसति ॥ १८ ॥

सख्यमरणमिच्छन्तः प्राजापत्यर्चा जुहुयुः ॥ १९ ॥

सखिसम्बन्धि साख्यं तन्मरणमिच्छन्तः प्राजापत्यर्चा जुहुयुः ॥ १९ ॥

प्रातःसवनेऽध्वर्युर्माध्यन्दिने होतोद्गाता तृतीयसवने॥२०॥

जुहोति ॥ २० ॥

अनुसवनं ब्रह्मा गृहपतिश्च ॥ २१ ॥

जुहुतः ॥ २१ ॥

सर्वमरणमिच्छन्तः सर्वेऽनुसवनम् ॥ २२ ॥

सर्वेषां प्रतिपक्षनिक्षिप्तानां मरणमिच्छन्तः सर्व एवैतेऽनुसवनं जुह्वति ॥ २२ ॥

नद्यन्तरेऽसंसवो गिरिभिच्चेत् ॥ २३ ॥

गिरिं भित्त्वा या नद्यागता तदन्तरे संसवो न भवति, संसवसोमनिमित्तं न भवतीत्यर्थः(१) ॥ २३ ॥

गिरौ ॥ २४ ॥

गिर्यन्तरेऽप्यसंसवः ॥ २४ ॥

रथाह्ने च ॥ २५ ॥

असंसवः । यावन्तं प्रदेशमह्ना रथो गच्छति तदन्तेऽप्यसंसवः ॥ २५ ॥

सर्वत्राऽविद्विषाणानाम् ॥ २६ ॥

अविद्विषाणानां तु सर्वत्रैवासंसवः ॥ २६ ॥

विद्वेषेऽप्ययं वायुर्महान्त्समुद्र इति श्रुतेः ॥ २७ ॥

अन्यतरविद्वेषेऽप्यसंसवो भवति । एवं हि श्रूयते-"वायुः समुद्रश्च विद्वेष्टि कृतमपहरन्ति" ( शाङ्खा० सू० १३।५।२३ ) इति ॥ २७ ॥

सोमदाहे यथास्वं वृत्तान्तान्धारयेयुः ॥ २८ ॥

---

१. यत्र द्वयोर्वैरिणोः सहप्रारब्धयज्ञयोर्मध्ये व्यवधायिका नदी भवति तत्र संसवो न भवतीति ।

धारणं स्वपदार्थानामनुस्मरणम् ॥ २८ ॥

प्रतिनिधाय यथापूर्वं यज्ञेन चरेयुः ॥ २९ ॥

प्रतिनिधाय सोमद्रव्यं स्वपदार्थेभ्यः यथापूर्वं यज्ञेन चरेयुः ॥ २९ ॥

पञ्च गा दत्त्वा प्राग्द्वादश्याः पुनर्यज्ञः ॥ ३० ॥

अत्र गोः संख्यासम्बन्धो या गास्ताः पञ्च। ततश्च हिरण्यादीनामनिवृत्तिः द्वादशाहः प्राक्पुनर्यज्ञः ॥ ३० ॥

तत्र तद्दद्याद्यत्पूर्वस्मिन्दास्यन्त्स्यात्सत्रेऽप्यविशेषात् ॥ ३१ ॥

सत्रेऽपि सोमदाहे भवत्येवैतत्। कुत एतत्? अविशेषात् ॥ ३१ ॥

दानं प्रायश्चित्तसंयोगात् ॥ ३२ ॥

न वादाक्षिणत्वात् ॥ ३३ ॥

न वा दानं प्रवर्त्तते, "अदक्षिणानि हि सत्राणि" इति ॥ ३३ ॥

तस्य त्वहः पुनराहारः ॥ ३४ ॥

'भवति' इति सूत्रशेषः ॥ ३४ ॥

ब्रह्मा प्रायश्चित्तानि जुहुयादनादिष्टानि ॥ ३५ ॥

यान्यनादिष्टनिमित्तानि। यथा—"यदि दीक्षासु किञ्चिदापद्येत" (श० ब्रा० १२।६।१।७) इति, तन्निमित्ताविशेषे आदिष्टानि तानि ब्रह्मा जुहोति। एवं हि श्रूयते—"ता ब्रह्मेव जुहुयात्" (श० ब्रा० १२।६।१।३८) इति व्याहृत्यङ्गीकरणेन स्त्रीलिङ्ग-बहुवचनान्तता। यथा—"यद्युक्तो भूरिति चतुर्गृहीतमाज्यं गृहीत्वा" इत्येवमादि महाव्याहृतीरेव प्रकृत्य श्रूयते "यदेव त्रय्यै विद्यायै शुक्रं ते ब्रह्मत्वम्" (श० ब्रा० ११।५।८।६,४) इति ॥ ३५ ॥

ब्रह्मा विलिष्टं सन्दधातीति श्रुतेः ॥ ३६ ॥

विलिष्टं दुरिष्टं यत्तद्ब्रह्मा सन्दधाति, "यद्वै यज्ञस्य दुरिष्टं तद्ब्रह्मा सन्दधाति" इति श्रुतेः ॥ ३६ ॥

त्रिवेदसंयोगाच्च ॥ ३७ ॥

अपि च वेदत्रयविहितकर्मसंयोगो ब्रह्मण एवेति ॥ ३७ ॥

इति पञ्चविंशेऽध्याये चतुर्दशी कण्डिका ॥

इति कर्कभाष्यसहिते कात्यायनसूत्रे पञ्चविंशोऽध्यायः।



# षडविंशोऽध्यायः

## प्रवर्ग्यः

### १

आधानादीनि पितृमेधान्तानि कर्माण्यभिधाय वेदान्तरविहितान्येकाहादीन्युक्त्वा तेषामेव यानि नैमित्तिकान्यङ्गानि 'भिन्ने जुहोति' इत्येवमादीनि, यानि च नैमित्तिकान्येव पुरुषार्थरूपाणि क्षामवत्यादीनि तान्यप्यभिहितानि। इदानीमवसरप्राप्तः प्रवर्ग्योऽनुविधेयस्तदर्थं सूत्रमारभ्यते—

**(१)दीक्षासु महावीरान्त्सम्भरति ॥ १ ॥**

दीक्षाशब्दवाच्यः पदार्थो निरूपितः। तासु वर्त्तमानासु महावीरान्त्सम्भरति महावीरान्करोतीत्यर्थः। महावीरैश्चोपलक्षितमन्यदप्यत्र पिन्वनादि सम्भ्रियत एवेति। प्रयोजनं तेषामप्यन्तराये प्रयोक्तृत्वम् ॥ १ ॥

तानाह—

**अन्तःपात्यदेशे सम्भारान्निदधाति ॥ २ ॥**

**मृदं वल्मीकवपां वराहविहतं पूतीकानजापयो गवेधुकाः कृष्णाजिनमभ्रिं चोत्तरतः(२) ॥ ३ ॥**

**देवस्य त्वेत्यभ्रिमादायौदुम्बरीं वैकङ्कतीं वारत्निमात्रीᳪं सव्ये कृत्वा दक्षिणेनालभ्य जपति युञ्जत इति(३) ॥ ४ ॥**

---

१. अनेकदीक्षापक्षे यस्मिन्नहनीच्छा भवति। एकदीक्षापक्षे च दीक्षितोऽयं ब्राह्मण इति प्रैषानन्तरं प्रागस्तमयात् महावीरसम्भरणं अपणान्तं कृत्वा आपाकादुद्धरणं प्रातः कर्तव्यम्। महावीरग्रहणं पिन्वनरौहिणकपालानामप्युपलक्षणम्।

२. मृत्पिण्डम्—उपदीकाभिः कृतो मृत्सञ्चयः, तस्य वपेव वपा मध्यवर्ती लोष्ठः। वराहः—सूकरः तेन विहतं तदुत्खातां मृत्तिकाम्। पूतीकान्—रोहिषपुष्पाणि। गवेधुकाः—जलसन्निहितमहातृणजानि शुक्लानि फलानि। एतान्सम्भारान् प्राक्संस्थानुदक्संस्थान्वा निधाय कृष्णाजिनमभ्रिं च वक्ष्यमाणलक्षणामेतेषां सम्भाराणामुत्तरतो निदधाति इति देवयाज्ञिकाः।

३. उदुम्बरतरूत्थां विकङ्कततरूत्थां वा हस्तप्रमाणामभ्रिं "देवस्य त्वा०" (वा० सं० ३७।१) इति मन्त्रेणादाय वामहस्ते तां कृत्वा दक्षिणहस्तेन स्पृष्ट्वा "युञ्जते मन०" (वा० सं० ३७।२) इति मन्त्रं जपतीति सूत्रार्थः।

सव्यहस्तस्थितायाः एवालभ्य जपो यथा स्यादिति दक्षिणग्रहणम् ॥ ४ ॥

मृदमादत्ते पिण्डवद्देवी द्यावापृथिवी इति ॥ ५ ॥

दक्षिणोत्तराभ्यां पाणिभ्याम् । "दक्षिणः साभ्रिः" ( का० श्रौ० १६।२।३० ) इति वतिना निर्दिश्यते ॥ ५ ॥

कृष्णाजिने निदधात्युत्तरतः ॥ ६ ॥

मृदम् ॥ ६ ॥

देव्यो वम्र्य इति वल्मीकवपाम् ॥ ७ ॥

'आदत्त' इति वर्त्तते ॥ ७ ॥

इयत्यग्र इति वराहविहतम् ॥ ८ ॥

आदत्ते ॥ ८ ॥

इन्द्रस्यौजस्थेति पूतीकान् ॥ ९ ॥

मखायेति पयः ॥ १० ॥

तूष्णीं गवेधुकाः ॥ ११ ॥

'आदत्त' इति सर्वत्रानुषङ्गः ॥ ११ ॥

सम्भृतानभिमृशति मखायेति ॥ १२ ॥

"तान्सम्भृतानभिमृशति" ( श० ब्रा० १४।१।२।१४ ) इत्युपदेशाद्युगपदभिमर्शनम् ॥ १२ ॥

कृष्णाजिनं परिगृह्योत्तरतः परिवृतं गच्छन्ति प्रैतु ब्रह्मणस्पतिरिति ॥ १३ ॥

बहुवचनोपदेशात्सर्वेषां मन्त्रः । परिवृवं च पूर्वं कृतमेव द्रष्टव्यम् । तद्भूतोपदेशात्करणस्याचोदितत्वात् ॥ १३ ॥

परिवृते निदधाति सम्भारानुद्धतावोक्षिते सिकतोपकीर्णे प्राग्द्वारे मखायेति ॥ १४ ॥

अनेन मन्त्रेण ॥ १४ ॥

सम्भारैः सꣳसृजति मखायेति ॥ १५ ॥

मृदमादाय मखायेति महावीरं करोति प्रादेशमात्रमूर्ध्व- मासेचनवन्तं मेखलावन्तं मध्यसंगृहीतमूर्ध्वं मेखला- यास्त्र्यङ्गुलम् ॥ १६ ॥

मृदादानं तूष्णीम् . मन्त्रेण महावीरकरणम् ॥ १६ ॥

निष्ठितमभिमृशति मखस्य शिर इति ॥ १७ ॥

अनेन मन्त्रेण ॥ १७ ॥

आदानमेके ॥ १८ ॥

कुर्वन्ति ॥ १८ ॥

एवमितरौ प्रतिमन्त्रम् ॥ १९ ॥

एवमितरौ महावीरौ प्रतिमन्त्रं करोति ॥ १९ ॥

स्रुक्पुष्कराकृती पिन्वने रौहिणकपाले परिमण्डले मृदमुप- शयान्निदधाति ॥ २० ॥

पदार्थतया ॥ २० ॥

गवेधुकाभिः श्लक्ष्णयति मखायेति प्रतिमन्त्रम् ॥ २१ ॥

श्लक्ष्णनं च मृन्मार्ष्टीकरणम् । एतदेव तासां सम्भरणप्रयोजनम् ॥ २१ ॥

अश्वशकृता धूपयत्यश्वस्य त्वेति प्रतिमन्त्रम् ॥ २२ ॥

उखावदग्निः प्रदहनं च मखायेति प्रतिमन्त्रम् ॥ २३ ॥

'उखावत्' इति निर्मन्थ्यो दक्षिणाग्निर्वा ॥ २३ ॥

पक्वानुद्धरत्यृजवे त्वेति प्रतिमन्त्रम् ॥ २४ ॥

'उद्धपामि' इति चाध्याहारः साकाङ्क्षत्वात् ॥ २४ ॥

अजापयसावसिञ्चति मखायेति प्रतिमन्त्रम् ॥ २५ ॥

साकाङ्क्ष एवाऽतो यथार्थमध्याहारो युक्तरूप इति ॥ २५ ॥

तूष्णीं पिन्वनादीनां करणाभिमर्शनश्लक्ष्णनधूपनप्रद-
हनोद्धरणावसेचनानि ॥ २६ ॥

इति षड्विंशेऽध्याये प्रथमा कण्डिका ॥

२

उपसदा चरिष्यंश्चरिष्यन्प्रवर्ग्येण चरति सप्रवर्ग्ये ॥ १ ॥

ननु चैतदुक्तमेव–"प्रवर्ग्योपसदावत' (का० श्रौ० ८।२–१३) इति, अवाच्यमत्र। सत्यमेवम्, तत्र समासनिर्देशात् इह क्रमार्थोऽयमारम्भः ॥ १ ॥

अपिहितद्वारे प्रवर्ग्यचरणम् ॥ २ ॥

विमिते ॥ २ ॥

पत्न्यदर्शनम् ॥ ३ ॥

सन्निधानेऽपि सति दर्शनमात्रप्रतिषेधः ॥ ३ ॥

अननूक्तिभिश्च ॥ ४ ॥

'च' शब्दाददर्शनम्। नानूक्तयो येषान्तेऽननूक्तयः ॥ ४ ॥

यावदुक्तम् ॥ ५ ॥

कर्मप्रत्यक्षविधानाद्धर्मोणाम्। अतोऽपूर्वः प्रवर्ग्यः। यथा–पिण्डपितृयज्ञः सत्यपि द्रव्यसामान्ये, तद्व्ययमपि ॥ ५ ॥

परिघर्म्यमौदुम्बरम् ॥ ६ ॥

भवति ॥ ६ ।

मौञ्जं त्रिवृद्रज्जव्यम् ॥ ७ ॥

रज्जुजातं मौञ्जं त्रिवृद्भवति ॥ ७ ॥

बाल्वजं विवानमासन्द्यौदुम्बर्या स्कन्धमात्र्याः ॥ ८ ॥

परिघर्म्यमौदुम्बरमित्युक्तेऽपि पुनरुच्यते अरत्निमात्राङ्गोपलक्षणार्थम्। तथा शाखान्तरात्। दृष्टा ह्यौदुम्बरी ज्योतिष्टोमेऽरत्निमात्राङ्गी ॥ ८ ॥

पूर्वेण गार्हपत्यं प्राचः कुशानास्तीर्य्य पात्रासादनं द्वन्द्वम् ॥ ९ ॥

गार्हपत्यस्य पुरस्तात्प्रागग्रेषु कुशेषु द्वन्द्वं पात्राण्यासादयति ॥ ९ ॥

तान्याह—

उपयमनीं महावीरं परीशासौ पिन्वने रौहिणकपाले रौहिणहवन्यौ स्रुचावनुत्कीर्णे स्थूणामयूखं धृष्टी शतमाने मुञ्जप्रलवान्विकङ्कतशकलान्विंशतिं प्रादेशमात्रान् स्रुवं मुञ्जवेदं धवित्राणि परिधींश्च रज्जुसन्दानमासन्दीं कृष्णाजिनमभ्रिः सिकताः खरार्था अर्थवच्च ॥ १० ॥

अर्थवच्च यत्तदासादयति पृथक्पाठकरणं कार्यक्रमो यथा स्यादिति। इतरेषां तु पाठक्रम एव ॥ १० ॥

प्रोक्षणीः संस्कृत्योद्यम्योत्थायाह ब्रह्मन्प्रचरिष्यामो होतरभिष्टुहि प्रस्तोतः सामानि गायेति ॥ ११ ॥

प्रोक्षणीसंस्कारो यथादृष्टः प्रदेशान्तरे ॥ ११ ॥

ब्रह्मानुज्ञातो यमाय त्वेति महावीरं प्रोक्षति ॥ १२ ॥

ब्रह्मानुज्ञातग्रहणं प्रागनुज्ञायाः सर्वप्रैषोच्चारणप्रज्ञप्त्यर्थम् ॥ १२ ॥

प्रतिमन्त्रं वा वाक्य भेदात् ॥ १३ ॥

प्रतिमन्त्रमेव वा प्रोक्षणम्। कुत एतत्? वाक्यभेदात्। भिन्नानि हि वाक्यानि "यमाय त्वा, मखाय त्वा, सूर्यस्य त्वा तपसे" ( श० ब्रा० १४।१।३।४,५,६ ) इति। न च समुच्चयो न्याय्यः, न च विकल्पः, दृष्टार्थत्वात्। तस्मात्प्रतिवाक्यमेव प्रोक्षणम् ॥ १३ ॥

परिघर्म्यं च तूष्णीम् ॥ १४ ॥

परिघर्म्यं च यदासादितं तच्च तूष्णीं प्रोक्षति ॥ १४ ॥

पूर्वया द्वारा स्थूणामयूखं निर्हृत्य दक्षिणतो निखनति होतुः सन्दर्शने ॥ १५ ॥

(१)स्थूणामयूखं पूर्वया द्वारा निर्हृत्य दक्षिणतो निखनति सन्दर्शने होतुः ॥१५॥

गार्हपत्याहवनीया उत्तरेण खरौ निवपति दक्षिणतोऽनुभित्त्युच्छिष्टखरम् ॥ १६ ॥

खरे उद्धतावोक्षिते सिकतोपकीर्णे। संस्कारनिमित्तो हि खरशब्दः ॥ १६ ॥

पूर्वेणाहवनीयꣳ सम्राडासन्दीं पर्याहृत्य दक्षिणतः प्राचीमासादयति राजासन्द्या उत्तरतः कृष्णाजिनमस्यामास्तृणाति तस्मिन्नन्नभ्यूपशये निदधाति महावीरौ चावच्छादयेद्वा ॥

'वा'इति विकल्पः ॥ १७ ॥

अन्यो वा परिधर्म्यर्ययोजनमध्वर्योः कालसम्पत्तेः ॥ १८ ॥

अन्यो वा स्थूणामयूखनिर्हरणादि करोति। कुत एतत्? अध्वर्योः कालसम्पत्तिर्हि भवति। "स यत्रैताꣳ होतान्वाहाञ्जन्ति यं प्रथयन्तो न विप्रा इति तदेतं प्रचरणीयं महावीरमाज्येन समनक्ति" (श० ब्रा० १४।१।३।१३) इति। यदि हि परिधर्म्यर्ययोजनमध्वर्युः कुर्यात्, कालो न सम्भाव्येत। तस्माद् बहिरङ्गत्वात्प्रतिप्रस्थाता परिधर्म्यर्ययोजनं करोति ॥ १८ ॥

अञ्जन्तीत्युच्यमाने देवस्त्वेत्यनक्ति महावीरमाज्यꣳ संस्कृत्य ॥ १९ ॥

संस्कारश्च पूर्णाहुतिकः ॥ १९ ॥

रजतशतमानं खर उपगूहति पृथिव्याः सꣳस्पृश इति ॥२०॥

अनेन मन्त्रेण। शतमानं च रक्तिकाशतेन ॥ २० ॥

इति षड्विंशेऽध्याये द्वितीया कण्डिका ॥

---

१. शालायाः पूर्वद्वारेण स्थूणामयूखं निष्काश्य शालाया दक्षिणस्यां दिशि निखनति, गार्हपत्यसमीपे उपविष्टो होता यत्र निखातां स्थूणां मयूखं च द्रष्टुं शक्नोति। तस्मिन्स्थाने इत्यर्थः। दक्षिणद्वारस्यापरद्वार्या दक्षिणतः स्थूणां, पूर्वद्वार्या दक्षिणतो मयूखमिति केचित्।

३

शुक्रं गायेति प्रेष्यति ॥ १ ॥

पत्नी शिरः प्रोर्णुते ॥ २ ॥

स्वयमेव, प्रथमान्तनिर्देशात् ॥ २ ॥

सᳲंसीदस्वेत्युच्यमाने मुञ्जप्रलवान् द्विगुणानादीप्य प्रतिदिशं खरे करोति ॥ ३ ॥

"सᳲंसीदस्व०" ( वा० सं० ११–३७ ) इति यदा होता पठति तदा मुञ्जप्रलवान् खरे करोति ॥ ३ ॥

तेषु महावीरमाज्यवन्तमर्चिरसीति ॥ ४ ॥

तेष्विति मुञ्जप्रलवेषु ॥ ४ ॥

अनाधृष्टेति वाचयति प्रादेशमध्यधि धारयन्तम् ॥ ५ ॥

वाचनं च शाखान्तरात् ॥ ५ ॥

प्रतिदिशमेके ॥ ६ ॥

मन्त्रलिङ्गात् "अनाधृष्टा पुरस्तात्पुत्रवती दक्षिणत" इत्येवमादि । यद्येवं तदा वचनेऽसति लिङ्गाद्विभागो नावगम्यते । अथ तु वचनमिदं तदा विकल्प इति ॥ ६ ॥

विश्वाभ्यो मेति दक्षिणत उत्तानं पाणिं निदधाति ॥ ७ ॥

तत्राधिकाराद्यजमान एव । "अथास्यामाशिष आशास्त" इति प्रकृत्य ह्येवमुच्यते–"अथ दक्षिणत उत्तानेन पाणिना निह्नुत" (श०ब्रा०१४।१।३।१८,२४)इति॥७॥

मनोरश्वेति प्रादेशमुत्तरतः ॥ ८ ॥

'निदधाति' इति वर्त्तते ॥ ८ ॥

धृष्टिभ्यां भस्मना परिकीर्याङ्गारैश्च विकङ्कतशकलैः परिश्रयति त्रयोदशभिः प्रागुदग्भिः स्वाहा मरुद्भिरिति ॥९॥

धृष्टिभ्यामुपवेषाभ्यां महावीरं भस्मना परिकीर्याङ्गारैश्च विकङ्कतशकलैः परिश्रयति त्रयोदशभिः प्रागुदग्भिः "स्वाहा मरुद्भिः" ( वा० सं० ३७।१३ ) इत्यनेन मन्त्रेण । द्वौ प्राञ्चावुपदधाति शेषांस्तूष्णीम् ॥ ९ ॥

अधिकं दक्षिणतो द्वौ मन्त्रेण सुवर्णशतमानेनापि दधाति दिवः सꣳस्पृश इति ॥ १० ॥

महावीरम् ॥ १० ॥

इति षड्विंशेऽध्याये तृतीया कण्डिका ॥

४

चन्द्रङ्कायेति च प्रेष्यति ॥ १ ॥

'च'शब्दादपिदधाति ॥ १ ॥

कृष्णाजिनावकृत्तैर्द्धवित्रै रुपवाजयति त्रिभिर्दण्डवद्भिर्मधुमध्विति ॥ २ ॥

अनेन मन्त्रेण ॥ २ ॥

एकं प्रयच्छति प्रतिप्रस्थात्रेऽपरमग्नीधे धून्वन्तस्त्रिस्त्रिः परिक्रामन्ति पितृवद्देववच्च ॥ ३ ॥

पितृवत् अपसव्यम् । देववच्च धून्वन्तः प्रदक्षिणम् ॥ ३ ॥

रुचिते वोत्तरम् ॥ ४ ॥

उत्तरं परिक्रमणं रुचिते वा घर्मे भवति विकल्पः ॥ ४ ॥

अर्चिषि प्राप्ते सुवर्णशतमानं निधायाज्येन महावीरं परिषिञ्चति स्रुवेण प्रतिप्रणवम् ॥ ५ ॥

अर्चिषि प्राप्ते महावीरे सुवर्णशतमानमपनीय महावीरमाज्येन स्रुवेण परिषिञ्चति प्रणवे प्रणवे होतुः ॥ ५ ॥

रौहिणावधिश्रयति तूष्णीं ग्रामपिष्टानाम् ॥ ६ ॥

ग्रामपिष्टानां रौहिणौ पुरोडाशावधिश्रयति । तूष्णीमिति लौकिकवागुच्चारणप्रतिषेधः । ग्रामपिष्टानामिति च न पेषणक्रिया ॥ ६ ॥

## आज्यधर्माः स्थानापत्तेः ॥ ७ ॥

रौहिणयोर्ये नाम सान्निपातिका धर्मास्ते आज्यसम्बन्धिनो भवन्ति । कुत एतत् ? स्थानापत्तेः । आज्यभागस्थानापन्नौ ह्येताविति । "यदाज्यभागावन्यत्र जुह्वत्यथ कस्मादत्र न जुहोति" इति प्रकृत्य, "चक्षुषी वा एते यज्ञस्य यदाज्यभागौ चक्षुषी रौहिणौ नेच्चक्षुषा चक्षुरभ्यारोहयाणि" ( श० ब्रा० १४।२।२।५२ ) इति स्थानापत्तिः । तेनोक्तम्—आज्यधर्मा स्थानापत्तेरिति ॥ ७ ॥

## औषधधर्मा वा संस्कारशब्दात् ॥ ८ ॥

'वा' शब्दः पक्षान्तरपरिग्रहे । औषधधर्मा वा भवन्ति, नाज्यधर्माः । कुत एतत् ? संस्कारशब्दात् । संस्कारो ह्ययं कपालयोः श्रपणम् । तेन पुरोडाशावेताविति पौरोडाशिका धर्माः । यत्तु-स्थानापत्तिरुक्ता सोऽर्थवादः ॥ ८ ॥

## ईडे द्यावापृथिवी इत्युच्यमाने परिधीन्परिधाय रौहिणौ उद्वास्य स्रुचोरासादयत्याहवनीयाद्दक्षिणोत्तरौ ॥ ९ ॥

## अप्नस्वतीमित्युच्यमाने रुचितो धर्म इत्याहोपोत्तिष्ठन्घर्मस्य तन्वौ गायेति प्रेष्यति ॥ १० ॥

अत्र च छान्दोग्ये कालश्रवणम्—"अभीन्धने तु घर्मस्य तन्वौ गायेत्" ( लाट्या० १।६।२५ ) इति । तथा च प्रागभीन्धनात्प्रैषदानम् ॥ १० ॥

## परिक्रम्योपतिष्ठन्तेऽकृतं चेद्गर्भो देवानामिति ॥११॥

बहुवचनोपदेशाच्च सर्वेषामुपस्थानम् । तथा च "षड्डुपतिष्ठन्ते" ( श० ब्रा० १४। १।४।१ ) इति श्रुतिः ॥ ११ ॥

## अपोर्णोति पत्नीशिरः ॥ १२ ॥

समासश्चायं न वाक्यम् । तथा च श्रुतिः-"अथ पत्न्यै शिरोपवृत्य महावीर-मीक्षमाणां वाचयति" ( श० ब्रा० १४।१।४।१६ इति ॥ १२ ॥

## त्वष्टृमन्त इत्येनां वाचयति महावीरमीक्षमाणाम् ॥ १३ ॥

## अहः केतुनेति दक्षिणं रौहिणं जुहोति मन्त्रक्रमेणोत्तरं रात्रिरिति सायम् ॥ १४ ॥

विशेषः ॥ १४ ॥

इति षड्विंशेऽध्याये चतुर्थी कण्डिका ॥

५

**देवस्य त्वेति रज्जुसन्दानमादायेड एहीति गामाह्वयति नाम्ना च त्रिरुच्चैरपरेण गार्हपत्यं गच्छन् ॥ १ ॥**

"देवस्य त्वा" इत्यनेन मन्त्रेण रज्जुसन्दानमादाय धर्मधुग्बन्धनार्थाय पाशावती रज्जुः । तस्या एव पश्चात्पादनियोजनार्थं सन्दानं, तदादाय जघनेन गार्हपत्यं गच्छन् "इड ऽएहि" इति गामाह्वयति ॥ १ ॥

**नाम्ना त्रिरुच्चैराह्वानम् ॥ २ ॥**

**धेनु गोयेति प्रेष्यति ॥ ३ ॥**

प्रस्तोतारम् ॥ ३ ॥

**अदित्यै रास्नेति गां पाशेन प्रतिमुच्य स्थूणायां बध्वा पूषासीति वत्समुत्सृजति ॥ ४ ॥**

तदीयमेव ॥ ४ ॥

**सन्दाय घर्माय दीष्वेति वत्समुन्नयति ॥ ५ ॥**

सन्दाय पश्चात्पादयोर्नियुज्य "घर्माय दीष्वा" ( वा० सं० ३८।३ ) इत्यनेन मन्त्रेण वत्समुन्नयति ॥ ५ ॥

**अश्विभ्यां पिन्वस्वेति पिन्वने दोग्धि ॥ ६ ॥**

एनाङ्गाम ॥ ६ ॥

**स्वाहेन्द्रवदिति विप्रुषोऽभिमन्त्रयते ॥ ७ ॥**

ये पिन्वने पतिताः ऋजुः ॥ ७ ॥

**यस्ते स्तन इति स्तनमालभते ॥ ८ ॥**

काण्वपाठे 'स्तनानालभत' इति । तथा च सर्वेषामालम्भो युगपच्छक्यत्वात् ॥८॥

**एवं प्रतिप्रस्थाताऽजां मयूखे तूष्णीम् ॥ ९ ॥**

दोग्धि ॥ ९ ॥

पयो गायेति प्रेष्यति ॥ १० ॥

प्रस्तोतारम् ॥ १० ॥

उत्तिष्ठ ब्रह्मणस्पत इत्युच्यमाने उपेत्तिष्ठति ॥ ११ ॥

"उत्तिष्ठ ब्रह्मणस्पत" ( वा० सं० ३४।५६ ) इत्यस्मिन्मन्त्रवाक्ये होत्रोच्यमाने उत्तिष्ठत्यध्वर्युः ॥ ११ ॥

उपद्रव पयसेत्युच्यमाने गच्छत्युर्वन्तरिक्षमिति ॥ १२ ॥

•होत्रोपद्रव पयसेत्युच्यमाने विमितं प्रति गच्छति "उर्वन्तरिक्षम्" ( वा० सं० ३८।५ ) इति ॥ १२ ॥

परीशासावादत्ते गायत्रं छन्दोऽसीति प्रतिमन्त्रम् ॥ १३ ॥

ऋजुः ॥ १३ ॥

वसिष्ठशफौ गायेति प्रेष्यति ॥ १४ ॥

प्रस्तोतारम् ॥ १४ ॥

ताभ्यां महावीरं प्रतिगृह्णाति द्यावापृथिवीभ्यां त्वा परिगृह्णामीति ॥ १५ ॥

'ताभ्याम्' इति परीशासावुच्येते ॥ १५ ॥

उद्यम्य मुञ्जवेदेनोपमृज्योपयमन्योपगृह्णात्यन्तरिक्षेणोपयच्छामीति ॥ १६ ॥

उद्यम्योत्क्षिप्य परीशासाभ्यां महावीरं मुञ्जवेदेनोपमृज्य उपयमन्या स्रुचोपगृह्णाति "अन्तरिक्षेणोपन्यच्छानि" ( वा० सं० ३८।६ ) इति ॥ १६ ॥

अजापयसावसिच्य शान्ते गोः पयोऽवनयतीन्द्राश्विनेति ॥

अजापयसावसिच्य महावीरं शान्ते गोः पयोऽवनयति "इन्द्राश्विना" ( वा० सं० ३८।६ ) इत्यनेन मन्त्रेण ॥ १७ ॥

इति षड्विंशेऽध्याये पञ्चमी कण्डिका ॥

६

प्रैतु ब्रह्मणस्पतिरित्युच्यमाने—

समुद्राय त्वेति वातनामानि जपति गच्छन्नाहवनीयम्॥१॥

होत्रा "प्रैतु ब्रह्मणस्पतिः" ( वा० सं० ३७।७ ) इत्यस्मिन्मंत्रवाक्ये उच्यमाने "समुद्राय त्वा" इति जपति गच्छन्नाहवनीयम् ॥ १ ॥

स्वाहा घर्मायेत्युपयमन्यासिञ्चति घर्मे ॥ २ ॥

यदुपयमन्यां पतितं पयो घृतं वा, घर्मे तदासिञ्चति ॥ २ ॥

स्वाहा घर्मः पित्र इति जपित्वाऽतिक्रम्याश्राव्याह घर्मस्य यजेति ॥ ३ ॥

प्रेष्यति ॥ ३ ॥

वषट्कृते जुहोति विश्वा आशा इति ॥ ४ ॥

दिविधा इति त्रिरुत्कम्पयति ॥ ५ ॥

महावीरम् ॥ ५ ॥

स्वाहाऽग्नय इत्यनुवषट्कृते ॥ ६ ॥

जुहोति ॥ ६ ॥

अश्विना घर्ममिति ब्रह्मानुमन्त्रयते ॥ ७ ॥

हुतं द्रव्यम् ॥ ७ ॥

अपातामिति यजमानः ॥ ८ ॥

तदेवानुमन्त्रयते ॥ ८ ॥

इषे पिन्वस्वेति पिन्वमानमनुमन्त्रयते ॥ ९ ॥

तदेव द्रव्यम् ॥ ९ ॥

धर्मासीत्युत्क्रामत्युत्तरपूर्वार्धम् ॥ १० ॥

"धर्मासि" ( वा० सं० ३८।१४ ) इत्यनेन मन्त्रेण उत्तरपूर्वार्धमुत्क्रामति ॥१०॥

अमेन्यस्मे इति खरे करोति ॥ ११ ॥

महावीरम् ॥ ११ ॥

विकङ्कतशकलैर्जुहोति घर्मे न्यज्य स्वाहा पूष्णे शरस इति प्रतिमन्त्रम् ॥ १२ ॥

विकङ्कतशकलैर्घर्मद्रव्ये न्यक्त्वा न्यक्त्वा तदेव जुहोति "स्वाहा पूष्णे शरस" ( वा० सं० ३८–१५ ) इति प्रतिमन्त्रम् ॥ १२ ॥

हुत्वा हुत्वा प्रथमपरिघा उपश्रयति ॥ १३ ॥

विकङ्कतशकलान् ॥ १३ ॥

चतुर्थमहुतमुदङ्ङीक्षमाणो दक्षिणतो बर्हिष्युपगूहति ॥

शकलम् ॥ १४ ॥

सप्तमं च सर्वलेपाक्तं दक्षिणेक्षमाणः प्रतिप्रस्थात्रे प्रयच्छति॥

'सर्वलेपाक्तम्' इति सर्वमभ्युक्तम् । चशब्दादहुतम् ॥ १५ ॥

तꣳ स उत्तरतः शालाया उदञ्चं निरस्यति ॥ १६ ॥

तमेव शकलम् ॥ १६ ॥

स्वाहा सं ज्योतिषेत्युपयमन्यामासिञ्चति घर्म्यम् ॥ १७ ॥

'घर्म्य'शब्देन द्रव्यमुच्यते ॥ १७ ॥

रौहिणं जुहोति ॥ १८ ॥

द्वितीयम् ॥ १८ ॥

उपश्रितानि च प्रहरति ॥ १९ ॥

उपश्रितानि यानि शकलानि तानि प्रहरति । चशब्दादनन्तरमेव ॥ १९ ॥

अग्निहोत्रावृता हुत्वा वाजिनवद्भक्षयन्ति मधु हुतमिति॥

अनेन मन्त्रेण । धर्मर्त्विजो बहुवचनोपदेशात् । आवृच्छब्देन च होममात्रावृदेवोच्यते । द्रव्यप्रधानत्वादुपदेशस्य । तत्रापि केचिदेकामेवाहुतिमिच्छन्ति । आहुतिद्वयमित्यपरे । 'वाजिनवत्' इति च समुपहावं भक्षणम् ॥ २० ॥

उच्छिष्टखरे प्रक्षाल्योपयमनीं निदधाति अत्र वोपश्रितप्रहरणꣳ सꣳसाद्यमानायानुवाचयति ॥ २१ ॥

संसाद्यमानायानुब्रूहीत्येवम् ॥ २१ ॥

## संसाद्यमानेभ्य इत्येके ॥ २२ ॥

अनुवाचनं कारयन्ति। स चायं विकल्पः। शास्त्रस्य तुल्यत्वात् ॥ २२ ॥

## सूयवसाद्भगवतीत्युच्यमाने यवसोदके धेनवे प्रयच्छन्त्येके ॥

एके न प्रयच्छन्ति ॥ २३ ॥

## सर्वमासन्द्यां करोति ॥ २४ ॥

पात्रजातम् अनाशाय ॥ २४ ॥

## अभीममिति महावीरम् ॥ २५ ॥

(१)आसन्द्यां करोति ॥ २५ ॥

## (२)सकृदासादनप्रोक्षणे खरस्थूणामयूखकृष्णाजिनाभ्युपशयासन्दीनाम् ॥ २६ ॥

आरादुपकारकत्वात् ॥ २६ ॥

## आवृत्तिर्वा प्रधानकालत्वात् ॥ २७ ॥

अथवा आवृत्तिर्भवति न सकृदासादनादि। कुत एतत्? प्रधानकालीनमासादनं प्रोक्षणं च। (३)'प्रधानावृत्त्या च तदावृत्तिर्न्याय्या' इति ॥ २७ ॥

इति षड्विंशेऽध्याये षष्ठी कण्डिका ॥

---

१. "अभीमम्०" ( वा० सं० ३८।१७ ) इत्यनेन प्रचरणीयं घर्ममासन्द्यां करोति। इतराणि तु पात्राणि तूष्णीम्। ततः शान्तिकरणं द्वारद्धटनंचेत।

२. सकृदेकवारमेव प्रथमे प्रवर्ग्यचरण एव भवतो न प्रतिप्रवर्ग्यचरणम्। खरार्थानां सिकतानामिति देवयाज्ञिकाः।

३. द्रव्यसंस्कारकत्वात्ते सन्निपत्योपकारके।
कथं भाष्ये तयोरारादुपकारकतोच्यते ॥
दृष्टार्थंसादनं तत्रादृष्टार्थं प्रोक्षणं मतम्।
अतः कैमुतिकन्यायान्नेयं भाष्यं न तत्त्वतः ॥
अन्यत्राप्यग्निहोत्रादौ यच्चारादुपकारकम्।
तदप्यावर्तते यत्नात् किमु वाच्यं च संस्कृतौ ॥

७

उपसदन्ते प्रवर्ग्योत्सादनम्(१) ॥ १ ॥

'कर्त्तव्यम्' इति सूत्रशेषः ॥ १ ॥

अन्तःपात्ये परिघर्म्यं निधाय दक्षिणेन निर्हृत्योच्छिष्ट-खरम् ॥ २ ॥

निदधाति ॥ २ ॥

आहवनीये त्रीञ्छालाकान् प्रदीप्य प्रदीप्याग्नीध्रो धारयति शतरुद्रियवत्प्रतिलोमं प्रमाणेषु चतुर्गृहीतेनाभिजुहोति या ते घर्मदिव्याशुगिति प्रतिमन्त्रम् ॥ ३ ॥

अध्वर्युः । यत्तु—धारयमाणो जुहोतीति । तद्धार्यमाणो द्रष्टव्यम् ॥ ३ ॥

प्रास्य तृतीयमुपविश्य ॥ ४ ॥

जुहोति ॥ ४ ॥

क्षत्रस्य त्वेति निष्क्रमणं पुरस्तात्पत्नीमन्तर्धाय ॥ ५ ॥

"क्षत्रस्य त्वा" ( वा० सं० ३८।१९ ) इत्यनेन मन्त्रेण निष्क्रमणं पत्नीमग्रतः कृत्वा ॥ ५ ॥

साम प्रेष्यत्यवभृथवद्देशाः ॥ ६ ॥

प्रतिपत्तव्याः ॥ ६ ॥

निधनं च(२) ॥ ७ ॥

अवभृथवदेव ॥ ७ ॥

---

१. उपसत्समासान्ते ( का० श्रौ० ८।३।१८ ) प्रवर्ग्योत्सादनं भवति । "स वै तृतीयेऽह्नन् षष्ठे वा द्वादशे वा प्रवर्ग्योपसदौ समस्य प्रवर्ग्यमुत्सादयति" ( श० ब्रा० १४।३।१।१ ) इति श्रुतेः ।

२. अवभृथवत् सर्वे निधनमुपयन्ति इत्यर्थः ।

उत्सादनदेशं गच्छन्त्यनग्ना उत्तरवेदिम्(१) ॥ ८ ॥

अग्नौ तूक्तमेव ॥ ८ ॥

त्रिः परिषिच्याचिक्रददिति ॥ ९ ॥

तामेवोत्तरवेदिम् ॥ ९ ॥

मन्त्रक्रमेण वा ॥ १० ॥

परिषेचनं भवति। वाशब्दो विकल्पार्थः ॥ १० ॥

नाभिस्पृशं प्रवृञ्जनीयं निदधाति चतुःस्रक्तिरिति ॥११॥

अनेन मन्त्रेण ॥ ११ ॥

प्राञ्चावितरौ ॥ १२ ॥

मन्त्रावृत्या महावीरौ ॥ १२ ॥

उपशयां च तूष्णीम् ॥ १३ ॥

'च'शब्दान्निदधाति ॥ १३ ॥

परीशासावभितः ॥ १४ ॥

स्थापयति ॥ १४ ॥

रौहिणहवन्यौ चावकृष्टे वाह्ये ॥ १५ ॥

'च'शब्दान्निदधाति ॥ १५ ॥

अभ्रिमुत्तरत आसन्दीं दक्षिणतः कृष्णाजिनमुत्तरतः सर्वतो धवित्राणि परिधींश्च रज्जुसन्दानं वेदमुपयमन्यामाधाय पश्चात् ॥ १६ ॥

प्राचीं निदधाति ॥ १६ ॥

---

१. सामगानानन्तरमुत्सादनदेशं प्रति सर्वे गच्छन्ति। उत्सादनं महावीरादीनां परित्यागः स यत्र देशे विहितः श्रुयौ "तं वै परिष्यन्द उत्सादयेत्" (श० ब्रा० १४।३।१।१४) इति। अनग्नौ अग्निरहिते अनग्निचित्ये यज्ञे उत्तरवेदिं प्रति गच्छन्ति 'उत्तरवेदौ त्वेवोत्सादये०" (श० ब्रा० १४।३।१५।१५)। इति श्रुतेः अग्नौ तु प्रागुक्तमेव—अग्नौ परिष्यन्दे वेति। परिष्यन्दो द्वीपः जलपरिवृतो निर्जलो देश इति।

**पश्चात्पिन्वने चाभितो दण्डम् ॥ १७ ॥**

दण्डमभितः पश्चाद्भागे पिन्वने निदधाति ॥ १७ ॥

**स्थूणामयूखम् ॥ १८ ॥**

पश्चात् । ऊरु संस्तवात् ॥ १८ ॥

**पश्चाद्रौहिणकपाले ॥ १९ ॥**

जानुसंस्तवात् तयोरेव ॥ १९ ॥

**धृष्टी च ॥ २० ॥**

'च'शब्दात्तयोरेव पश्चात् पादसंस्तुतेः ॥ २० ॥

**मध्येऽन्यत् ॥ २१ ॥**

घर्मोपयुक्तम् ॥ २१ ॥

**खरा उत्तरतो दक्षिणतो मार्जालीयदेशं बहिर्वेद्युच्छिष्टखरम् ॥ २२ ॥**

'निदधाति' इत्यनुवर्त्तते ॥ २२ ॥

**आसेचनवन्ति पयसः पूरयति घर्मैतत्त इति ॥ २३ ॥**

अनेन मन्त्रेण आसेचनवन्ति भवन्ति ॥ २३ ॥

**शेषं व्रतमिश्रं दीक्षिताय प्रयच्छति ॥ २४ ॥**

प्रयः ॥ २४ ॥

**प्रत्तं चेत्केवलम् ॥ २५ ॥**

प्रत्तं चेद्व्रतं केवलमेव प्रयच्छति ॥ २५ ॥

**अत्र वा परिषेचनम् ॥ २६ ॥**

उत्तरवेदेः कार्यम् ॥ २६ ॥

**वार्षाहरेष्टाहोत्रीये सामनी गायेति प्रेष्यति ॥ २७ ॥**

चात्वाले मार्जयन्ते सपत्नीकाः सुमित्रिया न इति, उद्वय-मित्युक्त्रामत्युत्तरपूर्वार्धमनपेक्षमेत्यैधोऽसीति समिधमादा-याहवनीयेऽभ्यादधाति समिदसीति पत्नी च गार्हपत्ये तूष्णीम् प्रवृञ्जनीयौ शतमानौ ब्रह्मणे ददाति ॥ २८ ॥

घर्मदुघामध्वर्यवे यजमान व्रतदुघाꣳ होत्रे पत्नया उद्गात्रेऽग्नीधेऽजाम् ॥ २९ ॥

ददातीति सर्वत्रानुवर्त्तते ॥ २९ ॥

घर्मभेदे यथोक्तम् ॥ ३० ॥

किं तदुक्तम् ? "पुनरिवि च घर्म्यम्" इति। एतच्चाभिधीयते विशेष-णार्थम् ? ॥ ३० ॥

तत्राह—

उखावच्चान्यं कुर्यात् ॥ ३१ ॥

उखावच्चेति मन्त्ररहिता क्रिया। अत्रापि हि श्रूयते—"आवृता करोत्यावृता पचति" ( श० ब्रा० १४।३।२।२१ ) इति। पुनः करणे प्राप्ते च अन्यत्पुनरावृद्ग्रहणं मन्त्रनिवृत्त्यर्थम्। अयं चोत्सादनाय क्रियते ॥ ३१ ॥

अभिन्नेन चरेत् ॥ ३२ ॥

तथा च श्रुतिः—"अथ य उपशययोर्दृढः स्यात्तेन प्रचरेत्" ( श० ब्रा० १४।३ २।२१ ) इति ॥ ३२ ॥

स्वाहा प्राणेभ्यः साधिपतिकेभ्य इति पूर्णाहुतिमाद्यामुत्तमां च मनसः काममाकूतिमिति ॥ ३३ ॥

'च'शब्दात्पूर्णाहुतिमेव। मध्ये सकृद् गृह्णीयादिति ॥ ३३ ॥

प्रजापतिः संभ्रियमाण इति च यथाकालम् ॥ ३४ ॥

होमः कर्त्तव्यः' यस्मिन्काले विनाशः ॥ ३४ ॥

सविता प्रथमेऽहन्निति च प्रत्यहम् ॥ ३५ ॥

विनाशे होमः कर्त्तव्यः ॥ ३५ ॥

## अवकाशयस्य प्रवृञ्जयात् ॥ ३६ ॥

"ज्ञातप्रियानूचानानवकाशयेत्" ( का० श्रौ० ९।७।१३ ) इति सूत्रितम् । तुल्यं हि ब्राह्मणमुभयत्र ॥ ३६ ॥

## न प्रथमयज्ञे ॥ ३७ ॥

अवकाश्यस्यापि प्रथमप्रयोगे न प्रवृञ्ज्यात् । तथा च श्रुतिः "तन्न प्रथमयज्ञे प्रवृञ्ज्यात्" ( श० ब्रा० १४.२।२।४४ ) इति ॥ ३७ ॥

## यावती द्यावापृथिवी इति दधिघर्मग्रहणं मयि त्यदिति भक्षणम् ॥ ३८ ॥

तद्धुतशेषस्य । "अथ प्रसुते दधिघर्मेण चरन्ति" ( श० ब्रा० १४।३।१।२९ ) इति । तत्रैतदुक्तम् ॥ ३८ ॥

## त्विषः संवृगिति महाव्रतीये ॥ ३९ ॥

"त्विषः संवृग्" इत्येव भक्षणम् ॥ ३९ ॥

## चात्वाले मार्जनम् ॥ ४० ॥

"कर्त्तव्यम्" इति सूत्रशेषः । तच्च पाणिनैव कर्त्तव्यम् । द्रव्यान्तरानुपदेशात् ॥४०॥

## शान्तिकरणमाद्यन्तयोः ॥ ४१ ॥

कर्त्तव्यम्' इति शेषः । स्मरन्ति हि—आदावन्ते च कर्मणः शान्तिकरणम्' । तत्प्रवर्ग्यापराङ्गभूते कथमिव भवति ॥ ४१ ॥

## स्वाध्यायदर्शनात् स्वाध्यायदर्शनात् ॥ ४२ ॥

अत्र भवति । दृष्टं हि शान्तिकरणम् । ऋचं वाचं प्रपद्ये" इत्येवमादि तस्मादत्र भवति । एतच्च द्वारापिधानोत्तरकालात्पूर्वम् । पूर्वमासन्द्यां करोतीत्यतः प्रागन्त्यात्समाप्ते हि प्रवर्ग्ये पुनः क्रियते । तत्र क्रियमाणमुत्तरार्थं भवति, स्वाध्यायदर्शनादिति ॥४२॥

इति षड्विंशेऽध्याये सप्तमी कण्डिका ॥

इति कर्कभाष्यसहिते कात्यायनश्रौतसूत्रे
षड्विंशतितमोऽध्यायः समाप्तः ।

कात्यायनश्रौतसूत्रं समाप्तम् ।



श्रीः

## षष्ठाध्यायत एकादशाध्यायान्तसूत्राणां

# सूची

| सूत्राणि | अ. | कं. | सू. | सूत्राणि | अ. | कं. | सू. | सूत्राणि | अ. | कं. | सू. |
|---|---|---|---|---|---|---|---|---|---|---|---|
| अ | | | | अग्ने | ७ | ४ | ३३ | अत्राज्य० | ६ | ६ | १९ |
| अंसल० | ७ | २ | २५ | ,, | ८ | ७ | ५ | अत्रैव | ८ | ६ | २६ |
| अक्तं | ६ | २ | ४ | अग्नेर्वं | ८ | ९ | १० | ,, | ६ | ७ | १८ |
| अक्त्वा | ८ | २ | ३१ | अग्ने | ८ | २ | ४ | अदानम् | १० | ९ | ७ |
| अक्ष्णया | ८ | ५ | ३ | अग्न्यन्वा० | ८ | १ | ४ | ,, | १० | ३ | २ |
| ,, | ८ | ५ | १२ | अग्रमु० | ६ | २ | १४ | अदभ्यस्त्वे | ६ | ३ | २७ |
| अग्नय: | ९ | ८ | १७ | अग्रात् | ६ | १ | २७ | अद्रिणा | ९ | ४ | १८ |
| अग्नये | १० | २ | २७ | अङ्गान्य० | ६ | ७ | ५ | अद्रोह: | ८ | १ | २१ |
| ,, | ८ | ७ | ३ | अङ्गुल्या | ७ | ७ | १८ | अद्रयादान० | १० | १ | ३ |
| अग्ना३इ | १० | ६ | १८ | अङ्गुष्ठ० | ७ | ७ | १२ | अद्वारेण | ८ | ४ | २४ |
| अग्नि | ८ | ३ | १९ | अङ्गुष्ठौ | ७ | ३ | ८ | अधिष० | ९ | ४ | १ |
| ,, | ६ | १० | १४ | अच्छावाक० | ९ | १२ | १४ | अध्यूध्नी | ६ | ९ | ५ |
| ,, | ६ | ३ | २२ | अच्छावाका० | ९ | १२ | ११ | अध्वनाम० | ९ | ८ | १५ |
| ,, | ७ | २ | ३ | अच्छिन्न० | ९ | १० | ११ | अध्वर्युः | ८ | ५ | १५ |
| ,, | ७ | ४ | १४ | अजकावम् | ९ | २ | ६ | ,, | ९ | ६ | २७ |
| अग्निष्ठे | ८ | ८ | १६ | अजाम् | ७ | ८ | १९ | ,, | ९ | ६ | २६ |
| अग्निहो० | ६ | १० | २८ | अञ्जना० | ८ | ८ | १३ | अध्वर्यु० | १० | २ | २६ |
| अग्नीत् | १० | ६ | २४ | अञ्जलि० | ७ | ७ | १५ | अध्वर्युम् | १० | ३ | ४ |
| ,, | १० | ६ | १७ | अत ऊर्ध्वं० | ७ | ४ | १६ | अध्वर्यु० | ८ | ५ | १४ |
| ,, | ९ | १ | १५ | अतस्त्व० | ६ | १ | २० | अध्वर्यु० | ७ | ७ | ५ |
| अग्नीषो० | ११ | १ | १२ | अतीत्य | ९ | ३ | १८ | ,, | ९ | ६ | ३० |
| ,, | ९ | १ | ४ | अतृणो | ९ | ६ | ३६ | अध्वर्यू | ९ | १३ | १३ |
| ,, | ८ | ९ | ६ | अत्र वा | ७ | ७ | २ | अध्वर्यो: | ९ | १३ | २ |
| ,, | ६ | १० | २९ | ,, ,, | १० | ६ | २३ | अनक्ष० | ६ | १ | १४ |
| ,, | ८ | ७ | २३ | ,, ,, | ७ | ४ | ४ | अनड्वा० | ७ | ९ | १० |
| ,, | ६ | ७ | १७ | अत्र सर्प० | १० | ४ | १२ | अनादिष्टा० | ९ | ५ | २३ |

**इति कात्यायनश्रौत्रसूत्राणां षष्ठाध्यायत एकादशाध्यायान्ता सूत्रसूची ।**

## कात्यायनश्रौतसूत्राणां द्वादशाध्यायतोऽकारादिक्रमेण

# अनुक्रमणिका

